दिल्लीविश्वविद्यालयसंस्कृतविभागस्या-
चार्येभ्योऽध्यक्षेभ्यो विद्वत्तल्लजेभ्यः
श्री सत्यव्रत महाभागेभ्यः सादरम्
समुपनयति

सुरेन्द्रः

# SANSKRITE PAÑCHADEVATĀSTOTRĀNI

**SURENDRA NARAYANA TRIPATHI**
M.A., VYAKĀRANĀCHARYĀ Ph-D.
Lecturer; Delhi University (Sans- Deptt)
and
Rajdhani College, Kirti Nagar, New Delhi.

SANMARGA PRAKASHAN, DELHI-7

# संस्कृते पञ्चदेवतास्तोत्राणि

सुरेन्द्र नारायण त्रिपाठी
एम० ए० (हिं० सं०) आचार्य, पी-एच० डी०
प्राध्यापक—दिल्ली विश्वविद्यालय (सं० वि०) एवं
राजधानी कॉलेज, कीर्तिनगर, नई दिल्ली

सन्मार्ग प्रकाशन, बेंगलो रोड, दिल्ली-७

प्रथम संस्करण, १९७४

मूल्य : पचास रुपये

प्रकाशक :
सन्मार्ग प्रकाशन, १६, यू० बी० बैंग्लो रोड, जवाहर नगर, दिल्ली ११०००७

मुद्रक : विकास आर्ट प्रिंटर्स, शाहदरा, दिल्ली-११००३२

आवरण : नारायण

## समर्पणपत्रम्

यया कयाऽपि रीत्या यैर् दैवीवाक् समुपासिता
ग्रन्थः समर्प्यते तेभ्यः, नतेन शिरसा मया,

# शब्दद्वयम्

दिल्ली - विश्वविद्यालय - संस्कृत - विभागाध्यक्षाणामाचार्याणां च श्री डॉ॰ सत्यव्रत-महाभागानाम् सम्मतिः--

मम प्रिससुहृद्मित्र डा॰ सुरेन्द्रनारायणत्रिपाठिभिविर्रचित-संस्कृतेपञ्च-देवतास्तोत्राणीति शीर्षकस्य ग्रन्थस्य परिचयं विद्वत्समाजस्य पुरतः प्रस्तुवतो मे मनसि महान् प्रहर्षः। ग्रन्थोयं सप्तषष्ट्युत्तरैकोनविंशतिशततमे खिस्तसंवत्सरे दिल्ली-विश्वविद्यालये शोधप्रबन्धरूपेण प्रस्तुतो विश्वविद्यालयेन च पी॰ एच्॰ डीत्युपाध्यर्थं स्वीकृतः। सम्प्रत्ययं प्रसिद्धिमेतीति विश्वविद्यालय एतदर्थं परं गौरवमनुभवति।

सप्तस्वध्यायेषु विभक्तोऽयं ग्रन्थः। एषु प्रथमोविषयावताररूपोऽन्तिम-श्चोपसंहृतिरूपः। शिष्टेषु पञ्चस्वध्यायेषु क्रमशः गणेश-शक्ति-शिव-विष्णु-सूर्येतिपंचदेवतानां समुपलब्धस्तोत्राणां विमर्शः प्रवर्तितः। प्रथमं तावद्दैवतनाम-निर्वचनं तदर्थानां च निरूपणम्, तदनु-तेषांमाहात्म्यस्य स्वरूपस्य च चर्चा, तत्पश्चाच्च मन्त्रगायत्र्यादीनामार्यदेवत्वस्य च निर्देशोऽन्ते च स्तोत्राणां विविधानामुल्लेख इति क्रमः कश्चिद् आश्रितो विषयनिरूपणायां ग्रन्थकृता।

संस्कृतवाङ्मयेसन्ति सहस्रशः स्तोत्राणि। तेषु कानिचन बृहत्स्तोत्र-रत्नाकरः बृहत्स्तोत्ररत्नकार - स्तोत्रार्णव - स्तुतिकुसुमाञ्जमलीत्यादिस्तोत्र-सङ्ग्रहग्रन्थेषु सङ्गृहीतानि। भूयांसि पुनः रामायणमहाभारतपुराणादिषु दृग्गोचरीभवन्ति न च पृथक् क्वचित्केनापि सङ्कलितानि, ततोऽप्यधिकानि मातृकाग्रन्थरूपेणैवाद्यापि स्थितानि। एवं सुविपुलं खलु स्तोत्रराशिः। भक्ति-प्रवणेन - चेतसा देवतास्तुतिपराणि भक्तैः समुच्चारितानि स्तोत्राणि हृदयं स्पृशन्ति तत्सुतरामाह्लादयन्ति चेति निःसन्दिग्धं वचः। वाग्विन्यास-दृष्ट्या काव्यसौष्ठवदृष्टया दार्शनिकविचारदृष्टया च नैकान्येतेषु विदुषां निपुणं विचार-मर्हन्ति। सोऽयं विचारो नाद्यावधिभूयसाप्रवृत्तोऽभूदिति यत्सत्यं चेखिद्यतेऽत्र नश्चेतः। श्रीत्रिपाठिमहाभागैस्तेषां कतिपयेष्वयं प्रवर्तित इति समेषामप्यस्माकं ते साधुवादार्हाः। सति काले तेऽन्यान्यपि बहूनि देवतान्तराण्यधिकृत्यविरचितानि-स्तोत्राणि विमर्शपदवीं नेष्यन्तीति प्रतियन् स्वकीयां वाचमुपसंहरति।

**सत्यव्रतशास्त्री**

२८-१०-१९७३ दिल्ली विश्वविद्यालयसंस्कृतविभागस्याऽऽ

दिल्ली **चार्योऽध्यक्षश्च**

# प्राक्कथनम्

संस्कृत-वाङ्मये स्तोत्र-साहित्यस्य महन्महत्वमस्तितद्धि न केवलं विशालम्परंच व्यापकमप्यस्ति । व्यापकं त्वस्मादुच्यते यतोऽत्र सन्निहितानां विषयाणां यावन्तः प्रकाराः समुपलभ्यन्ते तेषां वैशिष्ट्यं धार्मिकं सांस्कृतिकं वा केवलं नास्ति । अपितु स्तोत्रेष्वेतेषु भारतीयसमाजस्य भाव-परम्परायाः चिन्तन-परम्परायाश्चेतिहासोऽन्तर्निहितोऽस्ति । काश्च भौतिक-समृद्धयो मानवानं कृतेऽपेक्षिताः, कीदृशैस्तत्तद्ग्रहकृत-व्याधिभिर्जनाः पीड्यन्ते तेषामपि प्रतिबिम्बनमत्रास्ति । कांचिद्देवतामधिकृत्य स्तोत्राणि क्रियन्ते इति सिद्धमेवैतेषामधिदैविकं महत्वम् । किन्तु देवता-विशेषमधिकृत्यकृते स्तोत्रे अध्यात्म-विद्यापि संन्निगूढा भवतीति वार्ता नाधिरोहति कल्पना-पथं विशिष्टानामपि विपश्चिताम् । एवं हि प्रकृष्टं स्तोत्र-साहित्यस्य भावगतं वैशिष्ट्यम् । भावस्य प्रकाशनार्थं तत्र यादृशी भाषा शैली वात्रीयेते ते अप्यन्यत्र सुदुर्लभे । किं च स्तोत्र-साहित्यस्य काव्यगतं सौन्दर्यमपि नाल्पीयः ।

स्तोत्रं हि वाङ्मयस्यानन्य-साधारणः प्रकारः । स च स्तुत्यादिभ्यः सर्वथा स्वतन्त्रोमहनीयश्चास्ति । उपर्युक्तविवेचन-दृष्ट्या विभिन्न संस्कृत साहित्येतिहासलेखकैः काव्यशास्त्र-विद्भिराचार्यबलदेवोपाध्यायपाण्डुरंग वामनप्रभृतिभिरस्यावश्यकत्वम्प्रतिपादितम् स्तोत्र-साहित्यस्य सम्यगध्ययनं सर्वथापेक्षितमासीदिति विषयोऽयमनुसन्धानाय मयाधिकृतः । किन्तु समग्रं स्तोत्र-साहित्यमधिकृत्यैकस्मिन्नैवप्रबन्धेऽनुसन्धानात्मकं विवेचनं न कथमपि सम्भावितमस्तीति प्रबन्धस्यास्य विषयः 'पंच-देवता स्तोत्राणीति निर्धारितः । पंच-देवतासु च गणेश-शक्ति-शिव-विष्णु-सूर्याणामेव ग्रहणं परम्परा-प्रसिद्धं विहितं चास्ति ।

स्तोत्राणां समुपलब्धिस्तु सामान्येन तन्त्रेष्वागमेषु पुराणादिषु चैव भवति न पुनर्वेदेषु । स्वतन्त्ररूपेणाप्यनेकानिस्तोत्राणि कृतानि । स्तोत्राणामेव केषांचित्संकलनं कृत्वा केचन ग्रन्था अपि प्रकाशितास्ते च नागरी शारदाग्रन्थादिविविधासु लिपिषूपलभ्यन्ते । तेषां संख्यैकादशैवेति नियता । पूर्वोक्त पंचदेवता अधि-कृत्य यावन्ति स्तोत्रारायुक्त-ग्रन्थेषु तन्त्रागम-पुराण संकलनात्मकेषूपलभ्यन्ते समेषामेव तेषांत्वत्रग्रहणमध्ययनार्थे कृतम् । अन्यान्यपि यानि (६१) एकषष्ठि संख्याकानि स्तोत्राण्येषूक्त-ग्रन्थेष्वनुप-लभ्यमानानि केवलं तासु-तासु च प्राच्य-संस्थान-

पुस्तकागारतः प्रकाशितासु । पुस्तक-विवरणसूचिनीषु (Descriptive Catalogues) निर्दिष्टानि न त्वद्यावधि पृथक् प्रकाशितानि तान्यप्यादाय प्रबन्धेऽत्र विवेचनं कृतम् । एतेषु स्तोत्रेषु गणेशस्य सप्त (७) शक्त्याः त्रयस्त्रिंशत् (३३) शिवस्य सप्त (७) विष्णोर्नव (९) सूर्यस्य च पंच (५) सन्ति। अनवसरोऽयं तेषां सविस्तरविवेचनस्य ।

प्रबन्धेऽस्मिन् एक-पंचाशदधिक नवशत-संख्याकानां (९५१) पंचदेवता अधिकृत्योपलब्धानां स्तोत्राणामध्ययनार्थं विशिष्टैकासरणिरंगीकृता । यत्रैकैक-देवतामधिकृत्य तत्सम्बन्धिस्तोत्राणामध्ययनं सम्पादितम् । तत्र पूर्वं तावत् देवता-विशेषपदस्य विभिन्नानां व्युत्पत्तीनां तन्मूलकानां चार्थानां प्रदर्शन पुरस्सरं स्तोत्रेषु बहुशः प्रयुक्तानां देवतायास्तस्याः प्रमुख-नाम्नां व्युत्पत्तिः प्रवृत्ति मूलकाश्चार्थाः प्रदत्ताः । अनन्तरं श्रौते-स्मार्ते च कर्मणि तन्माहात्म्यं प्रदर्श्य तस्याः वैदिक-स्वरूप-निर्देश-पूर्वकं स्तोत्रेषु वर्णितस्य स्वरूपस्य निरूपणं सम्यक् कृतम् । पाठान्तरेण सहितानि मन्त्र-गायत्र्यादीन्यपि तत्रैवोल्लिखितानि । ततस्तद्देवता-सम्बद्ध-स्तोत्राणामध्ययनं सामान्य-विशिष्टभागेषु वर्गीकृत्य द्विधाकृतम् । वैशिष्ट्यं च तेषां तत्सम्प्रदायेषु महत्वं, स्तोत्रकर्तुगौरवं, धार्मिक-जनैष्वादर-भावं, स्तोत्राणां सहस्रनामाष्टककवचादिषु प्रकारेष्वेकैकस्य प्रतिनिधित्वं चाभिलक्ष्यै-वांगीकृतम् । विशिष्टानां स्तोत्राणां नामनिर्वचनम् स्रोतोमाहात्म्यं, फलं, सम्प्रदायः, प्रतिपाद्य-विषयो, वक्तृबोद्धव्यनिर्देशः, श्लोकसंख्या, काव्य-सौन्दर्यं, दार्शनिकतेत्यादीनि-तत्वानिविविच्याध्ययनं सम्पादितम् । यतः समेषामेवस्तोत्राणामेतत्प्रकारकं सविस्तरमध्ययनं सम्भावितं नासीदतस्ततोऽवशिष्टानां सामान्य-स्तोत्राणां विवरण-मात्रमुपलब्धिस्रोतः फलश्लोकसंख्यासम्प्रदायादिनिर्देशपूर्वकं प्रस्तुतम् । आद्वितीयात्-षष्ठाध्यायं यावदेष एव क्रमोऽनुसृतः । ततः पूर्वं प्रथमाध्याये प्रबन्धस्यावतरणि-कारूपेण देवता-स्तोत्रयोःपद-व्युत्पत्तिः निर्दुष्ट-लक्षणस्वरूपादीनां निरूपणंमुख्य-विषयेण सहोपकार्यो-पकारकभावेनैव कृतम् । अन्ते चोपसंहारात्मकेऽध्याये पूर्वाध्यायेषु विहिताध्ययनानां सर्वदेवताविषयक-स्तोत्राणां समष्टिरूपेण विवेचनं कृतम् तत्र स्तोत्रेषु सौन्दर्यबोधस्तेषूपलभ्यमानाः विविधाः दार्शनिक-पक्षाः विशिष्टानां स्तोत्रकाराणां परिचयश्चेति विषयाः समालोचिताः । अध्ययन-मेतत्सर्वथा समीक्षात्मकबुद्ध्यैव समुपस्थापितम् न केवलं परम्परापालनरीत्या । अन्ते परिशिष्टे[१] संख्यके सामान्यत्वेनाधीतानां तत्र तत्रोपलब्धानां स्तोत्राणामपि विशिष्टमध्ययनमत्रसमावेशितं, द्वितीये च २६१ संख्याकानां प्रकृत-प्रबन्धे परामृष्टानां सम्बद्धग्रन्थानां सूचीति 'सङ्ग्रन्थावलीति' नाम्नातृतीये पादटिप्पणीषु समागत ग्रन्थ पृष्टांकानि प्रदाय ग्रन्थोऽयम्परिपूरितः ।

संस्कृतमाश्रित्य प्रस्तुतस्य प्रबन्धस्य मुद्रणमपि समस्यैवास्ति । आधु-निकतमयन्त्रेणापि संस्कृतवाक्यानां यथावन्मुद्रणं न सर्वथा सम्भवति । यथा

वग्रहादीनां कृते तु तत्र व्यवस्थैव नास्तिसम्यक्। अतः पाठ-शुद्धौ पौनः पुन्येन संशोधनेनापि त्रुटिस्सम्भाव्यते । क्षन्तव्योऽयंजनस्तत्कृते । स्तोत्रेषु परस्परं साम्यात्तेषां तत्त्वानां प्रतिदैवतं विवेचनाद्यत्रक्वचित्पुनरुक्तेराभासो भवेच्चेत्सर्वथा स्वाभाविक एव सः। अन्यापि काचिन्न्यूनता भवितुमर्हति यस्याः ज्ञानं मे न स्यात्तदर्थं 'नास्त्येवतज्जगति सर्वमनोहरं यदि' त्युक्त्यैवसन्तोषमावहामि ।

प्रकृत-प्रबन्धस्य प्रस्तुतौ अस्ति चोत्कमपि वैशिष्ट्यम् तस्य, श्रेयोमन्निर्देशकानां **श्रीमतां डा० ब्रजमोहन चतुर्वेदमहीदयानामेवास्ति** यैर्नकेवलमाद्यन्तं सांगोपांग सम्यङ्निर्देशनमेवंकृतमपितु प्रेरणाप्रदानेन मत्स्वा-भाविकं शैथिल्यमपि निरस्तम् । प्रबन्धेऽस्मिन् तेषामन्वीक्षणात्मकज्ञानस्य सम्यगुपयोगोमया कृतः । तदर्थन्तेषामाभार प्रदर्शनमात्रेंण नास्म्यनृणी च आजीवनम् । प्रसङ्गेऽस्मिन्दिल्ली-विश्वविद्यालयीयानां ततोबहिर्भूतानां काश्यादि-निवासिनां समेषामेतेषां विदुषां कृते स्वकीयाभारप्रदर्शनं करोमि यैर्येनकेनापि प्रकारेण सहाय्यमकारि । अध्ययनाध्यापनप्रशासनादिकार्यव्यावृतैर्विभागाध्यक्षैः प्राचार्यैश्च श्री डा० सत्य-व्रतमहाभागैर्विद्वत्तल्लजैः स्वसम्मति- प्रदानेन योऽनुग्रहःकृतः तदुपकारजतंशिरसाविभर्मि,—अत्र तान्सर्वान्प्रति सर्वथा-हंकृतज्ञोऽस्मि येषां शुभ-कामनाः प्रबन्धस्यास्यपूरणे संलग्नास्सन्तीतिशम् ।

दीपावलिः
२०३०

—**सुरेन्द्रनारायण त्रिपाठी**

# विषयानुक्रमणिका

प्रथमोऽध्यायः

# अवतरणिका

## क. देवतात्वम्

### देवतामाहात्म्यम्

नातितिरोहितमेतद्विदुषां यद्भारतीय संस्कृत-संस्कृत्योरनेक-विषयेषु देव-वादः प्राधान्यमवगाहते। निरुक्तानुक्रमणी-वृहद्देवता-नीतिमंजर्यादिषु विषयोऽयं प्राकाश्यमधिगच्छति, किन्तु निरुक्तं विहायान्यत्रास्य चर्चा "ग्रामंगच्छन् तृणं-स्पृशतीति" न्यायायते।

"प्रयोजनमनुद्दिश्य मन्दोऽपि न प्रवर्तते" इति रीत्या प्रत्येककार्यं धारणा-बद्धं भवति। सा च धारणा यत्किंचिन्मूलमाश्रित्यैव भवति। साधारण जनानामपि वागर्थमनुधावति। आप्तानां तु कथैवका। तत्र च परमाप्त-पुरुषस्यनिश्श्वसित-वेद-मन्त्राणाममिधेयत्वं निर्विवादमेव। तज्ज्ञानं विना पाठश्च न सम्यग्लाभायेति। समर्थितोऽयमर्थोभगवता वेदेन "यस्तन्न वेद किमृचाकरिष्यति"[1] योऽर्थं न जानाति स शुकवच्छब्दोच्चारणमात्रेण किंकरिष्यति यास्कोऽपि-योवेदानधीत्यार्थं न जानति स मूढः केवलं भारवाही तथा चोक्तम् "स्थाणुरयंभार-हारः किला-भूदधीत्यं वेदान् न विजानाति योऽर्थानिति।"[2]

अर्थ-हीनाऽज्ञाता च वाक् निष्फलापुष्प-हीना च भवति तथा च ऋग्वेदे—

"वाचं शुश्राव अफलां अपुष्पाम्"[3]

एवं चार्थ-ज्ञानम् विनाध्ययनाध्यापने न साध्ये फलमेव चासाध्यं नास्ति सर्व एव व्यवहारोऽसम्भव इति। वेदानामर्थज्ञानाय च प्रतिमन्त्रं देवताज्ञानमनिवार्यमन्यथा मन्त्राणामर्था अज्ञेया एव। दैवतज्ञ एव मन्त्राणामर्थमधिगच्छति। एवं च प्रयत्न-पूर्वकं काठिन्यमनुभवतापि कर्म-फल-प्राप्तये मन्त्राथार्वगतये च प्रतिमन्त्रम् देवता वेद्या। यतः पूर्णतः देवता-ज्ञानमन्तरा लौकिकानां वैदिकानां कर्मणां फलं प्राप्तुं न शक्यते। तथा च वृहद्देवतायाम्—

---

१. ऋग्वेदे १।१६४।३९ वैदिकमाला प्रकाशन भागलपुर १९८८।

२. निरुक्ते १।१८। दुर्गादासीय व्याख्या सहित, वेंकटेश्वर प्रेस, मुम्बई।

३. ऋग्वेदे वैदिकमाला प्रकाशन भागलपुर सं० १९८८। १०।७१।५।

प्रथमोऽध्यायः

# अवतरणिका

## क. देवतात्त्वम्

### देवतामाहात्म्यम्

नातितिरोहितमेतद्‌विदुषां यद्‌भारतीय संस्कृत-संस्कृत्योरनेक-विषयेषु देव-वादः प्राधान्यमवगाहते । निरुक्तानुक्रमणी-वृहद्‌देवता-नीतिमंजर्यादिषु विषयोऽयं प्राकाश्यमधिगच्छति, किन्तु निरुक्तं विहायान्यत्रास्य चर्चा "ग्रामंगच्छन् तृणं-स्पृशतीति" न्यायायते ।

"प्रयोजनमनुद्दिश्य मन्दोऽपि न प्रवर्तते" इति रीत्या प्रत्येककार्यं धारणा-बद्धं भवति । सा च धारणा यत्किंचिन्मूलमाश्रित्यैव भवति । साधारण जनानामपि वागर्थमनुधावति । आप्तानां तु कथैवका । तत्र च परमाप्त-पुरुषस्यनिश्श्वसित-वेद-मन्त्राणाममिधेयत्वं निर्विवादमेव । तज्ज्ञानं विना पाठश्च न सम्यग्लाभायेति । समर्थितोऽयमर्थोभगवता वेदेन "यस्तन्न वेद किमृचाकरिष्यति"[1] योऽर्थं न जानाति स शुकवच्छब्दोच्चारणमात्रेण किंकरिष्यति यास्कोऽपि-योवेदानधीत्यार्थं न जानति स मूढः केवलं भारवाही तथा चोक्तम् "स्थाणुरयंभार-हारः किला-भूदधीत्यं वेदान् न विजानाति योऽर्थानिति ।"[2]

अर्थ-हीनाऽज्ञाता च वाक् निष्फलापुष्प-हीना च भवति तथा च ऋग्वेदे—

"वाचं शुश्राव अफलां अपुष्पाम्"[3]

एवं चार्थ-ज्ञानम् विनाध्ययनाध्यापने न साध्ये फलमेव चासाध्यं नास्ति सर्व एव व्यवहारोऽसम्भव इति । वेदानामर्थज्ञानाय च प्रतिमन्त्रं देवताज्ञानमनिवार्यमन्यथा मन्त्राणामर्था अज्ञेया एव । दैवतज्ञ एव मन्त्राणामर्थमधिगच्छति । एवं च प्रयत्न-पूर्वकं काठिन्यमनुभवतापि कर्म-फल-प्राप्तये मन्त्राथार्वगतये च प्रतिमन्त्रम् देवता वेद्या । यतः पूर्णतः देवता-ज्ञानमन्तरा लौकिकानां वैदिकानां कर्मणां फलं प्राप्तुं न शक्यते । तथा च वृहद्‌देवतायाम्—

१. ऋग्वेदे १।१६४।३९ वैदिकमाला प्रकाशन भागलपुर १९८८ ।
२. निरुक्ते १।१८ । दुर्गादासीय व्याख्या सहित, वेंकटेश्वर प्रेस, मुम्बई ।
३. ऋग्वेदे वैदिकमाला प्रकाशन भागलपुर सं० १९८८ । १०।७१।५ ।

"वैदितव्यं दैवतं हि मन्त्रे मन्त्रे प्रयत्नतः ।
दैवतज्ञो हि मन्त्राणां, तदर्थमधिगच्छति ॥१॥"[१]

वाजसनेयसंहितायामपि—

"तस्माच्चदेवता वेद्या, मन्त्रे मन्त्रे प्रयत्नतः ।
मन्त्राणां देवता-ज्ञानात्, तदर्थमधिगच्छति ॥१॥"[२]

अन्यत्रापि वृहद्देवतायाम्—

"नहि कश्चिदविज्ञाय याथातथ्येन दैवतम् ।
लौकिकानां वैदिकानां वा कर्मणां फलमश्नुते ॥१॥"[३]

वाजसनेय-संहितायामपि—

"नहि कश्चिदविज्ञाय याथातथ्येन दैवतम् ।
श्रौतानां कर्मणां विप्र, स्मार्तानां चाश्नुते फलम् ॥१॥"[४]

देवताः अविज्ञाय चेत्कोऽपि यज्ञेषु जुहोति ददाति वा देवताः तद्दानं हविर्वा न गृह्णन्ति । मन्त्रदैवतज्ञस्स्वाध्यायेऽप्यधीयानोदेवैर्न पीड्यते तथा च—

"सर्वाणिब्राह्मणानि च देवतामविज्ञाय योजुहोति देवास्तस्य हविर्नजुषन्ते ।"[५]

वृहद्देवतायामर्थोऽयं समर्थितस्तथा च—

"जुषन्ति देवतास्तस्य हविर्नादिवताविदः ।
अविज्ञान-प्रदिष्टं हि, हविर्नेहेत दैवतम् ॥१॥
तस्मान्मनसि सन्यस्य देवतां जुहुयाद्धविः ।
स्वाध्यायमपियोऽधीते मन्त्रदैवतविच्छुचि ॥२॥"[६]

वाजसनेय-संहितायां च—

"स्वाध्यायमपियोऽधीते, मन्त्रदैवतविच्छुचिः ।
ससन्त्रसदिव स्वर्गे सन्त्रसद्भिरपीड्यते ॥१॥"[७]

अनेन न केवलं फल-प्राप्तये यज्ञादिष्वेव श्रौते लोके दैवकर्मणि, अपितु स्वाध्यायेऽपि देवता-ज्ञानमत्यावश्यकत्वं भजते । देवतास्तस्यैव हविर्गृह्णन्ति यो मन्त्राणां देवताः, ऋषिं, छन्दश्चवेत्ति । जपे होमे सर्वत्रायम्विधिर्यद् ऋषश्च्छन्दसो देवतायाश्च ज्ञानोच्चारणे नान्तरीयकतया कार्यअन्यथा प्रयोगं कुर्वन् फलाद्धीयते ।

---

१. वृहद्देवतायाम् १।२
२. वाजसनेय संहितायाम् ४।१०
३. वृहद्देवतायाम् १।२
४. वाजसनेयसंहितायाम् ४।१०
५. कात्यायन वाजसनेय संहितयोः ४।१०
६. वृहद्देवतायाम्, १३१-३२
७. वाजसनेयसंहितायाम् ४।१०

तथा च पुरुषार्थमिच्छन्नादौ, ऋषिं मध्ये छन्दोऽन्ते देवताश्च पठति। तथा च सर्वानुक्रमणिकाभूमिकायाम्—

"मन्त्राणामार्षेय-छन्दो विदिति"[1]

बृहद्देवतायाम् च—

"अविदित्वा ऋषिं छन्दो दैवतं योगमेव च।
योऽध्यापयेत् जपेद्वापि पापीयान् जायतेतुसः ॥१॥
अर्थेप्सवः खल्वृषयः, छन्दोभिर्देवताः पुरा।
अभ्यधावन्निितिछन्दो, मध्येत्वाहुर्महर्षयः ॥२॥
ऋषिं तु प्रथमंब्रूयात् छन्दस्तु तदनन्तरम्।
देवतामथ मन्त्राणां, कर्मस्वेवमितिश्रुतिः ॥३॥
आधारं व्याप्यनाधारं विविच्यात्मानमात्मनि।
ईक्षमाणौ ह्युभौ सन्धिं, ऋचो दैवतवित् पठेत् ॥४॥[2]

यथा साहित्य-शास्त्रे लोक-व्यवहार मनुसृत्यनियमोऽयं नियतः, यत्कस्याश्चिदुक्तेः सम्यगर्थाविगमाय संयोग-वियोग-साहचर्य-प्रकरणादीनां[3] ज्ञानमपरिहार्यमेवमेव वैदिकमन्त्राणां निखिल-ज्ञानराशीनां निखिल-रहस्य-गर्भितानां ज्ञानाय दैवत-ज्ञान-मिति। उदाहरणार्थम्—

"त्वं सोमासि सत्पतिः त्वं राजोत वृत्रहा, त्वं भद्रोऽसि क्रतुः"[4]

देव-ज्ञान-रहितेनास्यार्थः भो सोमदेव त्वं सज्जनानां पतिः राजा। त्वं वृत्रनाशकोयज्ञरूपश्चेति विवक्षितः। किन्तु देवता-विज्जानाति यद्गौतमर्षेरेतावानेवार्थोनिष्टोऽपितु तत्त्वात्मक-सोम-देवताया कार्याणामुल्लेखोऽपि विवक्षितः। सच्छब्दोऽत्र मूर्ति-वाचको विश्वस्मिन् यच्च यावच्च सौरभाग्नेयं चान्द्रंवाप्रकाशात्मकं तत्त्वं तत्सर्वं सोमेसन्निहितं सत्पतिर्घनताया उत्पादको विश्वस्मिन्यत्प्रकाशात्मकं तस्य कारणं सोम एव। वृत्रो ज्ञानावरणंतमःशक्तीनां बोधकः प्रकाशज्ञानरूपस्सोमस्तासां शक्तीनाम् नाशको विश्वस्य कोमल-पदार्थरूपेण परिणतत्वात् सोमोभद्रः शिवद इत्यर्थः।

एवंच सिद्धमेतत् यद् वेद-ज्ञानस्य मूलं देवता-ज्ञाने सन्निहितमिति।

## (२) देवता शब्दार्थः (विचारः)

सामान्यतो लोके शब्दानां प्रयोगेऽर्थे च द्विधा प्रवृत्तिर्दृश्यते। व्युत्पत्तिमूलिका, प्रवृत्तिमूलिका चेति अतएवाभियुक्तैः शब्दार्थज्ञानेव्याकरणं विशिष्याप्यन्ये

---

१. सर्वानुक्रमणिका-भूमिकायाम्, १
२. बृहद्देवतायाम् ८।१३६-१३९
३. साहित्यदर्पण २।१४ विवृत्याम्
४. ऋग्वेदे १।१।९१।५

हेतव उपन्यस्तास्तथा च भाषा-परिच्छेदे—

"शक्तिग्रहं व्याकरणोपमान-कोशाप्तवाक्याद् व्यवहारतश्च ।
वाक्यस्य शेषाद्विवृतेर्वदन्ति, सान्निध्यतः सिद्धपदस्य वृद्धाः ॥"[१]

महा-भाष्यकारेण भगवता पतंजलिनाऽप्यर्थोऽयं कथितः

"लोकतोऽर्थं प्रयुक्ते शास्त्रेण धर्मनियमः क्रियते ।"[२]

अपभ्रंशशब्दा अपि चेत् क्वचिदर्थे ख्यातिं गतास्तत्र साधु-शब्दोऽवाचकता याति । तथा च भर्तृहरिः—

"पारम्पर्यादपभ्रंशाः विगुणेष्वभिधातृषु ।
प्रसिद्धिमागताः शब्दाः तेषुसाधुरवाचकः ॥१॥"[३]

एवं चात्र देवता-शब्दार्थ विचारे व्याकरण-व्यवहाराप्तादीनां प्रमाणान्युपन्यस्यन्ते । तत्र च वैदिक-वाङ्मये विशेषतः संहितासुदेव-शब्दस्यैव प्रयोगः । देवता-शब्दे सन्निविष्टत्वेन च देवशब्दाभिधेयः प्रथमं विचार्यते ।

१. देव-शब्दः दिवुधातो "नंन्दिग्रहि पचादिभ्यःल्युणिन्यचः"[४] पाणिनीय-सूत्रेण कर्तऽचिप्रत्यये निष्पाद्यते । "चित"[५] इत्यन्तोदात्त एकः । दिव् धातुश्च क्रीडाविजिगीषा-व्यवहार-द्युति-स्तुति-मोद-मद-स्वप्न-कान्ति-गतिषु दशस्वर्थेषु पठितः ।[६] एवं चास्य दीव्यति प्रकाशते, क्रीडति, विजिगीषते, व्यवहरति, द्योतते, स्तूयते, मोदयति, मदयति, स्वापयति प्रलये सर्वान्, गच्छति गमयति वा (अन्यान्) स देवः ।[७]

२. "दिवि अस्टज्यन्त अतः देवाः दिवि स्थितत्वात् ।

"तद्देवानां देवत्वं यद्दिवमभिपद्यासृज्यन्त"[८] अत्र दिव संज्ञाशब्दात् देवः । सामवेद-संहितायामर्थोऽयमभिहितः" दिवासृष्टत्वात् तथा च—

३. "प्रजापतिस्तपोऽतप्यत् तस्याहवैतप्यमानस्य मनः प्रजापतिर्देवान् सृजेयमिति इमेदेवा असृज्यन्त दिवा देवा असृजन्त दिवादेवान् असृजत्, तद्देवानां देवत्वम् ।[९]

४. दा धातोर्वैदिकपरम्परया दानार्थकः देवस्सर्वोऽप्ययमर्थः निरुक्ते

---

१. विश्वनाथ कृत भाषा परिच्छेद मुक्तावलयां शब्द खण्डे ३५२
२. महाभाष्ये १।३
३. वाक्यपदीय ब्रह्म काण्डे १।१५४
४. अष्टाध्याय्याम् ३।१।१३४
५. तत्रैव ६।१।१६३
६. सिद्धान्त कौमुदी, पा० सूत्रे ३।१।६९
७. सत्यार्थ प्रकाशे, प्र० संस्करणे, पृ० ११
८. तै० उपनि० २६।६।५।७
९. सामवेद संहितायाम ४।१

निरुक्तः।[1]

"देवोदानात् दीपनात् द्युस्थाने भवतीतिवा।"[2]

५. मनसिकिंचिद्-वस्तुकामोऽर्थेच्छुर्वा, ऋषिश्च्छन्दसा यम् मन्त्रप्रतिपाद्यं स्तौति स देवः, मन्त्रेणयोऽभिधीयते स देवः। तथा च निरुक्ते—

"यत्काम ऋषिर्यस्यां, देवतायां, आर्थपत्यमिच्छन् स्तुतिं प्रयुक्ते तद्देवतः स मन्त्रो भवति।"[3] अन्यत्रापि--

"यस्य वाक्यं स ऋषिर्या तेनोच्यते सा देवता।"[4] अन्यच्च

"अर्थमिच्छन देवमाहायमस्त्विवति।
प्राधान्येन स्तुवेन्भत्त्यया, मन्त्रस्तद्देव एव सः॥१॥"[5]

६. शतपथे च—"यस्य हविर्दीयते सा देवता यस्यै न दीयते सा न देवता ऋचा यत्प्रतिपाद्यं यद् यजुषा, ईज्यम् यत्साम्ना गेयम् तत् दैवत्यम्।[6]

यस्मिन्प्रकरणे देवस्य नाम प्रत्यक्षतो न विद्यते तत्र प्रकरणतोऽर्थतश्च निर्णीयते। क्वचिच्च तद् विशिष्टपरकं निश्चीयते, देवतैवमेघपतिर्भवति। तथा च निरुक्ते—

यद्दैवतः स यज्ञो वा यज्ञांगवा तद्देवताः भवन्ति"[7]

"प्रकरणादि-सन्दिग्ध-दैवतेषु देवता-नियमः" दुर्गादासः।

७. यस्मिन्कर्मणि यज्ञे वा यस्य हविभाक्त्वं तद्दैवतम्।[8] एवं च मन्त्रस्य-वाच्यार्थ एव दैवतम्। जगतियत्किंचित्कार्यजातमुत्पत्त्यादिकं निष्पाद्यते तद् दैवत-मेव। शवर-स्वामिनापि कथितम्।

"यस्य हविः शब्दो हविषा तादर्थ्येन सम्बध्यते सा देवता।"[9]

८. क्वचिदयमपि विचारो दृश्यते यच्छब्दमात्राःनते देवाशरीरधारिणः।[10]

९. "अहं भुवः वसुनः" इति मन्त्रव्याख्यावसरे, उत्तमवर्गस्य ऋषिरेव देवता। एवं च यत्र मन्त्रेऽहमिति सर्वनाम्ना निर्देशस्तत्रर्षिरेवदेवता।[11]

---

१. अथर्ववेद संहितायाम् १९।६।११ मन्त्रे सायणः
२. निरुक्ते ७।१५
३. निरुक्त दैवत काण्डे ४
४. कात्यायन सर्वानुक्रमणाम् २।४
५. वृहद्देवतायाम् १।६
६. शतपथब्राह्मणे ९।४।१५
७. निरुक्ते दैवतकाण्डे ७।४
८. एतरेये २।६। कौ० १०।४
९. कौ० १०।४।२३। मीमांसा सूत्रे १०।४।२३ भाष्ये
१०, म० दीपिकाया ९।१।५
११. ऋग्वेदे ४।१०

१०. वाचस्पत्येबृहत्संस्कृताभिधाने पंचमे भागे दिव+अच् 'अमरे सुरे पूज्ये परमात्मनि" "एको देव: सर्वभूतेषु गूढ:" भर्गोदिवस्यान्नसन्दर्भा उद्धृता ।[1]

११. संस्कृत-शब्दार्थ-कौस्तुभेऽपि "दीव्यति आनन्देन क्रीडतीतिदेव: दिव+अच् देवता ।[2] मनुस्मृतौ च—

'देवानृषीन् मनुष्यांश्च पितृन् गुप्तांश्च देवता: ।
पूजयित्वा तत: पश्चात् गृहस्थ: शेषभुक् भवेत् ॥१॥[3]

१२. या शक्ति: पुद्गलपिण्डभ्योभिन्ना अपि तेषामुपादानकारणाम् । पुद्गलपिण्डतद्गत-कार्याणां नियन्त्री च या च जडभूतानाम् तत्तत्परिणामानां च रक्षिका जनयित्री च सा देवतेत्यर्थस्तन्त्रा-लोकेऽभिनवाचार्येण कृत: ।[4]

१३. यत्किंचिज्जायते तत्सर्वमाभिर्देवताभिरस्यैव देवस्य शक्तिप्रचयो विश्वमिति ऐतरेयब्राह्मणपाशुपतसूत्रयो: ।

"यज्जायते तदाभिर्देवताभि:" "शक्तिप्रचयोऽस्य विश्वम् अस्य देवस्य शक्तिपुंजमेव निखिलं जगदिति यावत् । एवंच मन्त्रसंहिता-ब्राह्मण-ग्रन्थतन्त्र-पुराणादिषु पंचस्वर्थेषु शब्दस्यास्यप्रयोग: ।[5]

(क) समेषां द्रव्याणामुपादानं निरवयम् ज्योति: स्वरूपम् धर्मातिमकमतीन्द्रियं तत्वविशेष: देवतात्वम् ।

(ख) अशब्दोऽस्पर्शोऽरूपोऽरसोऽगन्धो घामच्छदप्राणादेवता-शब्दस्य द्वितीयोऽर्थ: ।

(ग) स्थानाभिमानीनां भूतात्मकानामधिष्ठातृणां च नियन्त्री देवता । इमा: देवता अचेतना: सर्वव्यापिका: नियताकारा: विश्वशरीरिण्य: ।

(घ) विग्रहाचेतन: सौम्य-प्राणि-विशेष: प्रजापत्याद्यष्टाविशतिवीर्य-सम्पन्ना सत्वप्रधाना सर्गविशिष्टा देवता ।

(ङ) यदुद्दिश्य किंचित्कर्मक्रियते तस्य कर्मण: सादेवता जडचेतनोभया । मीमांसायाम् मन्त्रवार्णिकी देवता शब्दरूपा वा संहितासु प्राकृत-पदार्थानामप्य-धिष्ठातादेवो ब्राह्मणग्रन्थेषु प्राणविधाभिमानिबिधेषु तन्त्रेषु, अष्टविकल्प-भिन्नेष्वभिधेयेषु देवता-शब्द-प्रयोग: ।[6]

१४. शंकराचार्येणापि—

"यत: क्रीडति सर्गादिभिर्विजिगीषतेशत्रून् ।

---

१. शब्द वाचस्पत्यमे पृ० ३६७५, तारानाथ तर्क वाचस्पति: वाराणसी, १९६२
२. संस्कृत शब्दार्थ, कौस्तुभे, पृ० ३६०
३. मनुस्मृति: ३।११७
४. शिवपुराणांके, गीता प्रेस गोरखपुर, पृ० ५६४
५. तत्रैव
६. शिवपुराणविशेषांके गीताप्रेस गोरखपुर, पृ० ५६४

व्यवहरति सर्वभूतेषु आत्मतया द्योत्यते स्तूयते स्तुत्यैः "सर्वत्र गच्छतीति-देवः।"[1] अत्रार्थेदिवेः कर्मणि घञिदेवः।[2] "अमराः निर्जरादेवास्त्रिदशाः" इत्यमरकारः।[3]

एवंच सर्वभूतात्मकः सृष्टि-स्थिति-प्रलयकारी दानादि गुणयुक्तः मन्त्र-वर्णस्वरूपोऽखिल ब्रह्माण्डाधिष्ठाता मन्त्र-प्रतिपाद्योऽघघटित-घटना-पटीयान् देवः।

## देवदेवतयोरैक्यम्

देवएवदेवता स्वार्थे तलि तलन्तत्वात्स्त्रीत्वं क्वचित्स्वार्थिका अपि प्रत्ययाः प्रकृतितो लिंग-वचनान्यतिवर्तन्ते।[4]

देवतात्वम् च—वेदमेयत्यागोद्देश्यत्वम्। उद्देश्यत्वं च तस्येदमित्यारोप-ज्ञान-विषयत्वम्। मन्त्रेण द्योतृत्वम्वादेवतात्वम्। तथा च वाचस्पत्ये—

"यस्य यस्यहि मन्त्रस्योद्दिष्टा देवता तु या तदाकारं भवेत्तस्य देवत्वं देवतोच्यते योगियाज्ञः।[5] एवंच देवदेवतयोरैक्येऽपि वैदिक संहितासु देवशब्दा-पक्षया देवताशब्दप्रयोगस्य क्वाचित्कत्वात् पंचदेवता-स्तोत्रेषु वैदिक-स्तोत्राणां विचारो नापेक्ष्यते।

## ३. देवतानां लक्षणानि

वस्तुतस्त्वर्थनिरूपणावसरे व्युत्पत्यादिष्वस्य सामान्यतोविचारस्तु जात एव। विशेषेणेदं प्रस्तूयते दिविभूतत्वाद्देवा इतिव्युत्पत्या प्रतीयते यदेषां जन्म-स्थानम् द्यौरिति एतेचदेवाः। दिवाभूतास्तथा च तैत्तरीये—

"दिवि देवानसृजत् नक्तमसुरान् यद् दिवा,
देवानसृजत् तद्देवानां देवत्वम्॥[6]"
"दिवानो भूतत्वात्तद्देवानां देवत्वम्।"[7]

द्योतन-शीलं देवानाम्वपुः स्वर्गे वसति, पूर्वं मनुष्या इव देवा अप्यासन्। चतुर्विंशतिरात्रमयजन्ततोऽपहतपाप्मानोमृत्युं विजित्यदेवत्वभवापुः। मनुष्यापेक्ष-येमेप्राचीना एषां दिक्प्राची तथा च शतपथ-तैत्तरीयादिषु।

---

१. विष्णुसहस्रनाम्नि शांकरभाष्ये-सहिते, गीताप्रेस गोरखपुर, श्लोक ५४
२. तत्रैव श्री ब्रह्मानन्दः सरस्वती विवृत्याम्।
३. अमरकोशे १।१।७
४. शब्दवाचस्पत्ये पंचम भागे, पृ० ३६८२
५. तत्रैव
६. तैत्तरीये ३।४।१
७. तत्रैव २।२।६।६

१०. वाचस्पत्येबृहत्संस्कृताभिधाने पंचमे भागे दिव+अच् 'अमरे सुरे पूज्ये परमात्मनि" "एको देवः सर्वभूतेषु गूढः" भर्गोदिवस्यान्नसन्दर्भा उद्धृता ।[1]

११. संस्कृत-शब्दार्थ-कौस्तुभेऽपि "दीव्यति आनन्देन क्रीडतीतिदेवः दिव+अच् देवता ।[2] मनुस्मृतौ च—

'देवानृषीन् मनुष्यांश्च पितृन् गुप्तांश्च देवताः ।
पूजयित्वा ततः पश्चात् गृहस्थः शेषभुक् भवेत् ।।१।।[3]

१२. या शक्तिः पुद्गलपिण्डभ्योभिन्ना अपि तेषामुपादानकारणाम् । पुद्गलपिण्डतद्गत-कार्याणां नियन्त्री च या च जडभूतानाम् तत्तत्परिणामानां च रक्षिका जनयित्री च सा देवतेत्यर्थस्तन्त्रा-लोकेऽभिनवाचार्येण कृतः ।[4]

१३. यत्किंचिज्जायते तत्सर्वमाभिर्देवताभिरस्यैव देवस्य शक्तिप्रचयो विश्वमिति ऐतरेयब्राह्मणपाशुपतसूत्रयोः ।

"यज्जायते तदाभिर्देवताभिः" "शक्तिप्रचयोऽस्य विश्वम् अस्य देवस्य शक्तिपुंजमेव निखिलं जगदिति यावत् । एवंच मन्त्रसंहिता-ब्राह्मण-ग्रन्थतन्त्र-पुराणादिषु पंचस्वर्थेषु शब्दस्यास्यप्रयोगः ।[5]

(क) समेषां द्रव्याणामुपादानं निरवयम् ज्योतिः स्वरूपम् धर्मातिमकमतीन्द्रियं तत्वविशेषः देवतात्वम् ।

(ख) अशब्दोऽस्पर्शोऽरूपोऽरसोऽगन्धो घामच्छदप्राणादेवता-शब्दस्य द्वितीयोऽर्थः ।

(ग) स्थानाभिमानीनां भूतात्मकानामधिष्ठातृणां च नियन्त्री देवता । इमाः देवता अचेतनाः सर्वव्यापिकाः नियताकाराः विश्वशरीरिण्यः ।

(घ) विग्रहाचेतनः सौम्य-प्राणि-विशेषः प्रजापत्याद्यष्टाविशतिवीर्य-सम्पन्ना सत्वप्रधाना सर्गविशिष्टा देवता ।

(ङ) यदुद्दिश्य किंचित्कर्मक्रियते तस्य कर्मणः सादेवता जडचेतनोभया । मीमांसायाम् मन्त्रवार्णिकी देवता शब्दरूपा वा संहितासु प्राकृत-पदार्थानामप्य-धिष्ठातादेवो ब्राह्मणग्रन्थेषु प्राणविधाभिमानिबिघेषु तन्त्रेषु, अष्टविकल्प-भिन्नेष्वभिधेयेषु देवता-शब्द-प्रयोगः ।[6]

१४. शंकराचार्येणापि—

"यतः क्रीडति सर्गादिभिर्विजिगीषतेशत्रून् ।

---

१. शब्द वाचसपत्यमे पृ० ३६७५, तारानाथ तर्क वाचस्पतिः वाराणसी, १९६२

२. संस्कृत शब्दार्थ, कौस्तुभे, पृ० ३६०

३. मनुस्मृतिः ३।११७

४. शिवपुराणांके, गीता प्रेस गोरखपुर, पृ० ५६४

५. तत्रैव

६. शिवपुराणविशेषांके गीताप्रेस गोरखपुर, पृ० ५६४

व्यवहरति सर्वभूतेषु आत्मतया द्योत्यते स्तूयते स्तुत्यैः "सर्वत्र गच्छतीति-देवः।"[1] अत्रार्थेदिवेः कर्मणि घञिदेवः।[2] "अमराः निर्जरादेवास्त्रिदशाः" इत्यमरकारः।[3]

एवंच सर्वभूतात्मकः सृष्टि-स्थिति-प्रलयकारी दानादि गुणयुक्तः मन्त्र-वर्णस्वरूपोऽखिल ब्रह्माण्डाधिष्ठाता मन्त्र-प्रतिपाद्योऽघघटित-घटना-पटीयान् देवः।

## देवदेवतयोरैक्यम्

देवएवदेवता स्वार्थे तलि तलन्तत्वात्स्त्रीत्वं क्वचित्स्वार्थिका अपि प्रत्ययाः प्रकृतितो लिंग-वचनान्यतिवर्तन्ते।[4]

देवतात्वम् च—वेदमेयत्यागोद्देश्यत्वम्। उद्देश्यत्वं च तस्येदमित्यारोप-ज्ञान-विषयत्वम्। मन्त्रेण द्योतृत्वम्वादेवतात्वम्। तथा च वाचस्पत्ये—

"यस्य यस्यहि मन्त्रस्योद्दिष्टा देवता तु या तदाकारं भवेत्तस्य देवत्वं देवतोच्यते योगियाज्ञः।[5] एवंच देवदेवतयोरैक्येऽपि वैदिक संहितासु देवशब्दा-पक्षया देवताशब्दप्रयोगस्य क्वाचित्कत्वात् पंचदेवता-स्तोत्रेषु वैदिक-स्तोत्राणां विचारो नापेक्ष्यते।

## ३. देवतानां लक्षणानि

वस्तुतस्त्वर्थनिरूपणावसरे व्युत्पत्यादिष्वस्य सामान्यतोविचारस्तु जात एव। विशेषेणेदं प्रस्तूयते दिविभूतत्वाद्देवा इतिव्युत्पत्या प्रतीयते यदेषां जन्म-स्थानम् द्यौरिति एतेचदेवाः। दिवाभूतास्तथा च तैत्तरीये—

"दिवि देवानसृजत् नक्तमसुरान् यद् दिवा,
देवानसृजत् तद्देवानां देवत्वम्॥[6]"
"दिवानो भूतत्वात्तद्देवानां देवत्वम्।"[7]

द्योतन-शीलं देवानाम्वपुः स्वर्गे वसति, पूर्वं मनुष्या इव देवा अप्यासन्। चतुर्त्रिशंतिरात्रमयजन्नततोऽपहतपाप्मानोमृत्युं विजित्यदेवत्वभवापुः। मनुष्यापेक्ष-येमेप्राचीना एषां दिक्प्राची तथा च शतपथ-तैत्तरीयादिषु।

---

१. विष्णुसहस्रनाम्नि शांकरभाष्ये-सहिते, गीताप्रेस गोरखपुर, श्लोक ५४
२. तत्रैव श्री ब्रह्मानन्दः सरस्वती विवृत्याम्।
३. अमरकोशे १।१।७
४. शब्दवाचस्पत्ये पंचम भागे, पृ० ३६८२
५. तत्रैव
६. तैत्तरीये ३।४।१
७. तत्रैव २।२।६।६

"देवत्राः (द्योतनशीला सायण) अभवत्,
तदनुदेवानसृजत् तद्देवानां देवत्वम् ।"[1]
"तद्देवानां देवत्वं यदस्मै संसृजनाय दिवा वासः"[2]
"यथा वै मनुष्या एवं देवा अग्रे आसन्...त एतं चतुर्विंशतिरात्रमपश्यन्त माहरन्तेनायजन्त ततो वैतेऽप-हतपाप्मानो मृत्युमपहत्य दैवीं सद्भागच्छन् ।"[3]
"प्राचीन-प्रजननाः वै दैवाः प्रतीचीनप्रजननाः मनुष्याः"[4]
"प्राची ही देवानां दिक्"[5]

परोक्ष-प्रिया एते यद्वा यद् देवानां प्रत्यक्षं तन्मानवानाम् परोक्षम् । यन्मानवानां प्रत्यक्षं तद्देवानां परोक्षत्वम् । देवगणाः पूर्वाह्णे चन्द्रायाशनं हरन्ति मनुष्याः मध्याह्ने पितरश्चापराह्णे सूर्यः यत्रोदङ् गच्छति तत्रदेवाः । प्रजापतेः पुत्रा इमे । प्रजापतेर्मुखादजायन्त । तथा च ताण्डायनशतपथादिषु ।

"यद्वै मनुष्याणां परोक्षम् तद् देवानां प्रत्यक्षम् ।
अथयन्मनुष्याणां तद्देवानां प्रत्यक्षम् ।"[6]
"तस्मै चन्द्रमसेहस्मपूर्वाह्णे देवा अशनमभिहरन्ति ।
मध्यन्दिने मनुष्या अपराह्णे पितरः ।"[7]
स सूर्यः यत्रोदङ् आवर्तते देवेषु तर्हि भवति ।
देवास्तर्हि अभिगोपायति अथयदत्र दक्षिणा वर्तते पितृषु
तर्हि भवति पितॄन्तर्हि अभिगोपायति ।"[8]
"स प्रजापतिः आस्येन देवानसृजत् ।"[9]

देवताः कुष्टं स्वरं वदन्ति मनुष्याः प्रथमं पशवश्च द्वितीयम् । कुष्टस्वरस्तु मूर्ध्नितिष्ठति । एषामुपासना च योगेन कर्मणां दाक्ष्येण, दमेन, बुद्ध्यातपोभिर-ध्ययनेन च कार्या । तथा वृहद्देवतायाम्—

वदन्ति देवताः कुष्टं मनुष्याः प्रथमम् स्वरम् ।
द्वितीयं पशवः सर्वे गन्धर्वाप्सरसः स्वरम् ॥१॥[10]

---

१. तत्रैव २।३।८।३
२. शतपथे ११।१।६।७
३. तैत्तरीयसंहितायाम् ७।४।२।१
४. शतपथे ७।४।२।४०
५. तत्रैव १।२।५।१७
६. ताण्डायते २२।१०।३।१२
७. शतपथे १।६।३।१४
८. तत्रैव २।१।३।३
९. तत्रैव ११।१।६।६।७।८
१०. वृहद्देवतायाम् ८।११४

कुष्टो नित्यं यो मूर्ध्नि तिष्ठति ।[1]
योगेन दाक्ष्येण दमेन बुद्ध्याबहुश्रुतेन तपसा नियोगैः
उपास्यास्ताः कृत्स्नशो देवता या ऋचोह वेद स वेदवेदान् ।[2]

देवा चक्र-व्यतिरिक्त-साधनाः उत्तरावर्ता आहुतयो, जुहवुः। देवानां यज्ञाः रक्षोभिर्हन्यन्ते। एषांगृहंद्यौः पृथिवी च स्थानम्। यज्ञो वै देवानूामात्मा। ते च यज्ञोपवीतिनोभूत्वा यज्ञान्नममृत्वं प्रापुस्तेषामन्नं सोम। हविश्च सोमशब्दार्थेऽत-एव हविरेव जीवनम्। सूर्यश्चात्मा। एते महिमशालिनोऽमृताश्च। देवा विद्वांसोऽत एव विबुधाकथ्यन्ते। देवानामृतवश्च वसन्त ग्रीष्म वर्षाः। प्राणचक्षुर्मनसो देवी वाक् च मनश्च देवानां मिथुनमिति। तथा च शतपथादिषु।

"ते देवाः चक्रमचरच्छालं" "चक्रव्यतिरिक्त-साधनमिति सायणः"। असुरा आसन्।[3]

"उत्तरावर्तिवै देवा आहुतिमजुहवु......अर्वाञ्चमसुरा...।"[4]
"देवानां वै यज्ञञ्रक्षांसि अजिघासम्।"[5]
"द्यौः वैसर्वेषां देवानामायतनम्"[6]
"पृथिवी वै सर्वेषां देवानामायतनम्"[7]
"सर्वेषां देवानामात्मा यज्ञः"[8]
"ततोवैदेवा यज्ञोपवीतिनो भूत्वा दक्षिणं यज्ञः
अवन्निममृतत्वंवा उर्वः।"[9]
"सोमः देवानामन्नम्।"[10]
"एतद्वै देवानां परमन्नंयत्सोमः।"[11]
"हविर्वैदेवानां सोमः।"[12]
"सूर्योवै सर्वेषां देवानामात्मा।"[13]

---

१. तत्रैव, ८।११६
२. तत्रैव, ८।१३०
३. शतपथे ६।८।१।१
४. तैत्तरीये २।१।४।१
५. ताण्डायने १४।१२।७
६. शतपथे १४।३।२।८
७. तैत्तरीये १।५।२।६
८. शतपथे १४।३।२।१३
९. तत्रैव २।४।२।१
१०. ताण्डायने ६।६।१३
११. तैत्तरीये १।३।३।२।३
१२. शतपथे ३।५।३।२
१३. तत्रैव १४।२।२।६

"देवा महिमानः ।"[१]

"अमृताः देवाः ।"[२]

"विद्वांसोहि देवाः ।"[३]

"वसन्तो ग्रीष्मोवर्षा ऋतवोवैदेवाः ।"[४]

"तस्मात्प्राणाः देवाः ।"[५]

"चक्षुर्देवः"[६] "मनोदेवः"[७] "वाग्च मनश्च देवानांमिथुनम् ।"[८]

देवाश्च सदा परोक्षकामाः भवन्ति । प्रत्यक्षमभिद्विषन्ति । सर्वं कर्म यज्ञैरेवकुर्वन्ति सदा जागरणं कुर्वन्ति । न च शेरते । ज्ञानवन्तो भवन्ति नाज्ञानवन्तः । ऋतमेषां मार्गम् । सत्यरूपा एते सदा सत्यंवदन्ति । छन्दोभिर्यज्ञैश्च देवाः स्वर्गमवापुः आनन्दरूपा एव । अग्निर्देवानां होता दूतश्च । घृतभुजः हिरण्यमया देवाः । मन्त्रकरणहविस्त्यागभागित्वेनोद्देश्यत्वं देवतात्वमितिफलितोऽर्थः । तथा च शतपथादिषु ।

"परोक्षकामाः हि देवाः"[९], "परोक्ष कामाहिदेवाःभवन्ति प्रत्यक्षद्विषः"[१०]

"यदुहत्रैकिंचित् देवाः कुर्वतेस्तोभेनैव तत्कुर्वते"[११]

"जाग्रति देवाः"[१२], "न वै देवाः स्वपन्ति"[१३]

"यो वै देवानां पथोस ऋतस्य पथेति ।"[१४]

"एकं वैदेवाः व्रतंचरन्तिथत्सत्यं तस्मादु...सत्यमेव वदेत्"[१५]

"छन्दोमिर्देवाः स्वर्गलोकंसामाश्नुवत् ।"[१६]

---

१. यजुर्वेद ३१।१६।१०।२।२।२
२. शतपथे २।१।३।४
३. तत्रैव ३।७।३।१०
४. तत्रैव ७।२।४।२६
५. तत्रैव ७।५।१।१।१८
६. गोपथे ब्र० २।१४।१०
७. तत्रैव २।१०।१६
८. ऐतरेय ५।२७
९. शतपथ ६।१।१।२।७।४
१०. गो० पू० २।२१
११. शतपथे ८।४।३।२१
१२. तत्रैव २।१।४७
१३. तत्रैव ३।२।२।२२
१४. तत्रैव ४।३।४।१६
१५. तत्रैव १४।१।१।१३
१६. तत्रैव ३।६।३।१०

"आनन्दात्मानोहवैसर्वे देवाः।"[1]
"अग्निवदेवानां होता"[2] "अग्निरेव देवानां दूत आस"[3]
"देवानां एतद्रूपं यतहिरण्यम्"[4]

ऋग्वेदपर्यालोचनेन प्रतीयते यत्प्रकृतिर्मानिवानामनुमेयविषया। जन्मतएव नराः परितः कौतुकावहां प्राकृतिक-दृश्यावलिं प्रातः सूर्य-बिम्बं सायं रजनीं चन्द्रच्छटाः-समुद्र-तरंगान् विविधर्तुजन्य—परिवर्तनानि चावलोक्य विभिन्न देवताः पर्यकल्पयन्निति पाश्चात्यविदुषां मतम्। ते तु भौतिक-घटनानामुपपत्तये-देवताः स्वीकुर्वन्ति। अत्रैवादिमकाले "बहु-देववाद" "पोलीथीज्म" कालान्तरे "मानोथीज्म" एक देववाद इति कथयन्ति। मोक्षरमूलरमहानुभावानां मते प्रत्येकदेवता-स्तुतिषु व्यापिका महती सृष्टिकर्त्रीच स्वीकृता। तस्या एवान्य-देवतोत्पत्तिः "हेनोथीज्म" मतमेतदेव। किन्तु मतमिदं निराधारमित्यत्रैवाध्याये देवानामैक्यप्रकरणेनिरूपणीयं भविष्यति।

सामान्यत ऋग्वेदे देवानां द्विविधंरूपं वर्णितम्। एकं स्थूलं दृश्य मन्यत् सूक्ष्ममदृश्यम् गूढं च। तेषां यद्रूपमाधिभौतिकंतद् दृष्टिगोचरतामायाति। यद्रूपमिन्द्रियातीतंतत्सूक्ष्ममाध्यात्मिकमुच्यते। उदाहरणार्थं विष्णुसूर्याग्नीनां-द्विविधं रूपं समीक्ष्यताम्।[5] येन रूपेण विष्णुः पार्थिवान् लोकान् विममे अन्तरिक्ष दृढीकृतवान् पदत्रयेण विश्वममीमीत्तदेकं। 'यद्विष्णोः परमंपदमिति" यत्रतस्यसूक्ष्मोनिवासः तन्मधुचक्रमुच्यते[6] "विष्णोः पदे परमेमध्वउत्सः" तत्परमं पदं ज्ञानिनएव विदन्ति। तथा च ऋग्वेदे···

"विप्रासो विप्रन्यवोजागृवांस समिन्धतेष्णिोर्यत् परमं पदम्।[7] एवमेव-सूर्यादीनाम्।

सूर्यस्योत् उत्तरमुत्तमं चेति रूपत्रयम् सूर्यस्योत् यज्ज्योतिरन्धकारं विनाशयति। देवमध्ये निवसतितदुत्तरं विशिष्टं ज्योतिरुत्तममिति। प्रकारान्तरेण सूर्यस्य कार्यात्मकं, कारणात्मकं, कार्यकारणातीतं च रूपत्रयम्। आधिभौतिका-धिदैविकाध्यात्मिकरूपेण कथ्यते। तथा च...

उद्वयं तमसस्परि ज्योतिः पश्यन्त उत्तरम्।
देवं देवत्रा सूर्यमगमज्योतिरुत्तमम् ॥१॥[8]

---

१. तत्रैव १०।३५।१३
२. ऐतरेये १।२८।३।१४
३. शतपथे ३।५।१।२१.
४. तत्रैव १२।८।१।१५
५. ऋग्वेद १।१५४।१
६. तत्रैव १।१५४।५
७. तत्रैव १।२२।२१
८. ऋग्वेदे १०।२०।१०

अत्र उत् उत्तरम् उत्तममितिशब्दत्रेयणतरप्तमप्प्रत्ययविशिष्टेन एभिः प्रमाणैश्चर्निस्सन्दिग्धरूपेणायातियत् ऋग्वेद एकस्याएवदेवताया प्रतिनिधयो-विभिन्नदेवताः ।

"देवा अमरा अमरत्वं च तैः सोमपानाल्लब्धम् सोमः अमरत्व-सारः ।[1]

## (ख) पंचदेवताः

### पंचैव कथम्

नास्त्यत्र सन्देहो यद्भारतीय-संस्कृतौदेववादस्यातीव प्राधान्यम् । संख्यायाः विषयस्तत्रापि प्राधान्यमवगम्यते । अनेक-सम्प्रदायानां मतविभिन्नता चात्राधुनिकाबहवः त्रयस्त्रिंशत् कोटिःर्देवतानामितिमतमादायोपहासमपि कुर्वन्ति । ते न जानन्ति यदाकाशे भासमानानि नक्षत्राणि देवतैव । एवंचैतावती संख्या सुघटैव । उक्ताच शतपथे "द्यौः वै सर्वेषां देवानां स्थानमिति"[2] सर्वे नराः देवता प्रायाः तथा च ताण्डायने 'नरोवै देवानां ग्रामः"[3] "पृथिवीवै सर्वेषां देवानामायतनमिति"[4] कोटि-शब्दस्य श्रेणीत्यर्थोऽपिनासम्भवः ।

अथेदं विचार्यते तत्र तत्र ग्रन्थेषु त्रयस्त्रिशंद्देवाः सप्रजापतिकाः चतु-स्त्रिशंदिति । तथा च ताण्डायने "त्रयस्त्रिशंत् देवता"[5] शतपथेऽपि" त्रयो वैरुद्रा आदित्या,वसवः तैत्तरीयेऽपि "त्रयस्त्रिंशत् देवताः"[6] कौण्डिन्योऽप्याह "त्रयस्त्रिंशत् वै सर्वाः देवताः" शतपथेत्वियंसंख्या प्रजापति-सहिता चतुस्त्रिंशत् । तथा च "त्रयोवैदेवा वसवो-रुद्रा आदित्याः त्रयस्त्रिशत् वैदेवा प्रजापतिः चतुस्त्रिंशत् । वृहदारण्यके च "महिमानएवैषामेते चत्रयस्त्रिशत्वैदेवाः"[7] इति कतमेतेत्रयस्त्रिं-शत्दित्यष्टौवसव एकादशरुद्रा द्वादशादित्यास्तएकत्रिंशदिन्द्रश्च प्रजापतिश्च त्रयस्त्रिंशो इति"[8] निरुक्तेऽपि "तिस्र एव देवताः[9] ताश्च पृथिव्यन्तरिक्षद्यु-स्थानीयाः"[10] देवानां त्रयस्त्रिशत्वेऽपि पंचसंख्याया उल्लेखः तथा च गोपथे—

---

१. तत्रैव १०।५३।१०
वैदिकदेवलीय, डा० सूर्यकान्त (द्वि. अनु), पृ० ३३
२. शतपथे १४।३।२।८
३. ताण्डायने ६।६।२
४. तैत्तरीये १।५।२६
५. ताण्डायने ४।४।११
६. तैत्तरीये १।२।२।५
७. शतपथे १२।६।१।३३
८. वृहदारण्यके ३।६।२
९. निरुक्ते दैवत-काण्डे ७।५।१
१०. तत्रैव, ७।५।२

"पंचधा वै दैवता व्युत्क्रामन् अग्निः वसुभिः, सोमो रुद्रैः इन्द्रो मरुद्भिः वरुण आदित्यैर्बृहस्पतिर्विश्वदेवैः।[1] वसवश्च पृथिवी वायुरन्तरिक्षमग्निरादित्यो-द्यौश्चन्द्रमा नक्षत्राणि। पंचदेवेषु वसुत्वेन वायुस्वरूपवतस्सूर्यस्य पृथिवीरूपवत ईशस्य (शिवस्य अग्निरूपवत्या महेश्वर्याः)। चन्द्रात्मकस्य गणेशस्य आदित्य-रूपस्यविष्णोश्च गणना। यद्वा वसुमध्यत आदित्य-गणेश-शक्तीनां रुद्रतः शिव-स्यादित्यतो विष्णोश्च ग्रहणेन पंच संख्योपपद्यते। एवं चैकादश-रुद्राणां शिवेऽन्तर्भावः। सूर्य-गणेश शक्तिषु वसूनां, विष्णौ द्वादशादित्यानां। गीतायामपि "आदित्यानामहंविष्णुरिति"[2] निर्दिष्टम्। बृहदारण्यकेऽपि षट् देवतासु सर्वासाम् त्रयस्त्रिशंद् देवतानामन्तर्भावः कृतः। तथा च—

"कतमेषडितिअग्निश्च पृथिवीच वायुश्चान्तरिक्षश्चादित्यचैश्तेषडिति।"[3]

"कतमे षडिति त एवाग्न्यादयः वसुत्वे पठिताश्चन्द्रमसं नक्षत्राणि च वर्जयित्वा षड्भवन्ति षट्संख्या विशिष्टा एतेहि यस्मात् त्रयस्त्रिशंदादि यदुक्तं इदं सर्वं तत एव षट् भवन्ति। सर्वोहि वस्वादिविस्तर एतेष्वेव षद्स्वन्तर्भवन्ति"[4] आदित्यस्याप्यन्तर्भावो वायौ अनुपदम् वक्ष्यते। पंचस्वेव देवतास्वन्तर्भावः स्फुट एव। पंचतत्त्वानांप्रतिनिधयः पंचदेवता इति।

उल्लिखितोदाहरणेभ्यः देवानां पंचत्वंसिद्ध्यति अत्रेदनपि न विस्मरणीयं यत्पंचसंख्या किमपि वैशिष्ट्यमावहति। यथा पंच-प्रदक्षिणाः, पंचक्रोशीया परिक्रमा। न्यायालये पंचाटाः, लोकपालाः पंच, पंच वायवः प्राणापानोदानव्यान-समानाः। पंचमहाभूताः पृथ्व्यप्तेजोवायुरवानि, पंच ज्ञानेन्द्रियाणि पंच-कर्मेन्द्रियाणि, पंचीकरणप्रक्रिया। पंचतीर्थानि। पंचाप्सरसः, संस्कृत-साहित्ये पंचमहाकाव्यानि रघुवंश-कुमारसम्भव मेघदूत किरातमाघ-नैषधाख्यानि। सेतिहास-पुराणा पंचवेदाः। सांख्ये पंचकारणानि[5] ज्योतिषि पंचांगानि।

अन्यदपि विचार्यम्, जगदिदं त्रैगुण्यं तथा चोक्तं गीतायाम् "त्रिभिर्गुण-मयैर्भावै रेमिर्व्याप्तिमिदं जगत्।"[6] पंचभूतान्यपि एभिरेव तथा च शुद्ध-सत्वमा-काशम्। सत्वरजसो सम्मिश्रणेन वायुः शुद्धरजोऽग्निः, रजस्तमसोर्मिश्रणमापः शुद्धतमस्का क्षितिरिति। फलितार्थस्त्वयम्, आकाशाग्निपृथिव्यः शुद्धसत्वरजस्त-मस्काः। वायुजलेमिश्रिते। निखिल-ब्रह्माण्डं गुण-त्रयोद्भूतम् पंचतत्त्वमयम्। मानवादि-स्वभावेष्वपि पंचभेदाप्रमुखा। प्राधान्येन व्यपदेशाभवन्तीति न्यायेन।

१. गोपथ उ० २।२
२. श्रीमद्भगवद्गीतायाम् १०।२१
३. बृहदारण्यक ३।९।७
४. शाक्यभाष्ये, पृ० ७९१
५. गीतायाम् १८।१३
६. तत्रैव ७।१३

स्वभावेषु सन्निपातत्वे कस्यचितत्त्वे-विशेषस्य प्राधान्यमादाय तत्त्व-प्रकृतित्वम् । आकाशतत्वाधिक्यवान् सत्वगुण-सम्पन्नो भवति । वायवाश्चसत्वरजस्का: क्षितिप्रधानास्तमस्का:। आयुर्वेद-विज्ञाने वातपित्तश्लेष्मस्वपि पंचतत्वानां सन्निवेश: । तत्र वायौ: वातस्याग्नौ पित्तस्य श्लेष्मणि शेषाणाम् । यथा निदानवित् चिकित्सको रोगिणां चिकित्सायां वात-पित्त-श्लेष्मसु कस्य प्राधान्य मिति ज्ञात्वा चिकित्सते । तथैवौषधीश्च प्रयुक्ते, तथैवाध्यात्मिकक्षेत्रे गुरु: साधकस्य प्रकृतीर्विज्ञाय उपासनामुपदिशति । आकाशप्रकृतिकाय विष्णोर्वायवीयाय सूर्यस्याग्निप्रकृतिकाय दुर्गाया:। जलप्रकृतिकाय गणेशस्य क्षिति-प्रकृतिकाय शिवस्येति । विपरीतकर्तृणां फलं सम्यक् लाभाय न भवति । यथा चिकित्सा-शास्त्रे यस्य-कस्यचित् तरोर्मूलं येन केनप्रदापनेनेष्टं फलं नमवति ।

## पंच देवता: का : तासामुपादेयताच

पंच-देवताश्चशिवशक्ति-विष्णु सूर्य-गणेशा: । एतश्च पंचतत्त्वानामधिपा: तथा चोक्तं कापिलतन्त्रे ।

आकाशस्याधिपोविष्णु:, अग्नेश्चैवमहेश्वरी ।
वायो: सूर्य: क्षितेरीश:, जीवनस्य गणाधिप: ।।१।।[1]

अतएव विष्णोराराधना स्तोत्र-प्रधाना, महेश्वर्या अग्निप्रधाना कुण्डेषु-गर्भाशयंमत्वा योनि-निर्माणं भवति। भगवत: शिवस्य मृण्मयी पार्थिवेश्वररूपेण । गणेशस्य जलप्रधाना कलशस्थापनादिना, सूर्यस्य सूर्यनमस्कारादिना प्राणायामेन च वायुनिरोधप्रवृत्या सर्वत्र स्वस्त्यपनग्रहशान्त्यादिषूपनयन-विवाहादि संस्कारेषु "पंचदेवताभ्यो नम:" इति मन्त्रेण तत्तदुपचारा: समर्प्यन्ते, तेषु च शिव-शक्ति-विष्णु-सूर्य-गणेशा एव । एषामेव गायत्र्य: तत्तद्ग्रन्थेषूपलभ्यन्ते । तथा च शिवस्य—

"त्रियम्बकं यजामहे सुगन्धिं पुष्टि-वर्धनम् ।
उर्वारुकमिबन्धनान्मृत्योर्मक्षीय मामृतात् ।।"[2]

महानारायणोपनिषदि—

"तत्पुरुषाय विद्महे महादेवाय धीमहितन्नोरुद्र: प्रचोदयात् ।"[3]

वृहद्देवतायाञ्च—

"इन्द्राश्रयस्तुपर्जन्य: रुद्रोवायुर्वृहस्पति: ।
वरुणकश्चमृत्युश्च देवश्च ब्रह्मणस्पति ।।"[4]

---

१. माधवाचार्य कृते 'क्यों' पुस्तके, उत्तर खण्डे, पृ० ४६६ कपिलतंत्रत उद्धृत ।

२. ऋग्वेदे ५।७।५६।१२

३. महानारायणोपनिषदि (मैसूर प्रकाशन) १।२२। पृ० ४७

४. वृहद्देवतायाम् १।१२२

"एको रुद्रो न द्वितीयाय तस्थुः"[१]

एवमेव दुर्गायाः शक्त्याः वर्णनमृग्वेदे—

"जातवेदसे सुनवाम मरातीयतोनदहाति वेदः ।
सनः पर्षदति दुर्गाणि नावेवसिन्धुं दुरितात्यग्निः ॥१॥"[२]
"अम्बे अम्बिके अम्बालिके न मानयति कश्चन ।
ससस्त्यश्वकः सुभद्रिकां काम्पील्य-वासिनीम् ॥२॥"[३]

महानारायणोपनिषदि देव-देवीनां गायत्र्युपक्रमे ।

"कात्यायन्यैविद्महे कन्या कुमार्यै धीमहि—
तन्नोदुर्गि : प्रचोदयात ।"[४] बृहद्देवतायामपि
"एषैव दुर्गा भूत्वर्च कृत्वा स्यात्सूक्तभागिनी ।"[५]

एवमेवविष्णो : ऋग्वेदे—

"इदं विष्णुर्विचक्रमेत्रेधानिदधेपदम् । समूढमस्य पांसुरे ।"[६]

गायत्री प्रस्तावे महानारायणोपनिषदि च—

"नारायणाय विद्महे वासुदेवाय धीमहि तन्नोविष्णुः प्रचोदयात् ।"[७]

सूर्यस्यापि ऋग्वेदे निर्देशः—

आकृष्णेन रजसा वर्तमानोनिवेशयन्नमृतम् ।
मर्त्यंचहिरण्येन सवितारथेनदेवोयाति भुवनानि पश्यन् ।"[८]

गायत्री—

"भास्कराय विद्महे महद्द्युतिकराय धीमहि तन्न आदित्यः प्रचोदयात् ।[९]

गणेशस्यापि यजुर्वेदर्गवेदादिषुनिर्देशस्तथा च

"गणानां त्वा गणपति हवामहे कविं कवीना-मुपश्रवस्तमम् ।
ज्येष्ठ-राजं ब्रह्मणां ब्रह्मणस्पते आनः शृण्वन्नूतिभिः ॥१॥"[१०]

यजुर्वेदे च—"गणानांत्वा गणपति हवामहे बसो मम आहम् जानिगर्भधम् ।"[११]

---

१. श्वेताश्वतरोपनिषदि ३।२
२. ऋग्वेदे १।६।१
३. सा० स० २।६०
४. महानारायणोपनिषदि (मैसूर) पृ० ५४
५. बृहद्देवतायाम् २।७७
६. ऋग्वेद १।१।२।२२।१७
७. महानारायणोपनिषदि, मैसूर, पृ० ५१
८. ऋग्वेदे १।३०।२
९. महानारायणोपनिषदि, ५५
१०. ऋग्वेदे २।२३।१
११. वा० स० २३।१६।

एवंचेमाः पंचदेवता अधिकृत्यकृष्णयजुर्वेद मैत्रायणीसंहितायामृकसंहितायामथर्वसंहितायां[1] च मन्त्राः। इमा एव पंचदेवता अधिकृत्योपनिषदश्च। तथा च गणपत्युपनिषद्नारायणोपनिषद् सूर्योपनिषद् देव्युपनिषत् त्रिपुरतापिन्यद्युपनिषदः। उल्लिखित-गायत्र्यः तन्त्रागमादिष्वपि। पुराणादीनांविभागाश्चेमाएवाधिकृत्य। विष्णु-शिव-शक्ति-गणेश-सूर्यादि-देवताकाः। ब्रह्मवैवर्त-ब्रह्मब्रह्माण्ड-विष्णुभागवतवामनादयः, शिववाय्वादयः मार्कण्डेय-देवीभागवतादयःभविष्यसाम्बादयः गणेशपुराणादयःविष्णु-शिवशक्ति-सूर्य-गणेशानधिकृत्यैव रचिताः। अन्यत्रापि पुराण-स्तोत्र कोश-सम्प्रदायादिषु इमाएव पंचदेवताः स्वीकृताः तथा च शब्दवाचस्पत्ये—

आदित्यं गणनाथं च देवीं रुद्रं च केशवम्।
पंच-दैवतमित्युक्तं, सर्वकर्मसुपूजयेत् ॥१॥[2]

आप्टे महोदयानां शब्द कोशेऽपि श्लोकोऽयमित्थमेव घृतः[3] (आदित्यमिति) गणेशपुराणे देवानामैक्य-प्रस्ताव आसामैव पंचदेवतानामैक्यस्य चर्चा।

"शिवे विष्णौ तथा शक्तौ सूर्येमयि नराधिप।
या भेद-वुद्धि-योगः च सम्यक् योगतमोमतः॥१॥"[4]

परिक्रमा प्रसंगे कस्य देवस्य कियत्यः प्रदक्षिणा कार्याइत्यत्रापि देवानामेषामेव चर्चा।—

"एकां विनायकेकुर्यात्, द्वे सूर्योतिस्त्र ईश्वरे।
चतस्रः केशवे कुर्यात्, शिवस्यार्द्धप्रदक्षिणा॥१॥"[5]

गणेशपुराणान्तर्गत गणेशगीतायां योग-प्रस्तावे चैषामेवनिर्देशः पंचदेवोपासकाः शैवाः वैष्णवाः, सौराः, शाक्ताः गाणपत्याश्च।—

शैवस्य च न योगोऽस्ति नो योगो वैष्णवस्य च।
न योगो भूपसूर्यत्वं चन्द्रत्वं न कुबेरता॥१॥
अहमेव महाविष्णुरहमेव सदा शिवः।
अहमेव महाशक्तिरहमेवार्यमादयः॥२॥[6]

तत्रैव गणेशो वक्ति यदि ममैवभेदा मायावशतः। तथा च—

"एवं माया वशतो रवि-शिव-शक्त्यादीनां पंच-भाक्।
दिशस्तु मदीप्सितमखिलं शुद्धं ब्रह्मात्मकं भवेद्रूपम्॥१॥[7]

१. मैत्रायणी संहिता २।९।१।६; ऋग्वेदे ६।६१।४; अथर्वसंहिता १९।९।१०
२. शब्द वाचस्पत्ये ४१८७
३. आप्टे संस्कृत इंगलिश शब्द कोशे, पृ० ९५०
४. गणेश पुराणे २० अध्याय भगवत्तत्वे, गणेश प्रकरणे
५. प्रचलित श्लोकः ग्रहशान्त्यादिषु
६. गणेश गीता २१-२२, श्लोकाः
७. गणेशपूर्वशतके २८ श्लो० स्तोत्राणि

पद्मपुराणेऽपि भीष्मोव्यासमुक्तवान्—

मया मुनिवरश्रेष्ठ विश्रुताहि सहस्रशः।
गणेशशक्तिसूर्येश—चक्रिणां स्तुतयोऽमलाः ॥१॥[1]

हरिशरणाष्टके स्वामी ब्रह्मानन्दः देवानामैक्य-प्रस्तावेवक्तिः—

ध्येयं वदन्ति शिवमेवहि केचिदन्ये।
शक्तिं गणेशमपरेतु, दिवाकरं वै।
रूपैस्तु तैरपि विभासि यतस्त्वमेकः।
तस्मात्त्वमेव शरणं मम शंख-पाणे ॥[2]

नास्त्यत्रसन्देहो यदत्र देवोपासनयाऽसाध्यानि कार्याणिसिद्ध्यन्ति आयुर्वेद-शास्त्रे विशदीकृतानां रोगाणां वात-कफजानां निवृत्तये कस्याः देवतायाः विशिष्य पूजोपासने कार्ये इत्यत्पि देव-ज्ञानाधीनमेव। अग्नितत्वस्य न्यूनतयाऽनेकेरोगाः जायन्ते सर्वेषामेवरोगाणाम् निदानं कुपितामलाः। अतिसारग्रहरायर्शादयो रोगाः जायन्ते तथा च माधव-निदाने—

अतिसारे निवृत्तेऽपि मन्दाग्नेरहिताशनः।
भूयः सन्दूषितोबह्निः ग्रहणीमभि दूषयेत् ॥१॥[3]

तत्रैव मन्दाग्न्यधिकारे—

कफपित्तानिलाधिक्यात्, वैषम्याज्जाठरोऽनिलः।
विषयोवातजान्रोगान् तिक्ष्णपित्तनिमित्तजान् ॥१॥[4]

अग्निमान्द्येन न केवलारुचिरपितु कफ-वात-पित्तजाविविधाः रोगा उद्भवन्ति। तथा च तत्रैव।

अर्शोऽतिसारग्रहणी-विकाराः, प्रायेण चान्योऽन्यनिदानभूताः।
सन्नेऽनलेसन्ति न सन्तिदीप्ते, रक्षेदतस्तेषु विशेषतोऽग्निम् ॥[5]

एवमेव वायुतत्वस्याधिक्येन्यूनतयावाऽनेकेरोगा जाजायन्ते ते च वायु-तत्वाधिपतेः सूर्यस्याराधनेन शाम्यन्ति। रोगाश्च—

वर्षासु मारुतो दुष्टः पित्तश्लेष्मान्वितो ज्वरम्।
कुर्यात्पित्तं चशरदि, तस्य चानुवलं कफम् ॥१॥[6]

वर्षतौंवायुतत्वस्य दूषिततयापित्तश्लेष्मजन्यज्वरेण वाध्यन्तेजनाः शरदि

---

१. पद्म-पुराणे विष्णु सहस्रनाम्नि २०१
२. वृहस्तोत्र रत्नाकरे, पृ० ७१९ श्लोक
३. मार्धवानिदान-ग्रहण्यधिकोर १
४. तत्रैव मन्दाग्न्यधिकोर १
५. तत्रैव. ८।६४
६. तत्रैव, निदाने, ६६

च पित्तेनान्यत्र कफेन। एवमेवास्य तत्त्वस्य न्यूनाधिक्येन हिक्कादयो विविधाः रोगा भवन्ति। तथा—

मुहुर्मुहुर्वायुरूदेति सस्वनः यकृत्प्लीहे रोगान्मुखादिविक्षिपन्।
सघोषवानाशुहिनस्त्यशून्यतः, ततस्तुहिक्केत्यभिधीयते बुधैः ॥१॥[1]

शरीरेरिक्तस्रोतांसिपूरयनतिवलोवायुर्विविधान् रोगान् जनयति तथा च तत्रैव—

देहस्रोतांसिरिक्तानि, पूरयित्वानिलोबली।
करोतिविविधान्व्याधीन् सर्वांगैकान्हिसंश्रयान् ॥१॥[2]

एतादृश एवार्थोऽन्यत्रापि—

विभुत्वादाशुकारित्वात्, बलित्वादन्यकोपनात्।
स्वातन्त्र्यात्बहुदोषत्वात्, दोषाणां-प्रबलोऽनिलः ॥१॥[3]

सुश्रुत-सूत्रेऽपि "रजोभूयिष्ठस्सर्वभावानांप्रवर्तकः गतिमत्त्वात् प्रसरण-हेतुश्च"[4] अन्यत्रापि "अचिन्त्यवीर्योदोषाणां नेता रोगसमूहराट्"[5], हठयोग-प्रदीपिकायामपि "इन्द्रियाणां मनोनाथः मनोनाथस्तु मारुतः"[6] कथितः।

चरकसूत्रेऽपि रौक्ष्यं शैत्यं लाघवं विशालता, गतित्वम् अमूर्तित्वादयो-ऽनेनैवभवन्ति।[7] एतेच रोगाः सूर्याराधनया शाम्यन्ति।

एवमेवजलतत्त्वस्यन्यूनाधिक्येन शरीरेऽनेकरोगा उद्भवन्ति। तथा च—

गुर्वतिस्निग्धराक्षोष्ण-द्रवस्थूलामिशीतलैः।
विरुद्धाध्यशनाजीर्णैः विषमैश्चापि भोजनैः ॥१॥
शोक-दुष्टाम्बुमद्याति-पानैसात्म्यर्तुघर्षणैः।
स्नेहाद्यैरतियुत्रमैश्च, मिथ्यामुत्रमैर्विषैः मदैः ॥२॥
जलाधिमरणैः बेग-विघातैः कृमि-दोषतः।
नृणांभवत्वतिसारो, लक्षणं तस्य वक्ष्यते ॥३॥[8]

सुश्रुत-सूत्रेऽपि जलीयतत्त्वस्योपयोग-स्थानयोश्च विषयेनिरूपितम्तत्र "रसगतौ धातुरहरर्गच्छतीति रसः रसयतीति रसो द्रवधातुरुच्यते तेन रुधिरा-दीनां द्रवाणां ग्रहणं भवति"[9] चरक-सूत्रेऽपि जलीय-तत्त्वविकारतो जायमान

१. तत्रैव, हि० नि०, ३
२. माधवनिदाने (हिक्काप्रकरणे) ४
३. अ० हृ० शा० ३।८४
४. सुश्रुते सूत्र २१।२८
५. सुश्रुतनिदाने १।८
६. हठयोग-प्रदीपिका १
७. चरकसूत्रे २०।१२
८. माधवनिदाने अतिसपनि० १-३
९. सुश्रुतसूत्रे १४।१३

रोगाणां समूहः[1] कथितः। तत्र केचन सर्वेष्वपि खल्वेतेषु श्लेष्मविकारेषु अन्येषु चानुमेषु......स्नेहशक्ति शैथिल्यशौक्ल्या गैरवादीनि।।[2]

एवंचोक्त जलतत्त्वविकारोपशान्तयेगणपतेराराधनंप्रशस्तम । यतो "जीवनस्य गणाधिपः।"

पृथ्वीतत्त्वस्य न्यूनाधिक्ये केचिदुपसर्गाः वर्ण्यन्ते...

"व्यायाममलं लवणानिमद्यं, मृदंदिवा-स्वप्नमतीव तीक्ष्णा
निषेवमाणस्य प्रदूष्य रक्तं, दोषास्त्वचं पाण्डुरतांनयन्ति।।१।।
मृत्तिकादन-शीलस्य, कुप्यत्यन्यतमोमयः।
कषायो मधरस्तित्तमुष्णंमधुरं कफम्।।
कोपयेन्मधुरसादींश्च, रुक्षाद्भुक्तं च भक्षयेत्।
पूरयत्यविपक्वैव, स्रोतांसि निरुणद्ध्यपि।।२।।[3]

क्षितितत्त्वजन्यविकारोपशमाय पार्थिवेश्वरस्य पूजनम् विहितम् शरीरे नभस्तत्त्वस्य संचयः सर्वैरपि विदितः तथा च सुश्रुते...

"आकाशीयावकाशानां देहे नामानि देहिनाम्।
सिराः स्रोतांसि मर्माः खमन्योनालोड्य आशयम्।।१।।

अग्रेपि—

मूलोत्खादन्तरंदेहे, प्रसृतंत्वमिवाहयेत्।
स्रोतस्तदितिविज्ञेयं, शिरोधमनिर्वजितम्।।२।।[4]

शिरोधमनी विहाय सर्वावकाशमार्गे आकाशीय-तत्त्वस्य प्रधानता स्रोतश्च शरीरे द्विधा दृश्यमन्तर्मुखं च दृश्यंच घ्राणमुख-नेत्र-कर्णादीनि, अध्यात्ममार्गनवद्वाराणि। अन्तर्मुखं च शरीरान्तर्वर्ति। तत्र विकारा आकाशीय-तत्त्व-विकारादेव तथा चाकाशतत्त्वजन्योपद्रवशान्तये विष्णोसराधनामुक्तम् तथा च पंचतत्त्वप्रतीकाः पंचदेवास्तेषामुपादेयता वर्णितास्ते च पंचदेवापूर्वोक्ता एव तथा च महानिर्वाण-तन्त्रे —

"शाक्ताः शैवाः वैष्णवाश्च, सौरागाणपतास्तथा।
विप्राविप्रेतराश्चैव, सर्वेऽप्यत्राधिकारिणः।।१।।"[5]

सूर्याराधनेन कुष्ठादिनिवृत्तिरपि प्रसिद्धामयूरकवेः[6] सूर्य-शतकेन-निवृत्तिर्निविदिता सहृदयानाम्। भविष्यपुराणे दुर्वाससाशप्तसाम्बस्य सूर्याराधनया

१. चरकसूत्रे १५।३५
२. तत्रैव २०।१८
३. माधवनिदाने २ तथा ९
४. सुश्रुते ९।३ तथा १३
५. महानिर्वाणतन्त्रे २।२४ श्रीनगर से प्रकाशित।
६. भविष्य पुराणे ब्रह्म पर्व ७२-७३ अध्याय।

कुष्ठनिवृत्तिः तदीयस्तोत्रं सूर्यस्तोत्रप्रकरणे निर्दिष्टम् । तथा च तत्रैव—

ततः शापाभिभूतेन सम्यगाराध्यभास्करम् ।
साम्बेनाप्तं तथा-रोग्यं, रूपं च परमं पुनः ।।१।।"[1]

रोगघ्नादित्य व्रतस्यापि तत्रैव चर्चा ।

"स मुक्तः सर्वरोगैस्तु गच्छेद्दिनकरालयम् ।
तस्मादपि व्रजेल्लोकं, फुंकाराराववहेतिनः ।।१।।"[2]

पद्म-पुराणे पंचानां पूजनेन विभिन्नरोग-निवृत्तिः कथिता

"गणेशं पूजयेद्यस्तु, विघ्नस्तस्य न जायते ।
आरोग्यार्थं च सूर्यं च, धर्ममोक्षाय माधवं ।।१।।"
शिवं चक्रुत्यकामार्थं, सर्वकामायचण्डिकाम् ।।२।।[3]

**क्रम :**

गणेश-शक्ति-शिव-विष्णु-सूर्या इतिक्रमेणात्रविवेचनमिष्टम् । यतो हि स्मार्तोपक्रमे सर्वत्रयागादिषु गणेशपूजनस्य प्राथम्यं प्रचलितम् । पुराणादिषु गणेशस्य प्राथम्येन पूज्यत्वेबहुधोल्लेखः । याज्ञवल्क्य-स्मृतेराचारध्यायेभविष्य-पुराणे शान्ति-मयूरवादौ च विघ्नशान्यर्थं गणेशस्य पूजा प्रथमाविहिता । वाराहपुराणे संत्रस्तर्षि-प्रार्थितरुद्र-मुखादेकः कुमारोऽजायत् तं दृष्ट्वा देवांगना मुग्धा याता । पार्वती तस्मैशापं ददौ । पुनर्देवैरभ्यर्थितः शिवः गजास्यमुवाच देवास्तवभृत्याः त्वं चादौ पूज्यो भविष्यसि ।[4] ब्रह्मवैवर्ते गणपतिखण्डे प्रथम पूजने कथैकातत्र शनिदृष्टोवालः गणपतिः शिरोहीनः जातः विष्णुना हस्ति-शिरः संयोज्यादौ त्वं पूज्य इतिकथितः लिंग-पुराणेऽन्यैव कथा ।[5] मत्स्य-पुराणे पितामहोऽस्मैविनायकाधिपत्यं ददौ । समोऽनेननान्योदेव इति कथितवान् ।[6] ब्रह्म-पुराणे च—

"न विघ्नराजेनसमौऽस्तिकश्चित्, देवो मनोवांछित-सम्प्रदाता ।
निश्चित्य चैतत्त्रिपुरान्तकोऽपि तं पूजयामास बधे पुराणाम् ।।"[7]

अग्नि-पुराणे ३१७तमेऽध्याये पूजनमस्य प्रथममुक्तामेकमन्यदुदाहरण मुद्धृत्य समापये । ब्रह्मपुराणे ४७तमेऽध्यायेऽस्यादौ पूजनमुक्तम् ।

---

१. भविष्य पुराणे ब्रह्म पर्व ७४।४३
२. तत्रैव ९१।६
३. पद्मपुराण सृ० खण्डे ५१।६६-६७
४. वाराह पुराणे २३।७
५. लिंग पुराणे १।१०४
६. मत्स्यपुराण १५४ अ०
७. ब्रह्मपुराण ११४।८

कपिलतन्त्रोद्धरणे पूर्वप्रदत्ते गणेशो जलतत्त्वस्याधिपतिः कथितः, जलस्य सृष्टिश्च सर्वादौ जाता "अपएव ससर्जादौ"[१] अतेऽपि गणेशस्य प्राथम्यमुक्तमिति।

गणेशानन्तरंशक्तेः स्थानम् यतो भारतीय संस्कृतौ पितुरपेक्षया मातुः श्रेष्ठत्वमुक्तम्। "पितुर्दशगुणामाता गौरवेणातिरिच्यते" शक्ते-प्राधान्य एव सीता-रामौ, गौरीशंकरौ, लक्ष्मीनारायणौ, इति परम्परा। अतो गणेशानन्तरं तन्मातु-श्जगदम्बिकायाः क्रमः। पूजायामपि गणेशाम्बिकयोः सहैवोच्चारणं भवति। मातुरनन्तरं पितुः क्रम आयात्येवातः शिव-चर्चा। गार्हस्थ्य-परम्परया दुर्गाम्बा-नन्तरं शिवं विहाय कोऽन्यः समेष्यति। शिवस्य भगवतोऽद्वैतरूपत्वात्। सर्व-प्रधानदेवत्वाच्च "एकोरुद्रः न द्वितीयाय तस्थौ" य इमान् लोकानीशत ईश-नीभिः"[२] तत्रैव तमीश्वराणांपरममहेश्वरं तं देवतानां परमं च देवतम्।

"पतिं पतीनां परमं परस्ताद्विदाम देवं भुवमेशीमीड्यम ॥१॥"[३]

अन्यच्च जलानन्तरमग्नेस्तेजस्स्वरूपायाः भगवत्याः ततः पृथिवीतत्त्व-प्रधानस्याधारभूतस्यशिवस्येति।

एवं चात्रावशिष्येते विष्णु सूर्यौ पंचदेवता-क्रमे। तत्र वैदिक-साहित्येऽन्यत्र च विष्णु सूर्ययोर्विशेषतोऽभेदे 'आदित्यानामहं विष्णु' इति गीतोक्तेरादित्येषु विष्णोः प्राधान्ये विष्णोः सूर्यात्प्रथम आकाशस्यधिपत्वेऽपि जलाग्निक्षित्यनन्तरं शब्दस्यावश्यकता मूर्तिमतिजगति जायते। सर्वान्तेभगवतः सूर्यस्य क्रम इति।

## पंचदेवतानां भेदाभेद-विमर्शः

नास्त्यत्रसन्देहो भारतीय-संस्कृति-विदाम् यदत्र संस्कृतौ एकत्वेऽनेकत्व-मनेकत्वेचैकत्वम् स्फुटम्। इदमेवास्य वैशिष्ट्यं विश्व-संस्कृति-सभ्यतयोरुर्ध्व-जायमानमिव राजते। तथा चोक्तं वाक्यपदीये—

एकमेव यदाम्नातं भिन्नं पृथगुपाश्रयात्।
अपृथक्त्वेऽपि शक्तिभ्यः, पृथक्त्वेनेवदृश्यते ॥१॥[४]

इन्द्रमित्रवरुणादय एकस्यैवांशाः। तथा चर्ग्वेदे

इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णः गरुत्मान्।
एकं सद्विप्राबहुधावदन्ति, अग्निर्यमं मातरिश्वानमाहुः ॥१॥[५]

अन्यत्रापि—

तदेवाग्निस्तद्वायुः तत्सूर्यः तत्तु चन्द्रमाः

---

१. असिद्ध मनःस्मृतौ १।६
२. श्वे० उपनिषदि ३।२
३. तत्रैव ३।७
४. वाक्यपदीय ब्र० काण्डे १
५. ऋग्वेदे १।६४।४६

तदेवशुक्रममृतं तद्ब्रह्म तद्वायुः तदापः सप्रजापतिः ।।२।।[१]

गणेशगीतायामपि पंचदेवानुपलक्ष्य—

शिवे विष्णौ च शक्तौ च सूर्ये मयि नराधिप ।
याभेदबुद्धिर्योगः स, सम्यग्योगो मतो मम ।।१।।
अहमेव महाविष्णुरहमेव सदा शिवः ।
अहमेव महाशक्तिरहमेवार्यमा प्रियः ।।२।।[२]

प्रकृतिपुरुषयोरिव शिवशक्त्योरभेदः —

शक्तिशक्तिमतोर्भेदं वदन्त्यपरिमार्थतः ।
अभेदं चानुपश्यन्ति, योगिनस्तत्त्वदर्शकाः ।।१।।[३]

हरि-शरणाष्टके—

ध्येयं वदन्ति शिवमेवहिकेचिदन्ये, शक्तिं गणेशमपरेतु दिवाकरवै ।
रूपैस्तु तैरपि विभासियतस्त्वमेकः, तस्मात्त्वमेवशरणं ममशंखपाणे ? ।।१।।[४]

यथैक एव पुरुषो विभिन्न-समयेषु पिता, शिक्षकः परीक्षकः निरीक्षकादिरुपाधिभेदेन भवति । तथैक एवेश्वर उपाधि-वशात् विभिन्ननाम भजते । कृषक एक एव लावकः पालकः वप्ता च । एक एवेश्वरः सर्गस्थिति-प्रत्यवहारेषु विभिन्नाःसंज्ञाः भजते ।

यथाप्राग्व्यापकः क्षेत्रेपालकः लावकस्तथा,
तथा स संज्ञां याति ब्रह्मविष्ण्वीशकारिणीम् ।
ब्रह्मत्वे सृजते लोकान्, रुद्रत्वे संहरत्यपि ।
विष्णुत्वे चाप्युदासीनः तिस्रोऽवस्था स्वयम्भुवः ।।१।।[५]

यः कोऽपि शिवविष्ण्वोः श्री-गौर्योश्चान्तरं पश्यति ससूढस्तथा चस्कान्दे—

विष्णुरुद्रान्तरं चैव, श्रीगौर्य्यौर्येरन्तरं तथा ।
गंगागौर्योरन्तरं चैव ब्रूतेयो मढधीस्तु सः ।।१।।[६]

हरिहरयोः प्रत्ययभेदो न प्रकृतिभेद उभयत्रापि 'हृ' धातु सत्वात्—

हरिहरयोः प्रकृतिरेका, प्रत्ययभेदेन रूपभेदोऽयम् ।
एकस्यैव तत्स्यानेकबिधा, भूमिका-भदात् ।।१।।[७]

---

१. नासदीप्रीये १।७
२. गणेशगीतायाम् १।२०-२२
३. ललितासहस्रनाम्नि ३
४. बृहत्स्तोत्ररत्नाकार हरिशरसाष्टके पृ० ७९
५. मार्कण्डेये पु० १८।१८
६. स्कन्दे पु० काशी खंडे २७।४
७. शिवपुराणे ७।३

अत्र विषये वृहद्धर्मपुराणेमार्मिकी कथैकाऽयाति। एकदा भगवान्विष्णुः कोटिचन्द्रप्रकाशंशूलंपाणिं शिवं स्वप्ने दृष्ट्वा सहसा जजागार। सपत्नीकः शिवंद्रष्टुं प्रचलितो मार्गे उमया सार्द्धमागच्छताशिवेनमिलित परस्परमालापो जातोविष्णुः शिवंवैकुण्ठ-गमनाय प्रार्थयत् शिवश्चतं कैलासाय। प्रेमपूर्णयोः उभयोरालापे सहसा कुतो नारद आययौ। तौस्तोतुमरिभे। तदा निर्णयार्थमुमा नियुक्ता सा च प्राह।

याद‍ृशीदर्शिता प्रीतिः युवाभ्यांनाथ केशव।
मन्ये तथा प्रमाणेन न भिन्नवसतीयुवाम्॥१॥[1]

शिवपुराणे चापि यत्र तत्र सर्वमैक्यं प्रतिपादितम्।

ममैवहृदयेविष्णुः विष्णोश्च हृदये ह्यहम्।
उभयोरन्तरंयो वै जानाति सतुभ्रमः॥१॥[2]

दक्ष-यज्ञ विनाशानन्तरं ब्रह्मणा सह कैलासमागतेषु देवेषु भगवन्तं शंकरमभिष्टुवत्सु स्वयं विष्णुराह—

अहं ब्रह्मा च शर्वश्च, जगतः कारणं परम्।
आत्मेश्वर उपद्रष्टा, स्वयंदृगविशेषणः॥१॥
आत्ममायां समाश्रित्य, सोऽहं गुणमयीं द्विजः।
सृजनरक्षन्हरन् विश्वं, दध्रेसज्ञांक्रियोचिताम्॥२॥[3]

पद्मपुराणेऽपि—

सृष्टौ विधातृरूपस्त्वं, पालनेत्त्वं प्रभामयः।
प्रलयेजगतां साक्षादहं शर्वाख्यतां गतः॥१॥[4]

शिवशक्त्योरेक्यं—

एवं परस्परापेक्षा, शक्तिशक्तिमतोः स्थिता।
नशिवेन विनाशक्तिर्न चशत्त्याविनाशिवः॥१॥[5]

शक्तिविष्ण्वोरैक्यम्—

विरंचिःसृष्टिकर्ताहं, जगद्धाताहमच्युतः।
रुद्रःसंहारकर्ताहं, सर्वविश्वविमोहिनी॥[6]

---

१. वृहद्धर्मपुराणे पू० ख० ६।१०
२. शिवपुराणे ६।५५।५६
३. भागवतपुराणे ४।७।५०।५१
४. पद्मपुराणे पा० खण्डे २८।१
५. शिव वा० स० उत्त० खण्डे ४
६. शिव पुराणे उ० ४८।३०

रुद्रहृदयोपनिषदि—

या उमा सा स्वयं विष्णुः, येऽर्चन्तिहरिभक्त्या ।
तेऽर्चयन्ति वृषध्वजं, पुंलिंगं सर्वमीशानः ।।
स्त्रीलिंगं भगवत्युमा, व्यक्तं सर्वमुमारूपम् ।
अव्यक्तं तु महेश्वरः उमाशंकरयोर्योगः ।
स योगो विष्णुरुच्यते ।।२।।[1]

निरुक्ते च—महाभाग्याद्देवतायाः एक आत्मा बहुधा स्तूयते[2]

अन्यत्र च—रूपं रूपं मघवा बोभवीतिमायाः कृण्वानस्तन्वंपरिस्वात्
त्रिर्यद्दिवः परिमुहुर्त भागात्स्वै मन्त्रैरनृतुपा ऋतावा ।।[3]
पुरुष एवेदं यद्भूतं यच्च भाव्यम् ।[4]

निरुक्ते च—अग्निः पृथिवी स्थानो वायुर्वेन्द्रोवाऽन्तरिक्षस्थानः सूर्यः
द्युस्थानः तासां महाभाग्यादेकैकस्या बहूनिनामानि ।[5]

अत्र दुर्गादास—एकैकस्या प्रतिविकार जातवेदाः वैश्वानरः
वरुणः रुद्रः अश्विनौ उषा इत्येवमादीनि बहूनि नामधेयानिसन्ति ।

शिवसूर्ययोरैक्यं—

"आदित्यं च शिवंविद्यात्, शिवमादित्य-रूपिणम् ।
उभयोरन्तरं नास्ति, ह्यादित्यस्य शिवस्य च ।। १ ।।[6]

सूर्यविष्णुशिवैक्यम्—

"एषब्रह्मा च विष्णुश्च, रुद्र एषहिभास्करः ।
त्रिमूर्त्यात्मा त्रिदेवात्मा, सर्वदेवमयोरविः ।।[7]

महाभारते—

"त्वामिन्द्रमाहुस्त्वंरुद्रस्त्वंविष्णुस्त्वं प्रजापतिः ।
त्वमग्निस्त्वं मनःसूक्ष्मं, प्रभुस्त्व ब्रह्मशाश्वतम् ।। १ ।।[8]

विष्णुसूर्यगणेशरुद्रैक्यम्—

"त्वं ब्रह्मा त्वं विष्णुः त्वं रुद्रः त्वमिन्द्रः ।
त्वमग्निः त्वं सूर्यः, चन्द्रमास्त्वं भूर्भुवः स्वरोम् ।।"[9]

---

१. शिवपुराणे स० हृ० उप० १६
२. निरुक्ते ७।४।८
३. ऋग्वेदे ३।३।२०।३
४. निरुक्ते ७ ५।२-३
५. तत्रैव
६. शिवपुराणंके, गीता प्रेस, गोरखपुर, पृ० ६३३, शिवपुराणतः
७. सूर्यतापिन्युपनिषत्. भारतीय प्रतीकविद्या, पृ० १६३, पटना से प्रकाशित
८. युधिष्ठिर कृत सूर्यस्तोत्रे १६३
९. गणेशोपनिषद् ६ पृ० १७, पारडीमूख प्रकाशन

शिवशक्ति-गणेशैक्यन्तु, अंशाशिनोरभेदत्वेऽपिसिद्धम्।

इत्थं च निर्विवादमेवयत्पंचदेवाः विष्णु-शिवशक्ति-गणेशसूर्याः इमे च पंच-त-त्वानां प्रतीकाः—

"मानवानां" प्रकृतयः पंचधा परिकीर्तिताः।
यतो निरुच्यते सर्गः पंच भूतात्मके-बुधैः ॥ १ ॥
भिन्नायद्यपि भूतानां, प्रकृतिः प्रकृतेर्वशात्।
तथापि पंचत-त्वानामनुसारेण त-त्ववित् ॥ २ ॥
प्रमेय-त-त्व प्राचुर्य विमृष्य विधिपूर्वकम् ।
उपासनाधिकारस्य पंचभेदमवर्णयत् ॥ ३ ॥[1]

## ५. स्वरूपम्—

वस्तुतस्तु लौकिक-वैदिकस्वरूपयोश्चर्चा तत्तदध्याये चर्चिष्यते। परमत्र-प्रतीकात्मकरूपेणाध्यात्मिकाधिदैविकाधिभौतिकरूपेण च स्वरूपं निरूपणीयं भविष्यति। प्रत्येकदेवतायाः रूपत्रयम् यद्रूपमिन्द्रियातीतं तदाधिदैविकम्। यच्च सगुणं तदाधिभौतिकं। इदं च गुणाभिमानिगुणनिमित्ताभिमानिरूपेण कार्यकारण-रहितं रूपमध्यात्मिकम्। एवंच पंचदेवतानामासाम् स्वरूपचर्चा रूपत्रयभेदेना-भीष्टा। प्रथमंतावत्पूर्वनिर्धारित-क्रमेण गणेश-स्वरूपमेव प्रस्तूयते।

### गणेशस्य—

योग-सूत्राणामध्ययनेन ज्ञायते यदिमाः पंचदेवताः साधारणरूपा अपितू-पासनमासां ब्रह्मोपासनमेव। उपासनं पंचविधंब्रह्मोपासनमेवैतत् पंचत-त्वेभ्य एव जनानां सृष्टिर्व्यक्तिभेदेन तेषांन्यूनाधिक्ये भवतः। अत एषां पूजने न ब्रह्मोपास-नमेव। तथा च पंचभूतानां पंचीकरण-प्रसंगे गौडपादाः—

विष्णुश्चिता यस्तु सताशिवसन् स्वतेजसार्कः स्वधिया गणेशः।
देवीस्वशक्त्या कुशलंविधत्ते, कस्मैचिदस्मै प्रणातः सदातम् ॥

ब्रह्मवैवर्तपुराणेऽकितम् यत्पार्वत्यास्तपः प्रभावेण श्रीकृष्ण एव गणेशत्वेनावतीर्णः।
ऋग्वेदे च—

गणानां त्वा गणपतिं प्रियाणांत्वांप्रियपति हवामहे[2]

हे वसो (वसति सर्वभूतेषु व्यापकत्वादिति वसुस्तत्सम्बद्धौ) गणानां महदादीनां, अन्येषां वा समूहानां। गणरूपेण साक्षीरूपेण ज्ञेयाधिष्ठानरूपेण वा। गण्संख्याने इत्यस्मात् गण्यन्ते बुद्ध्यन्ते गणास्तेयोगिभिः साक्षात्क्रियते यः स गण स्तद्रूपेण वा

---

१. कापिले, १, ५, ७
२. ऋग्वेदे ३।६।२६

पालकः एतादृशंत्वां ह् वयामहे। प्रियपतिं प्रियस्य पालकं तच्छेषतया सर्वस्य प्रेमास्पदत्वात् । निधीनां सुखनिधीनां पालकं त्वां ह् वयामहे आह्वयामहे । मदन्तः करणे प्रादुर्भूय स्वरूपानन्दसमर्पणेनममापि पतिर्भूयाः ।

पुनः हे देव अहं ते गर्भधं अजायां प्रकृतौ चैतन्यप्रतिबिम्बात्मकं गर्भं दधातीति गर्भधंबिम्बात्मकं चैतन्यं[1] । तथा च गीतायां—

मम योनिर्महद्ब्रह्म तस्मिन्गर्भं दधाम्यहम् ।
सम्भवः सर्व-भूतानां ततो भवति भारत ।।[2]

आ आकृष्य योगबलेन अजानिः स्वहृदिस्थाप्यानि त्वं चमम हृदि अजासि क्षिपसि स्वरूपं स्थापयसि ।

इत्थंचमन्त्रप्रतिपाद्यः गणेशः विघ्नानां निहन्ता त एव गणेशार्थवशीर्षोपनिषदि विघ्ननाशिने शिवसुताय वरदमूर्तये नमः[3] । इत्युक्तम् भगवान् गणेशोब्रह्मरूपः त्वमेव प्रत्यक्ष तत्वमसिकतघितहिर्ता त्वमेव सर्वखल्विदं ब्रह्मासि त्वंसाक्षादात्मासि ।[4] तुलनाछान्दोग्योपनिषदा—'त्वं प्रत्यक्षतत्वं असि, त्वं सर्वंब्रह्मासि, त्वंसाक्षादात्मासि'[5] सर्वखल्विदंब्रह्म[6] अहमेवेर्दसर्वसएवेदंसर्वम्[7] इदं सर्वं यदयमात्मा[8] सर्वाणि भूतानि आत्माएव ।[9]

स्तोत्रेष्वपि परब्रह्मरूपः, चिदानन्द-रूपः गणेशः स्मृतः
परब्रह्मरूपं चिदानन्दरूपं परेशंमहेशंगुणब्धि गुणेशम् ।
गुणातीतमीशंमयूरेशवन्द्यं नताःस्मो नताःस्मो, नताःस्मो नतास्म ।।[10]
गणपतिस्तवे अजं निर्विकल्पंनिराकारमेकं, निरायन्दमानन्दमद्वैतपूर्णम् ।
परंनिर्गुणं निर्विशेषं निरीहं, परब्रह्मरूपं गणेशं भजामः ।।[11]
प्रतीकं चास्योंकारः स्वस्तिक, उद्धर्वभागः शिरोऽधाभागमुदरोनादस्तुण्डो बिन्दुर्मोदकः ।

---

१. भगवत्तत्वे, करपात्री जी वाराणसी, ६४५
२. श्रमद्भगवद्गीता १४।३
३. गणेशोपनिषदि सूरत, ६।१०
४. तत्रैव १।१
५. तत्रैव १।१
६. छान्दोग्योपनिषदि ३।१४।१
७. तत्रैव ५।२।६, ७।२५।१
८. वृहदारण्यकोपनिषदि २।४।६
९. ईशोपनिषदि ७
१०. वृहस्तो रत्नाकरे, ययूरस्तोत्रे १
११. तत्रैव,गणपतिस्तवे १

## आध्यात्मिकरूपम्

गणानां पतिः गणपतिः । गण शब्दश्च गण समूहे धातोरचि सिद्धयति । गणशब्दांभिधेयः समूहः साधारण समुदायो न अपितु देवतानां, महत्तत्त्वानामहंकारादीनां समूहः । एवंच महत्त-त्वानां सृष्टित-त्वानांब्रह्मादीनां चपतिः गणशब्दस्यार्थोमौद्गलपुराणेदृश्यादृश्य रूपकंसर्वं मनोवाक्जंगकारः मनोवाणीविहीनोणकारः तथा च—

मनोवाणीमयं सर्वंदृश्यादृश्यस्वरूपकम् ।
गकारात्मकमेवंतत् तत्र ब्रह्मगकारकः ।।१।।
मनोवाणीविहीनंच, संयोगायोग-संस्थितम् ।
साकारात्मक-रूपं तत्, साकारस्तत्र संस्थितः ।।२।।

अतएव गजास्योऽयं कथ्यतेऽस्य मुखंगजास्यम् शरीरं नरस्य । गजश्च ब्रह्म । यतः गम्यते प्राप्यते योगिजनैरितिमः यतो जगदिदंजायते सः जः (यस्मात् बिम्बतया प्रणवात्मकं जगत् जायते । अतोऽस्योर्ध्वभागः निरुपधिब्रह्म रूपः । अधोभागः नरात्मकः सोपाधिखं मायोपहितेब्रह्म तत्वमसीतिमहावाक्यदृष्ट्यास्यशिरस्तत्पदार्थेऽधोभागस्त्वं पदार्थः । असिक्रियया प्रतिपाद्यप्रतिपादकभावः सम्बन्धः ।

उपनिषद्यपि गणेशो वाङ्मयश्चिन्मयआनन्दस्वरूपः सच्चिदानन्दाद्वितीयः ज्ञानविज्ञानमयःकथितः, तथा च—"त्वं वाङ्मयः चिन्मयः । त्वमानन्दमयः त्वं ब्रह्ममयः त्वंसच्चिदानन्दाद्वितीयोऽसि त्वं प्रत्यक्षं ब्रह्मासित्वं ज्ञानमयविज्ञानमयोऽसि ।"[1]

## आधिभौतिकरूपम्

ब्रह्मवैवर्तमौद्गलवायु-भविष्य-सौरादिपुराणेषु महानिर्वाण-डामरादितन्त्रग्रन्थेषु[2] च[3] गणेशस्य[4] विचारः[5] कृतः[6] हिन्दीभाषायामपि गणेश[7],-समन्वय किन्तु-भगवत्तत्वपुराणविमर्श-भारतीय-प्रतीक-विद्यादिषु विचारः जातस्तत्र पाश्चात्यविदुष्या ए गेट्टीश्रीमत्याऽपि पुस्तकमेकं व्यलेखि । अस्यपूजनंवृहत्तरभारतेप्रसृतमस्ति । स्थानभेदान्मूर्तिभेदः । अयं गजेन्द्रमुखो विघ्नदारको,

---

१. गणेशार्थवशीर्षोपनिषदि (पारडी) ४।४
२. डा० सम्पूर्णानन्दः
३. डा० भगवानदासः
४. आ० माधवः
५. श्री करपात्री
६. आ० बलदेव उपाध्यायः
७. डा० जनार्दन झा

भुजेषु पाशाङ्कुशवराभीतिधारकः

गजेन्द्रवदनं नौमि, रक्तं विघ्न-विदारकम्।
पाशाङ्कुशवराभीतिलसद्भुजचतुष्ट्यम् ।।१।।[1]

कृतेऽयंसिंहगतः दिग्बाहुस्त्रेतायां मयूरवाहनः षड्बाहुः द्वापरे गजाननश् चतुर्भुजः कलौ तु द्विभुज सिताङ्ग-रुचिरः सर्वार्थदः तथा च—

ध्यायेत्सिंहगतंविनायकमुंदिग्बाहुमाद्ययुगे,
त्रेतायांतु मयूरवाहनममुं षड्बाहुकं सिद्धिदम्।
द्वापरेतु गजाननं युगभुजं रक्तांगरागं विभुम्,
तुर्येतुद्विभुजंसितांगरुचिरं सर्वर्थिदं सर्वदा ।।१।।[2]

शक्तयः

क्रम-प्राप्त-मधुना शक्तेः स्वरूपं विविच्यते। पुरुषेषु यथा विष्णु शिवादीनां ब्रह्मरूपेणोपासनमभवति तथैव स्त्रीषु भगवत्या दुर्गायाः महाकाली-महालक्ष्मी महासरस्वतीरूपायाः तथा च—

पुरुषं वा स्मरेद्देवि स्त्रीरूपं वापिचिन्तयेत्।
अथवा निष्कलं ध्यायेत्, सच्चिदानन्दलक्षणम् ।।[3]

ब्रह्मणोरूपं निश्चितंनास्ति, न लिंगं न जातिः नवा वयः। यथा विद्युदेकाशक्तिः तस्याः किं रूपमिति निश्चेतुमशक्यम्। निमित्तभदेन भेदवती। ब्रह्मणाविषयेऽपि, इदमेववक्तुंशक्यते। अस्यउपासनं पितुः स्नेह-प्राप्तये पितृरूपेण मातुर्वात्सल्य-प्राप्तये मातृरूपेण। तथा च सौभाग्यभास्करे—

न त्वमम्बपुरुषो नचाङ्गना
चित्स्वरूपि न षण्डितापि ते।
नापिभर्तुरपिते त्रिलिंगता
त्वां विनानतदपि स्फुरेदयम् ।।[4]

महामायास्वरूपेयं नित्याजगन्मूर्ति वितनोति जगत्

नित्यैव साजगन्मूर्तिः, तया सर्वमिदं जगत्।
तथापि तत्समुत्पत्तिः, बहुधा श्रूयतां मम ।।[5]

जगति यत्किंचित्सदसदात्मकं सर्वमिदं। इयं गुणत्रयविभाविनी प्रकृतिरूपा। समेषां पदार्थानाम् शक्तिः। उपनिषदिसर्वान्देवान्स्वयमाह। तथा च—

---

१. कालीकवच २
२. गणेश कवच ध्यान श्लोकः
३. ललिता सहस्र नाम्नि श्लो० १७ टीकायां
४. सौभाग्य भास्करे, बाम्बे १८५७
५. दुर्गासप्तशती स्तोत्रे १।४५

देवी अहं ब्रह्म-स्वरूपिणी अस्या एव शून्यमशून्यं च रूपं जगत् ।[1]

## आध्यात्मिकंस्वरूपम्

भगवती अनिर्वाच्याकारणब्रह्मस्वरूपा सच्चिदानन्दापरात्परावर्णपद-वाक्यार्थरूपानादि-निधना नाम जात्यादिभिर्हीना हृदि संस्थिता स्वप्रकाशानिरा-लम्बाज्ञानतिमिरापहा तथा वृहस्पतिकृतस्तोत्रे—

सरस्वती नमस्यामि चैतन्यांहृदि संस्थिताम्
कण्ठस्थां पद्म-योनेश्च, ह्रीं ह्रींकार सुरप्रियाम् ।
ऐं ऐं मन्त्रप्रियां देवीं, कुमतिध्वंसकारिकाम् ।
स्वप्रकाशांनिरालम्बामज्ञान-तिमिरापहाम् ॥[2]
मन्त्राणांमातृकादेवी, शब्दानां ज्ञान-रूपिणी ।
ज्ञानाज्ञानोभयातीता, शून्याशून्यसाक्षिणी ॥१॥
यस्याः परतरं नास्ति, सैवदुर्गा प्रकीर्तिता ।
तां दुर्गा दुर्गमां देवीं, दुराचार-विघातिनीम् ॥३॥[3]

अन्यच्च—"अहमानन्दानामानन्दा, विज्ञानाविज्ञानेऽहम् ब्रह्मब्रह्मणीवेदितव्ये"[4] ब्रह्मविष्णु-शिवादि-रूपे भ्योभिन्नास्वविभूतिशक्तिसमेताब्रह्मणोऽभिनवारूपकल्पना इयं पराशक्तिः परब्रह्मात्मिकात्रिशक्तयः अस्याः नेत्राणि ज्योति-स्वरूपाः, सूर्याग्निचन्द्रमसोनेत्राणि । महिषासुर-मोहमधुकैटभादयः अविद्याः नाशयति ।

## भौतिकं रूपम्

भगवतीस्वतेजसा जगद्व्याप्नोतिपादाभ्याभुवमाक्रमते । धनुर्ज्यानिस्व-नेनाखिलं विश्वं क्षोभयति । तथा सप्तशत्याम्—

सदर्शततो देवीं व्याप्तलोकत्र यंत्विषा ।
पादाक्रान्त्या नतभुवं, किरीटोल्लिखिताम्बराम् ॥१॥
क्षोभिताशिषपातालां, धनुर्ज्यानिस्वनेनताम्
दिशो भुजसहस्रेण, समन्ताद्व्याप्यसंस्थिताम् ॥२॥[5]

क्वचिदष्टभुजादशभुजा, च कीर्तिता । विद्युद्दामसमप्रभासिंहाधिरूढा । दशदिशः दशभुजाः, तेषु दशदिग्पालानामस्त्राणि ।

---

१. देव्युपनिषदि २
२. वृहस्पति कृत सरस्वती स्तोत्रे ४५
३. देव्युपनिषद् १६ १८
४. तत्रैव, १६,१८
५. दुर्गासप्तशत्याम् २।३६।३८

## शिवस्य

आधिदैविकम्—

शिवः सर्वव्यापकः पूर्णब्रह्मवैदिक-साहित्ये रुद्रभवेशान-नामभिः स्मृतः भुवमस्य वर्ष्म ।

लोकधात्रीत्वियं भूमिः पादौ सज्जनसेविनौ,
सर्वेषांसिद्धयोगानां अधिष्ठानंतवोदरम् ॥१॥
मध्येऽन्तरिक्षं विस्तीर्णं तारागण-विभूषितम् ।
तारापथ इवाभाति, श्रीमान्हारस्तवोरसि ॥२॥
दिशादशभुजास्ते वै, केयूरांगद-भूषिताः ।
विस्तीर्णपरिणाहाश्च, नीलाम्बुद-चयोपमाः ॥३॥[1]

पृथिवीशिवस्य चरणे, यासिद्धानांनिवासभूमिः, तारागणभूषितं विस्तीर्ण-मन्तरिक्षं शिवस्योरः । तारापथश्चवक्षोहारः । दशदिशोऽस्य भुजाः । बृहदा-रण्यकेऽपि "नभशिरस्ते देवेश, त्रिनेत्राणि च वेदाः, "नमामि वेदत्रयलोचनंतम्[2] चन्द्रसूर्याग्नयोनेत्राणि । "इन्द्वर्कवह्नित्रिनेत्रम्"[3] सृष्टि-प्रवर्तनसंहार-कारिणी शक्तिः कालः सर्पः ।[4] अप्रमेयः क्रोधादयः सर्पाः ।

"अप्रमेयमनाद्यंच ज्ञात्वा च परमं शिवम्"[5] स्वरूपम् विविच्यते तत्रादौ दिगम्बरता—

जगतः कारणयविद्या जीवम् ब्रह्मत्वोपलब्धे निवारयति तस्याः लेशमात्र-मपि शिवे नास्ति यतः समष्टिव्यष्टिदेहत्रयप्रपंचेभ्यो व्यतिरिक्तोऽतएव दिगम्बर इति । तथा च—

निरावरणविज्ञानस्वरूपो हि स्वयं हरः ।
स्वैरं चरिति संसारे तेन प्रोक्तः दिगम्बरः ॥१॥[6]

चिदाभासे शरीरेऽहंममतया यत्कार्याणिभवन्ति तान्येव संचितप्रारब्ध-क्रियमाणभिधेयानिबन्धनरूपाणि भवन्ति ।

ज्ञानाग्निः-सर्वकर्माणि भस्मसात्कुरुते किल ।
तेनैव भस्मनागात्रमुद्धूलयतिधूर्जटिः ॥१॥

---

१. वायुपुराणतः २४।१५१-५७ल भारतीय प्रतींकविद्यायां घृतम् ।
२. ब्रह्मपुराणे १२३।२००
३. वेदसार स्तो० २
४. शिवस्तोत्रे ४
५. ब्रह्म वि० १४।५।२, शिवपुराणांके, पृ० ६११
६. शिवपुराणतः शिवपुराणांके, गीता प्रेस गोरखपुर, पृ० ६१२

भासतेभिन्नभावानामपि भेदो नभस्वति ।
स्वस्वभावस्वभावेन, भस्म भर्गस्यवल्लभम् ।।३।।[१]

जटाजूटम्—

भगवतः शंकरस्य जटाजूटम पंचम्यादि-भूमि-कारूढानां जीवन्मुक्तानां कृति-विश्रामस्थानम् वटवृक्षस्तथा च

विश्रामोऽयं मुनीन्द्राणां, पुरातनवटोहरः ।
वेदान्त-सांख्य-योगाख्याः, तिस्रस्तज्जट्यः स्मृताः ।।१।।[२]

वृषभवाहनः—ब्रह्माद्यायमनारूढास्तमारोहति शंकरः ।
समाधि धर्ममेधाख्यं, तेनायंवृषवाहनः ।।१।।[३]

अयमेव शिव-सूर्यचन्द्रपवनाग्निव्योमक्षितिरूपः । जगतितत्तत्त्वनास्ति यत् शिवात् भिन्नम्—

त्वमर्कस्त्वं सोमस्त्वमसि पवनस्त्वहुतवहः।
त्वमापस्त्वं व्योम त्वमु धरणिरात्मात्वमिति च ।
परिच्छिन्नामव त्वयि परिणता विभ्रतु गिरः ।
नविद्मस्तत्तत्वं वयमिह यत्त्वं न भवसि ।।१।।[४]

## आध्यात्मिकम्

भववांच्छिवः परात्परः कारणब्रह्मरूपः सच्चिदानन्दः सर्वेषा देवानाँ प्रथमो विश्वाधिपः तथा महानारायणोपनिषदि—

यो देवानां प्रथमं पुरस्तात् विश्वाधिपो महर्षिः ।
हरण्यगर्भपश्यज्जायमानः, सनोदेवः शुभयास्मृत्या युनक्तु ।।१।।[५]
ऋतसत्यं परं ब्रह्म, पुरुषं-कृष्ण-पिंगलम् ।
उर्द्धवरेतस्विरुपाक्षः विश्वरूपाय वैनमः ।।१।।[६]

प्रकृतिरस्यमाया, अस्यावयव-सम्भूतैरिदं जगत्परात्परम ईश्वराणमीश्वरस्तथा चोपनिषदि—

तमीश्वराणां परमं महेश्वरं, तं देवतानां परमं च दैवतम् ।
पतिं पतीनां परमं परस्तात्, विदाम देवंभुवनेशमीड्यम् ।।१।।[७]

---

१. तत्रैव
२. तत्रैव
३. तत्रैव
४. शिवमहिम स्तोत्रे २६ । बृहतस्तोत्र रत्नाकरे २७५
५. महानारायणोपनिषदि १२।१२, पृ० १६१
६. तत्रैव पृ० २१३।२३।१
७. श्वेताश्वतरोपनिषदि ६।७

अस्य स्वरूपवर्णने वाड्मनसीअक्षमे तथा च—

यतो वाचो निवर्तन्ते अप्राप्यमनसा सह ।
आनन्दं ब्राह्मणो विद्वान् न बिभति कुतश्चन ॥१॥[1]

अयं परः परमेश्वरो क्षरातीतः जडचेतनयोर्नियन्ता ।

अजडं जडं चैव नियन्तृ च तयोरपि ।
पशुः पाशः पतिश्चेति, कथ्यते तन्मयः क्रमात् ॥१॥[2]
अक्षरं क्षरं चैव क्षराक्षर-पदं तथा
तदेतित्रतयं नाम्ना कथ्यते तत्त्ववेदिभिः ॥१॥[3]

अधिभौतिकम्

वेदेऽन्यत्र च भौतिकरूपेण शिवस्य वर्णनम् क्वचिदग्नि रूपेण क्वचित्सूर्य-रूपेण, क्वचित्तुचिकित्सकत्वेन, क्वचित् भयंकरत्वेन च चर्चाऽस्ति । पंचमुखस्-त्रिनेत्रो रजत-गिरि-निभो वज्रदंष्ट्रः । तथा च—

बज्रदष्ट्रं त्रिनयनं कालकण्ठमरिन्दमम् ।
सहस्रकरमत्युग्रं बन्दे शम्भुमुमा-पतिम् ॥१॥[4]

शिवस्याष्ट-मूर्ति-विषये शिव-पुराणे वर्णितम् ।

तस्य शम्भोः परेशस्य, मूर्त्यष्टकमयं जगत् ।
तस्मिन्व्याप्यस्थितं विश्वं सूत्रैर्मणिगणा इव ॥१॥[5]

नामानि— शर्वोभवस्तथा रुद्रः उग्रोभीमः पशोःपतिः ।
ईशानश्च महादेवः मूर्तयश्चाष्ट विश्रुताः ॥१॥[6]

तत्वप्रतिनिधयः—भूम्यम्भोऽग्निमरुद्व्योमक्षेत्रज्ञार्कनिशाकराः
अधिष्ठिताश्च शर्वाद्ये रष्टरूपैः शिवस्यहि ॥१॥[7]
अभिज्ञानशाकुन्तले महानिर्वाण-तन्त्रे च ।

या सृष्टिः स्रष्टुराद्या वहतिविधिहुतं या हविर्या च होत्री ।
ये द्वे काल विधत्तः श्रुतिविषयगुणा या स्थिता व्याप्यविश्वम् ।
यामाहुःसर्ववीजप्रकृतिरिति, यया प्राणिनः प्राणवन्तः ।
प्रत्यक्षामिः प्रपन्नस्तनुभिरवतु वस्ताभिरष्टाभिरीशः ॥१॥[8]

---

१. तैत्तरीयोपनिषदि ९ ब्रह्मवल्ली
२. शिवपुराण ७।५।१२
३. तत्रैव ७।५।१३
४. शिव० का० वि १
५. शिवपुराण ३।२।२, पण्डित पुस्तकालय, काशी
६. तत्रैव, ३।२।३
७. तत्रैव, ३।२।४
८. अभिज्ञानशाकुन्तले कालिकाता ५वाँ संस्करण १९१४, अंक १।१

शर्वः क्षितिः समुद्दिष्टा भवोजलमुदाहृतः
रुद्रोऽग्निरुग्रो वायुः स्यात्, भीम आकाश शब्दतः ।।१।।
पशुपतिर्यजमानः, महादेवः सुधाकरः ।
ईशानः सूर्य इत्येते, मूर्तयोऽष्टौ प्रकीर्तिताः ।।२।।[1]

## विष्णोः

### आधिदैविकम्

'विष्लृ व्याप्तौ' धातोर्निष्पन्नो विष्णुशब्दोव्यापकार्थकः यः सर्वत्र व्याप्नोति स विष्णुरित्यर्थोऽस्मादेव सर्वजगत् जायते ।।

यस्माद्विश्वमिदं सर्वं तस्य शक्त्यामहात्मनः ।
तस्मात्स प्रोच्यते विष्णुः विशेर्धातोः प्रवेशनात् ।।१।।[2]

अयं विभुर्निर्मलः निर्विकल्पः निरीहः निराकार ओंकाररूपः तथा च ।। पंचदशर्चविभुं निर्मलं निर्विकल्पं निरीहं निराकारमोंकार वेद्यम्[3] एक एवविष्णुः प्रधानात्मा विष्णुशिवादिसंज्ञाः भजते ।

भूतात्मा चेन्द्रियात्मा प्रधानात्मा तथा भवान् ।
आत्मा च परमात्मा च त्वमेकः पंचधा स्थितः ।।१।।
प्रसीद सर्व सर्वात्मन् क्षराक्षरमयेश्वर ।
ब्रह्मविष्णु-शिवाद्याभिः, कल्पनाभिरुदाहृतः ।।२।।[4]

अस्य श्यामवर्णशरीरं ब्रह्मत्वप्रतिपादकं, 'आकाशशरीरं ब्रह्म'[5] दिशोबाहवः (यस्येमाः प्रदिशः यस्य बाहू कस्मैदेवाय हविषाविधेम)[6] पुराणेष्वपि बाहवः ककुभो नाथ[7] तथा चान्यत्र दिशश्चतस्रो-प्यथबाहवस्ते[8] अस्त्राणि चास्यत्रिगुणात्मकानां चतसृणाम् शक्तीनां प्रतिपादकानि ।

ज्ञानाहंकारकैश्वर्य-शब्दब्रह्मासिकेशव ।
चक्रपद्म गदाशंख परिणामानि धारयन् ।।१।।[9]

एवमेवान्येषांविष्णु-शरीर-स्थानां वस्तूनां प्रतीकानि तथा च ।

---

१. महानिर्वाण तन्त्रे १४।७।७६ काक सम्पादित श्रीनगर
२. विष्णुपुराणे ३।१।४६
३. विष्णु पु० १
४. विष्णुपुराणे ५।६।५०।५१
५. तैत्तरीय उपनिषदि १, ५, २
६. ऋग्वेदे १।१२१।४
७: स्कन्दपुराणे काशी खण्ड २७।४२
८. वायुपुराणे २४।१५३। पूना
९. स्कन्दपुराणे वि० ख० १०।३२

श्रीवत्सस्य स्वरूपेतु वर्तते लाञ्छनैः सह ।
श्रीवत्सलक्षणं तत्स्मात्कथ्यते ब्रह्मवादिभिः ॥१॥
ये सूर्याग्निवाक्चन्द्र-तेजसा स्वस्वरूपिणा ।
वर्तते कौस्तुभाख्यमर्सि वदन्तीशममानिनः ॥२॥
सत्यं रजस्तम इति ग्रहंकारश्चतुर्भुजः ।
पंचभूतात्मकंशखं करेरजसि संस्थितम् ॥३॥
बालस्वरूपमत्यन्तं मनश्चन्द्रो निगद्यते ।
ग्राद्यामाया भवेच्चागं, पद्म विश्वकरे स्थितम् ॥४॥
ग्राद्या विद्या गदा वेद्या सर्वदास्य करे स्थिता ।
धर्मार्थकामकेयूरै दिव्यैर्दिव्यमयेरितैः ॥५॥
कण्ठं तुनिर्गुणंप्रोक्तं, भात्यंते ग्राद्यया जया ।
माला निगद्यते ब्रह्म तवपुत्रैस्तु मानसैः ॥६॥
कूटस्थसत्वरूपंच किरीटं प्रवदन्ति माम् ।
क्षरोत्तरं प्रस्फुरन्तं कुण्डलं युगलस्मृतम् ॥७॥[1]

पीताम्बरं चास्य पृथिव्याःपीतवर्णरूपम् । वैजयन्तीविषयेऽपि ज्ञेयम् ।

नानारत्नमयीमाला, विद्युत्कोटिसमप्रभा ।
पंचाशन्मातृकावर्णा, सहिताविश्वमोहिनी ॥१॥
तत्राश्चर्यं महेशानि, वर्णितुं नहि शक्यते ।
ग्रकारादि-क्षकारान्ता, पंचाशन्मातृकाव्यया ॥२॥
ककारात् परमेशानि कोटिब्रह्माण्डराशयः ।
प्रसूय तत्क्षणात्सर्वं संहारं च तथापिवा ॥३॥
एवं क्रमेण देवेशि पंचाशन्मातृका सदा ।
सृष्टि-स्थितिं च कुरुते, संहारंच तथा प्रिये ॥४॥
रहस्यं परमं गुह्य पंचाशत्तत्वसंयुतम् ।
कलावती महामाला, मम कण्ठे सदा स्थिता ॥१॥

## ग्राध्यात्मिकम्

परात्परं ब्रह्म निर्गुणोऽव्यक्तस्तुरीयो निर्विकल्पो निराकार ग्रोंकार रूपः । तथा च ।

गुणातीतमव्यक्तमेकंतुरीयं परं ब्रह्म यं वेद तस्मै नमस्ते ।[3]

---

१. गोपालतापिन्युपनिषद, २२-२८
२. रावणतन्त्र पटले ३।२१-२
३. वि० भ० प्र० १

अस्य स्वरूपमभिधानं चानिर्वचनीयं नामजात्यादि-कल्पनास्तत्र न सन्ति। ब्रह्मविकारजं परं ब्रह्म कृष्णाच्युतानन्त-संज्ञादिभिरीड्यते। तथा च

अनाख्येयस्वरूपात्मन् अनाख्येयप्रयोजन।
अनाख्येयाभिधानं त्वाम्, नतोऽस्मि परमेश्वर॥१॥
न यत्र नाथ विद्यन्ते नाम जात्यादिकल्पनाः।
तद्ब्रह्मपरमं नित्यमविकरि भवानज॥२॥
न कल्पनामृते सर्वस्याधिगमोयतः।
ततः कृष्णाच्युतानन्त, विष्णु.संज्ञाभिरीड्यते॥३॥[१]

निर्गुणत्वादनन्तपादहस्तः तथा च वेदे सहस्रशीर्षापुरुषः।[२] पुराणे च अनन्तपादं बहु-हस्तनेत्रम्।

अनन्तकर्णं ककुभौघवस्त्रम्॥[३]

आकाशतत्त्वस्याधिपोविष्णुराकाशतत्त्वस्य स्थूलरूपं दृष्टिगोचरतां नायाति। एवमेव विष्णोः रूपम्॥

## आधिभौतिकम्

ब्रह्मण एकस्यैव सृष्ट्यादि-कर्म कर्तुं रूपकल्पना। तथा च—

सृष्टिस्थित्यन्तकरणात् ब्रह्मविष्णुशिवाभिधाम्।
स सज्ञां याति भगवानेक एव जनार्दनः॥१॥
स्रष्टा सृजति चात्मानं, विष्णुः पाति स्वयमेव च।
उपसंह्रियते चान्ते संहर्ता च स्वयं प्रभुः॥२॥[४]

अस्य युगकर्मानुरूपा विविधवर्णाः शुक्लो रक्तयः पीत-कृष्णादयः। "शान्ताकारं भुजगशयनं...गगनसदृशं"[५] अत्र श्यामवर्णोऽन्यत्र च "शुक्लाम्बर—धरो विष्णुः शशिवर्णं"[६] भागवते श्रीकृष्णजन्मनि गर्गः—

आसन् वर्णास्त्रयोह्यस्य गृह्णतोऽनुयुगं तनुः।
शुक्लोरक्तस्तथा पीत इदानीं कृष्णतांगत॥१॥[७]

चतुर्भुजः क्वचिद्दशबाहुरपि कथितः, "दशबाहुर्महातेजा"[८] तमोगुणा-

---

१. विष्णु ५।१।५२-५४
२. शुक्लयजुर्वेद ३१।१
३. स्कन्दपुराणे वि० खन्डे १६।४४
४. विष्णुपुराणे १।२।६२-६३
५. विष्णुसहस्रनाम ध्यान श्लोक:
६. श्रीमधुसूदन कृत भक्तिरसायने २
७. भागवते १०।८।१३
८. ब्रह्मपुराणे २२६।१२ पूना संस्करण

भिमानिनोऽस्य द्विभुजत्त्वमपि वर्णितम् । तथा च—

देव वेदिकासने समासीनं द्विभुजं चतुर्भुजं वानीलाभम् ।
श्यामवस्त्रधरं तमो गुणान्वितमुर्ध्वाक्षम् ।।[१]

## सूर्यस्य

आधिदैविकरूपम्—

भगवान्सूर्योविभुशक्तेः प्रतीकः परमात्मनोविग्रह इति श्रुति-स्मृति-पुराणतन्त्रसम्मतम् । तथा च—

"य आदित्येतिष्ठन् आदित्यादन्तरो यं वेद न वेद यस्यादित्यः शरीरं य आदित्यमन्तरो यमयत्येषतआत्मानमव्ययमृतम्"[२]

य आदित्ये विराजते आदित्यादभिन्नो यमादित्यो न वेत्ति । आदित्यो यस्य शरीरं य आदित्ये तिष्ठन् नियन्त्रणं करोति । स एव अविनाशी आत्मा । सूर्योपनिषदि च—

"सूर्याद्वैखलु इमानि भूतानि जायन्ते सूर्यो यज्ञः पर्जन्यः अन्नमात्मा नमस्ते आदित्य । त्वमेव प्रत्यक्षं विष्णुरसि । त्वमेव प्रत्यंक्ष रुद्रोऽसि । त्वमेव प्रत्यक्षं ऋगसि, त्वमेव प्रत्यक्षं यजुरसि । त्वमेव प्रत्यक्षं सामासि त्वमेव प्रत्यक्षमर्थवासि । त्वमेव सर्वछन्दोऽसि । आदित्याद्वायुर्जायते । आदित्याद्भूमिर्जायते । आदित्यादापोजायन्ते । आदित्याज्ज्योतिर्जायते । आदित्याद् व्योम...असावादित्योब्रह्मेति"[३]

एवंच सूर्यादेव पंचमहाभूतानि जायन्ते । ब्रह्मविष्णुरुद्रादयोऽस्मादेव । जगत्सर्वमस्मादेव । तथा च

सूर्यमण्डलमध्यस्थां देवीं त्रिपुर-सुन्दरीं ।
पाशांकुधनुर्वाणहस्तां, ध्यायेत्साधकः ।।१।।[४]

आध्यात्मिकम्—

भगवान्सूर्यो येन रूपेण तमो नाशयति तदस्य भौतिकं रूपं । यच्चकारणात्मकं तदाधिदैविकं । यच्चकार्य-कारणातिरिक्तंम् तदस्याध्यात्मिकं रूपम् । वेदे "उत् उत्तर उत्तम" शब्दैरस्यकथनम् । "सूर्य आत्मा जगतस्तस्थुषश्च"[५] अन्तरात्मा शब्दः भौतिकरूपद्योतकोनास्ति । तथा च—

---

१. एलिमेण्ट्स ऑफ हिन्दू इक्नोग्राफी, मद्रास, पृ० २२
२. वृहदारण्यकोपनिषदि ३।७।८
३. सूर्योपनिषदि अप्रकाशित, भा० प्रतीकविद्या १६३, डा० जनार्दन झा
४. ललिता-सहस्रनाम ११६
५. ऋग्वेदे १।११५।१

उद्वयं तमसस्परि-ज्योतिः पश्यन्त उत्तरम्,
देवं देवत्रा सूर्यमगमन्मा ज्योतिरुत्तमम् ॥१॥[1]

विष्णुशिववदस्यापिलिंगम्।

अखण्डमण्डलाकारं, व्याप्तं येन चराचरम्।
गगनलिंगमाराध्यं, त्वां सूर्य प्रणामाम्यहम् ॥१॥[2]

**आधिभौतिकं**

भगवतस्सूर्यस्य वर्णो हरितः स्वर्णिमश्च। तथा च

नमोवेदान्त-वेद्याय सर्वकर्मादि-साक्षिणे।
नमो हरित-वर्णाय, सुवर्णाय नमो नमः ॥१॥[3]

अस्य रथं सप्ताश्वा-वहन्ति। तेषां नामानीत्थम्।

जयो जयश्चविजयोजितप्राणोजितश्रमः।
मनोजवः जित-क्रोधो, वाजिनः सप्त कीर्तिताः ॥१॥[4]

बालखिल्यमहर्षीणाम् षष्ठिसहस्रमिमं स्तुवन्ति।

बालखिल्याः सहस्राणि, षष्ठिब्रह्मर्षयोऽमलाः।
पुरतोऽभिमुखं यान्ति स्तुवन्ति स्तुतिभिर्विभुम् ॥१॥[5]

द्वादशमासेषु स्वविभूतिभिर्विभिन्न नामभिस्तपति ॥[6]

## (ग) किन्नामस्तोत्रत्त्वम्

### १. उपक्रमः

भारतीय-संस्कृतेर्वास्तविकंरूपं जनमानसं वा स्फुटरूपेण चेत्कुत्रापि समुपलभ्यते। तर्हि स्तोत्रेष्वेव। यथा बालाः यत्किंचित्प्राप्तुकामाः दुःखितास्ताडिताः पीडिताः वा पितराअभिवीक्षन्ते तथा भक्त-जना-आर्ताः जिज्ञासवोऽर्थार्थिनो ज्ञानिवो वा परात्परं पितरं परमातमनम्। तथा च गीतायाम्—

चतुर्विधाः भजन्ते मां जना सुकृतिनोऽर्जुन।
आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥१॥[7]

---

१. तत्रैव १।२०।१०
२. सूर्यस्तोत्रे १
३. आदित्यहृदय स्तोत्रे ५३
४. तत्रैव १२१
५. भागवतपुराणे १२।११।४६
६. तत्रैव १२।११।३
७. श्रीमद्भगवद्गीता ६।१७

"कौपीनवन्तः खलु भाग्यवन्त" इत्यस्य सत्यं स्वरूपम् पूज्यभगवत्पादानां शंकराचार्यणामन्येषां भक्त-जनानां चस्तोत्रेष्वेव येतिरस्कृत-विषय-विकाराः परमं प्रमोदमात्मरतौएवान्वभवन् ।

"न मन्त्रं नोयन्त्रं"[१]...इतिव्याहरन्तो जना अद्यापिसन्तोषं विन्दन्ति। स्तोत्रं न केवला भक्तिः पूजा वा। किन्त्विदं मानसविचारतरंगाणां बहिर्भूतं ध्वन्यक्षरमयं रूपम्। स्तवनकर्तृत्वशक्तिश्चाभ्यासेनोत्पादयितुं शक्या। बहवो व्यावहारिकरीत्या परम्परया च स्तोत्रमाचरन्ति न नैष्ठिक-रीत्या। चेत्कोऽपि स्वाभाविक-प्रवृत्या स्तोत्रमाचरति तर्हि निस्सन्दिग्धमप्राप्यमपि प्राप्तुमर्हति। परमात्मानमपि साक्षात्कर्तुं प्रभुर्भवति।

भक्त्या त्वनन्यया शक्योऽहमेवंविधोऽर्जुन।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप ॥१॥[२]

सर्वेजनाः सुखार्थमेव यतन्ते, परं न ते सुखं दुःखादुपरमं वा अधिगच्छन्ति अतएव "अनित्यमसुखं लोकमिमम्प्राप्यभजस्व मामित्युक्तम्"[३] मुक्तिमिच्छसिचेत्तात विषयान्विषवत्त्यजे[४] तिअष्टावक्रगीतायां च। पुरा तु मयूरनामा कविः सूर्यशतकेनं सूर्यं स्तुत्वा नीरूक् जात इति नापरिचितं काव्यशास्त्रविदाम् स्वकीयेनानुभवेन वच्मि यद्बहवो जनाः ये न केनाप्युपचारेणे नीरुजः जातास्ते स्तोत्रैः कृतार्थीकृताः।

यथा दूरभाषक (टेलीफून) यन्त्रेण दूरस्थान् वक्तुं टेलीविजनयन्त्रेण साक्षात्कर्तुं च सामर्थ्यभाग्भवतिजनः। एवमेव स्तोत्रे तास्ताः देवताः वक्तुं समर्थो भवति जनः। अनया त्रिबिघा शक्तिर्बर्धते। मूको वाचस्पतीयते निर्बलोऽपि सबलायते। नास्य शक्तिर्प्रयत्नशतैरपि वैज्ञानिक-साधनैः प्रमापयितुं शक्यते। संगीतात्मकया अनयोच्चारिततया सर्वप्राप्तिः सुकरा। अज्ञाताविचिन्त्याग्राह्य-शक्ति-स्रोतसा सम्बन्धः स्थाप्यतेऽनया।

महर्षयोऽपि लोकानुज्जिघृक्षयैवैतेषु पुराणेतिहासादिषु तत्र तत्र शैववैष्णव-वैनायक-सारस्वतादीन्यनेकानि स्तोत्राणि परिजगुः स्तोत्रैश्च सर्वे तृप्यन्ति। लोकेजनैः स्वाभीष्ट सम्पादनाय स्वाम्यादयः स्तूयमानाः दृश्यन्ते। वेदेष्वपीन्द्रादय-स्तत्र तत्र स्तूयन्ते।

यद् दधाव इन्द्रते शतं शतं भूमिरुतस्थुः।
नत्वा वाजिनः सहस्रंसूर्याः अनु न जातमष्टरोदसी ॥[५]

---

१. देव्यपराध क्षमापनस्तोत्रे १
२. गीतायाम ११।५४
३. तत्रैव ८।३३
४. अष्टावक्रगीतायाम ५
५. तैत्तरीय संहितायाम् २।४।१४

त्वंसोमासि सत्पतिः त्वं राजोत वृत्रहात्व भद्रोऽसि सत्क्रतुः ।[1]

स्तोत्रेण प्रसन्नैर्देवै स्वाभिलषितं पूरयन्ति तथा च "स एवैनं भूमिं गमयति"[2] तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति ।"[3]

किंच स्तोत्रैरसाधरणैस्स्तूयमानस्य स्वरूपं परिचीयते। चेतोऽवस्थिति-श्चतत्तत्स्वरूपः परिचयेनैव भवति । गुणैः सहस्रशः स्वरूपे निरुपितैस्तुत्यस्या साधारण-परिचयात् तत्सौख्यातिशयेनान्यत्रानासक्तं चित्तंतत्रैव निलीयते। तदनुगुणतया क्रमशो विषयेभ्यो विनिवृत्तं मनः स्तुत्येकनिष्ठस्य परिचितगुणत्वात् पुनः विषयेष्वनासक्तं नवाह्ये षु प्रवर्तते । तदेवंक्रिया-समभिव्याहारेणार्थानुचिन्तया नामावृतौ नामार्थे स्थैर्यं सम्भवति, अतः स्तोत्राणाम् महत्त्वमस्ति ।

## २. स्तोत्र-शब्दार्थः

स्तूयतेऽनेनेति व्युत्पत्या स्तौतेः "दाम्नीशस्युयुज"[4] इति सूत्रेण कृतेष्ट्रनि-प्रत्यये व्युत्पाद्यते स्तोत्र-शब्दः । वाचस्पत्येऽपि "स्तवे गुणकर्मादिभिः प्रशंसनेऽमरः इत्युक्त्वा स्यचातुर्विध्यमुक्तम् ।"[5] तथा च

द्रव्य-स्तोत्रं कर्मस्तोत्रं बिधि-स्तोत्र तथैव च ।
तथैवाभिजनस्तोत्रं, स्तोत्रमेतत् चतुष्टयम् ।।१।।[5]

द्रव्याद्युपाधिकृतया स्तवस्य चातुर्विध्यमुक्तम्। "स्तुतिसाधनवाक्ये गुणिनमुपसर्जनीकृत्यतन्निष्ठानां गुणानां प्राधान्येनकथनरूपा ऋग्वेदे लक्षिता। हलायुधकोशेऽपि स्तूयतेऽनेनेतिव्युत्पत्तिं प्रदर्श्यष्ट्रन् प्रत्ययं कृत्वा "अर्थवादः स्तुतिः ईडा नुतिर्विकत्थनं स्तवः श्लाघावर्णनेति लिखित्वा मत्स्यपुराणीयश्लोकः प्रकारान्तरेण पाठभेदेन धृतः[6]

अत्र वो वर्णयिष्यामि विधिं मन्वन्तरस्य तु ।
ऋचो यजूंषि सामानि, यथावत्प्रतिदैवतम् ।।१।।
विधिहोत्रं तथा स्तोत्रं विधिस्तोत्रं तथैव च ।
तथैवाभिजन-स्तोत्रं स्तोत्रमेतत् चतुष्टयम् ।।२।।

---

२. ऋग्वेदे १।१।६।५
३. तैत्तरीय संहितायाम् २।४।१४
४. तत्रैव २।५।४
५. अष्टाध्यायी ३।२।१८२
६. शब्दवाचस्पत्ये १९६४ पंचमेभागे ५३९२ पृ०
७. मत्स्यपुराणे १४५ त० १२१ अ०
८. हलायुधकोशे, सूचना विभाग उ० प्र०, जोशी, पृ० ७२६

मन्वन्वरेषु सर्वेषु यथा भेदाद्भवन्ति ये।
प्रवर्तयन्ति तेषां वै ब्रह्म-स्तोत्रं पुनः पुनः ।।३।।[१]

श्री द्वारिकाप्रसाद चतुर्वेदि-रचिते "संस्कृतशब्दार्थकौस्तुमे च"

"स्तोत्रं-प्रशंसां स्तुतिः विरुदावलिः प्रशंसात्मकं गीतम् । कवितास्तुत्यात्मकश्लोकाः अत्रान्तिमत्रयोऽर्थाः विचार्याः ।"[२]

## ३. स्तुत्यादिभिर्वैलक्षण्यम्

स्तवनम् स्तुतिः स्तौतेः "स्त्रियांक्तिन्"[३] इति क्तिनि कृते निष्पाद्यते "अर्थवादः प्रशंसा-स्तोत्रं ईडादयोऽर्थाः हलायुधकोश-प्रदर्शिताः नैषधीयमुदाहरणं चोपन्यस्तम् ।"[४]

धन्यासि वैदर्भिगुणैरुदारैर्यया समाकृष्यत नैषधोऽपि ।
इतः स्तुतिः काखलु चन्द्रिकायाः यदब्धिमप्युत्तरलीकरोति ।।[५]

अन्यत्र च—स्तुतिः सिद्धिरितिख्याता श्रियः संश्रयणाच्च सा ।
लक्ष्मीर्वा ललना वापि क्रमात्सा कान्तिरुच्यते ।।[६]

## समीक्षणम्—

उल्लिखितोद्धरणानामन्येषां चानुपदंवक्ष्ययाणनां पर्यालोचनेन प्रतीयते यदस्ति किंचिदन्तरम् स्तोत्रस्तुत्यादीनां परस्परं मैकडानलमहोदयस्य 'वैदिक इण्डेक्स' हिन्दी संस्करणेऽपि संकेतः स्पष्टत्वेन प्राप्यते । तत्र स्तुतेरर्थ इत्थमंकितः 'ऋग्वेदे पश्चात्'[७] च स्तुति गीतानांद्योतकम्। 'ऋग्वेद और बाद में स्तुति गीतों का द्योतक।' स्तोत्रार्थे च 'तथैवोद्गातुः तत्सहायकानां पुरोहितादीनां गायनद्योतकम्' शब्दवाचस्पत्ये च शस्त्रस्तोत्रयोरुदाहरणं द्रष्टव्यम् ।

यथा यो देवदत्त स चतुर्वेदाभिज्ञ इत्युक्ते सर्वेजनाः स्तुतिमवगच्छन्ति यद्यपिष्टुञ्स्तुतौ शंस-स्तुतौ इत्येकार्थौ तथापि 'प्रगीतमन्त्रसाध्यं स्तोत्रम्'-अप्रगीत मन्त्र-साध्यं शस्त्रमिति तयोर्विवेके इति च तत्रोक्ते प्रगीत-मन्त्रसाध्ये स्तवने गुण-कथने च। शस्त्रशब्दे प्रतिगीतमन्त्रे यदुक्तं तत्र चाप्रतिगीतमन्त्रे इत्येवंबोध्यम्।[८]

---

१. मत्स्यपुराणे १४५ त० १२१ अ०
२. संस्कृतशब्दार्थकौस्तुभे १२३६
३. अष्टाध्यायी ३।३।९४
४. हलायुधकोशे ७२५१
५. नैषधे ३।११६
६. देवीभागवतम् ४५।१४५
७. वैदिक इन्डेक्स, पृ० ५३५
८. शब्दवाचस्पत्ये, ५३४१

अथर्ववेदे स्तोत्रस्तुत्योर्भेद एवं दर्शितः 'गुणनिष्ठगुणाभिधानं स्तुतिरित्युक्त्वा तस्या प्रगीताप्रगीतभेदात् द्वैविध्यमुक्तम्। तत्र च 'प्रगीतमन्त्रसाध्यास्तुतिः स्तोत्रम्' 'आज्यैस्तुवते' 'अप्रगीतमन्त्रसाध्यास्तुतिःशस्त्रम्' इति सायणः।[१] शिवमहिम्न-स्तोत्रे मधुसूदनाचार्येण स्वव्याख्यायाम् 'गुणिनिष्ठ-गुणाभिधानम्'[२] भगवताचार्येण शंकरेण विष्णुसहस्रनाम-भाष्ये 'स्तुवन्त' इत्यस्य गुण-संकीर्तनं कुर्वन्त इत्यर्थो-विहितः।[३]

तत्रैव चतुर्थ श्लोकेस्तुवन्नित्यस्य 'गुणान् संकीर्तयन्'[४] इत्यर्थोविहितः। 'स्तोतास्तवनात्'[५] इति नैगमकाण्डे नैरुक्तम्। शब्दस्यास्य प्रयोगो वैदिक-ग्रन्थेषु निरुक्तादिषु क्वचित् पुराणकाव्येषु च बहुश उपलभ्यते। तथा च निरुक्ते।

तद् यानि नामानि प्राधान्य-स्तुतीनां तद्दैवतमित्याचक्षते इत्युल्लिखिता यास्केन स्पष्टमेवनिर्देशः कृतः साचेयं स्तुतिः चतुर्धा नाम्ना बन्धुभिः कर्मणा रूपेणेति च। 'स्तुतिः नामरूपकर्मबन्धुभिः'[६] इमाश्च त्रिधा ऋग्पदभाजः।' परोक्ष-कृताः प्रत्यक्षकृता आध्यात्मिक्यश्च।[७] ऋचन्ति स्तुवन्ति व्युत्पत्या ऋच्शब्दस्यापि स्तुत्यर्थकत्वात्। एतच्च रूपं क्विपि भवति। 'तत्र परोक्षकृता सर्वाभिः नाम-विभक्तिभिर्युज्यते प्रथमपुरुषैश्चाख्यायते[८] 'इन्द्रो दिव, इन्द्र ईशे पृथिव्याः[९], परोक्षकृताया उदाहरणम्। 'प्रत्यक्ष-कृताश्चमध्यम, पुरुषेणाख्यायन्ते'[१०] त्वमिति सर्वनाम्ना निर्देशः, यथा त्वमिन्द्रबलादधि [११] आध्यात्मिक्यश्च 'उत्तम पुरुषयोगा अहमिति सर्वनाम्ना च निर्देशः।'[१२] अहंभुव वसुनः पूर्वस्यपतिरहं[१३] इति।

शाखान्तरेषु परोक्षकृता प्रत्यक्षकृताश्च मन्त्राःबाहुल्येनावलोक्यन्ते। आध्या त्मिक्यश्चाल्पशः निरुपितं चैतत् निरुक्ते दैवत-काण्डे। स्तुतेराशिषोऽर्थेऽपि प्रयोगो भवति। क्वचिच्चाशीरेव न स्तुतिः क्वचिच्चस्तुतिरेवनाशीः। तथा चवृहद् देवतायम्—

---

१. अथर्ववेद सायण भाष्य, पृ० ६४०
२: शिवमहिम्न स्तोत्रे १
३. विष्णुसहस्रनाम्नि, शंकरभाष्यसहिते श्लो० ४
४. निरुक्त निगमकांडे २
५. तत्रैव
६. दुर्गादासीय व्याख्या निरुक्तस्य ४ मन्त्रे। दैवत कांडे।
७. निरुक्ते ७।१।५
८. तत्रैव ७।१।६
९. ऋक्संहितायाम् ८।४।१५।५
१०. तत्रैव ७।२।२
११. तत्रैव ८।८।११।२
१२-१३. तत्रैव, ७।२।५ तथा ८।१।५।१

स्तुतिस्तु नाम्ना रूपेण कर्मणा बान्धवेन च।
स्वगार्थधनपुत्राद्यैः, अर्थैराशीस्तु कथ्यते ।।[१]

मन्त्र शब्दोऽपि स्तुति समानार्थक एव यतो मन्‌धातोःष्ट्रनिसंजायते। तथा च निरुक्ते 'मन्त्रा मननात्'[२] वस्तुतो मन् धातुस्त्रिष्वर्थेषु प्रयुज्यते ज्ञाने विचारे सत्कारे च।

दैवादिकमन्धातोर्मन्यतेज्ञायतेऽनेनेति मन्त्रः। ईश्वरीयादेशा अनेन ज्ञायन्ते इतिभावः। तनादिगणीयात् मन्यते विचार्यते सत्क्रियते वा ईश्वरीयादेशोऽत्र। एवमेव छदिघातोर्निष्पन्न छन्दःशब्दः।[३] स्तोम-शब्दोऽपि स्तवनार्थक एव तथा च निरुक्तं 'स्तोमः स्तवनात्[४] ष्टुञ्धातोर्मनिनिजायते। ऋग्वेदोत्तर-युगे स्तोत्रगायनपरो-भवभूतिसमये समूहार्थकः। स्तोम-स्तोत्रं सायणः।[५] भवभूतिः—

ऋषीणामुग्रतपसां यमुनातीरवासिनाम्।
लवण-त्रासितः स्तोमस्त्रातारं समुपस्थितः ।।१।।[६]

(समूहार्थकः)

ऋचन्ति स्तुवन्तीत्युत्वा ऋचधातो क्विपिव्युत्पाद्यास्थार्थः स्तुतिरेव। ऋचा नियताक्षरपदावसानानां इतिब्रुवता शुक्लयजुर्वेदीय-प्रथममन्त्र-व्याख्यावसरे महीधरेणास्य स्तुत्यर्थकत्वं स्पष्टमेवोक्तम्।[७]

यजुः शब्दोऽपिस्तुत्यर्थकः 'यज् देवपूजासंगतिकरणदानेषु देवपूजाया अन्य तमार्थत्वात्।'

## निष्कर्षः—

ऋच्‌शब्दः तुदादिपठितर्चधातोर्निष्पाद्यते स्तुत्यर्थकत्वेऽपि ऋग्वेदे एव रूढ़ः। यजुःशब्दः यजुर्वेदे। सामशब्दः सामवेदे। स्तोम-शब्दस्य स्तोत्रार्थकत्वेऽपि मन्त्र-समूहे रूढ़ः। एवं च स्तुतेः पर्यायत्वेप्येषव्यवहारे विभिन्नता। तथैव स्तोत्रशब्दः स्तुतेरन्तर्गतोऽपि भिन्नः। स्तोत्रत्वं चेत्थं जातम्।

## विवेच्य-विषयः च—

१. स्तोत्रत्वे प्रगीतमन्त्र-साध्यतावश्यिकी। निरूपितं चैतत् पूर्वतः

---

१. बृहद्देवता १।७
२. निरुक्त ७।१२।१
३. तत्रैव ७।१२।३
४. तत्रैव ७।१२।३
५. अथर्ववेदे ६।३५।३ सायणभाष्ये
४. उत्तररामचरिते भवभूति; १।५०, मोतीलाल बनारसीदास १९४०
७. शुक्ल यजुर्वेदे १। मन्त्र

अथर्ववेदीय षष्ठकाण्डस्य प्रथममन्त्रेसायणेन समर्थितोऽयमाशयः।[1] संस्कृतशब्दार्थ कौस्तुभेऽपि।

२. स्तोत्रे फलकथनमप्यावश्यकं तथाः च 'स्तुतशस्त्रयोस्तु संस्कार-याज्यावत् देवताभिधानात्'[2] इत्यधिकरणे एवदुक्तम् भवति गीयमानेनवृहता-साम्ना फलसाधनापूर्वजननार्थं पृष्ट-स्तोत्राख्यं कर्मनिष्पादयेत्।

३. शब्दस्याय स्तुत्ययेक्षया वैदिकसंहितासु अल्पशः प्रयुक्तत्वात्। शतपथगोपथब्राह्मणादिपुक्वाचिकत्वाच्च वैदिकस्तुतयोनविवेच्याः।

४. स्तोत्राणि च न केवलं भगवन्नामपराणि यथाकथंचिदुच्चरितानि 'जनस्थाने भ्रान्तंकथनक' मंगलादीनि च अपि तुएषां सम्बन्धः पुण्य-भावना-विशेषेण। जपपूर्विका काचित् शैली नितरामपेक्ष्यतेऽत्र। सत्त्वस्वरूपतया वासु-देवरूपाणि एवेमानि। स्तोत्रेषु चेतः कामप्यभिनवामनिर्वचनीयां सन्तुष्टिं लभते।

५. एषां पाठमात्रेणापूर्वः कोऽप्यानन्दः समुल्लसति। श्लोक-मन्त्रयोर-यमेवप्रधान-भेदोयन्मन्त्रा अर्थ-निरपेक्षा अपिपठिताः पुण्यजनकाः पापप्रक्षाल-काश्च। एवं चेष्टप्राप्त्यनिष्टपरिहारपूर्वकं पुण्यात्मकं यत्ध्वनि-समूहमार्ष ऋषि-तत्तुल्यजनप्रोक्तं वा तद्धिस्तोत्रम्। फलेच्छुभिः कृतानि तत्तत्फल-प्रदानि।

## ५. स्तोत्र-साहित्यम्

सामान्यतः संस्कृतवाङ्मये स्तोत्राणां त्रैविध्यमुपलभ्यते तत्र प्रथमः प्रकारो वैदिके वाङ्मये पुराणरामायण-महाभारत-तन्त्रादि-ग्रन्थेषु। द्वितीयश्च स्वतन्त्र-रूपेण तत्तत्सम्प्रदायाचार्यैरितरैश्च लिखितानि। तृतीयश्च काव्यादिग्रन्थेषु। अत्रतुप्राक्प्रदर्शित-रीत्यावैदिकस्तुतयो विवेच्या न भविष्यत्यपितु विशेषतः पौराणिकानि सामान्यतो व्यक्ति-विशेषाचार्य-रचितानि स्तोत्राणि एव चर्चिष्यन्ते।

मूलन्तु स्तोत्राणां वेदास्ततः पुराणतन्त्राणि ततः कवि-विशेष-रचितानि पौराणिकानां चर्चा तत्तद्देव प्रकरणे भविष्यति। लौकिक-वाङ्मये कविकुलगुरोः कलिदासस्य श्यामलदण्डकं प्रख्यातं स्तोत्रम्। ततोऽश्वघोषस्य कनिष्कसमकालीन-वर्तिनः प्रथम-शताब्दीकस्य बुद्धचरित-सौन्दरानन्दयोः रचयितुः 'ज्ञानदीस्तोत्रगाथा-परःस्तोत्रग्रन्थः। शतकस्यास्योत्तराद्धवर्तिना मातृचेटेन 'चतुःशतकार्ध्यशतके' लिखिते। पंचशताब्दीकः सिद्धसेनदिवाकरः' कल्याणमन्दारस्तोत्रमलिखत्। यत्र जैनतीर्थंकराणां स्तोत्राणि षष्ठशताब्द्याः पूर्वार्द्धवर्तिना राज्ञा हर्षेण सुप्रातस्तोत्र-

---

१. अथर्ववेद, पृ० ६४०

२. जैमनीयसूत्रे २।१।१३

मष्टमहाश्रीचैतन्यस्तोत्रं च व्यलेखि। अत्रैव कादम्बरी-कारेण वाणभट्टेन 'चण्डी शतकं' व्यरचि यत्र प्रसादगुणसमन्विता-लंकारिक-भाषाया: समीचीन: प्रयोग:। स्रग्धरा-छन्दोबद्धमिदं शतकं दीर्घ-समासमय-मुत्प्रेक्षानुप्रासप्रचुरमस्ति। तथा च

विद्राणे रुद्रविन्दे सवितरि तरलेवज्रिणि ध्वस्त-वज्रे।
जाताशंकेशशांके विरमति मरुति त्यक्तवैरे कुबेरे।
वैकुण्ठे कुण्ठितास्त्रे महिषमतिरुषंपौरुषोपघ्ननिघ्नं।
निर्विघ्न विघ्नतीव शमयतु, दुरितंभूरिभावा भवानी ।।१।।[1]

अस्यैवश्यालको मयूरकवि: भगिन्याशप्त: कुष्ठरोगाभिभूत: सूर्य-शतकं विरच्य नीरुक्जात:। अस्यामेव सप्तमशताब्दयां 'मानतुंग:' भक्तामरस्तोत्रमलिखित्। सूर्यशतकस्येमौ श्लोकौ—

चन्द्र-ग्रहणं विना नास्मि, रमे किं प्रवर्तयस्येवम्।
देव्यै यदि रचितमिदं, नन्दिन्नाहूयतां शंकु:।
आरोपयसि मुधाकिं नाहमभिज्ञात्वदंगस्य।
दिव्यं वर्ष-सहस्रं, स्थित्वैव किं युक्तमभिधातुम् ।।[2]

सर्वज्ञमित्रस्याष्टमशताब्दीकस्य स्रग्धरा-स्तोत्रम् स्रग्धराछन्दोबद्धंतारा-स्तोत्रं च। अधुनैवाद्वैतप्रवर्तकाचार्यशंकराणां येषां कीर्ति चन्द्रिकाऽद्यापि जनानालोकयति। ये परमार्थदृष्ट्याऽद्वैतवादिनोऽपि निर्गुण-ब्रह्मणा सहसम्बन्धं स्थापयितुं सगुणोपासनं साधु मन्वन्तेस्मात एव विष्णु-शिवशक्ति-गणेशहनुमदादीनां स्तुती: स्तोत्राणि चव्यरचयन्। परश्शतानि स्तोत्राणि। आचार्य-प्रवराणां स्तोत्राणि आनन्दानामक्षयस्रोतांसि। उज्ज्वलरत्नानांमनोरमा मंजूषा। संगीतमधुरिमस्यन्दनिष्यन्दानि।

भजगोविन्दं भजगोविन्दं गोविन्दं भज मूढमते।
बालस्तावत् क्रीडासक्त:, तरुणस्तावत्तरुणीरक्त:।
बृद्धस्तावत्चिन्तामग्न:, पारेब्रह्मणि कोऽपि नलग्न:।
भज गोविन्द......................मूढमते ।।१।।[3]

इत्यादि-पदानां स्वर-लहरीभि: कर्णकुहरे आपूर्णे इव परिलक्ष्येते। प्रतीयते यत्क्लेश-बहुलंजगदुद्धर्तुमुर्द्धवीभूय दिव्यलोकस्यानन्द: हस्त-गत:जात:। केचित् श्लोका: —

विधेरज्ञानेन द्रविणविरहेणालसतया,
विधेयाशक्यत्वात्तव चरणयोर्याच्युतिरभूत्।

---

१. संस्कृत साहित्य का इतिहास, श्री बलदेव उपाध्याय, पृ० २९५
२. संस्कृत साहित्येतिहासे, स्तोत्र प्रकरणे।
३. संस्कृत साहित्य का इतिहास, पृ० २९६, श्री बलदेव उपाध्याय: १९४८

तदेतत् क्षन्तव्यं जननि सकलोद्धारिणि शिवे,
कुपुत्रो जायेत् क्वचिदपि कुमाता न भवति ।।१।।[1]

एवमेव शिवापराधक्षमापने—

आयुर्नश्यति पश्यतां प्रतिदिनं याति क्षयं यौवनम्,
प्रत्यायान्ति पुर्नगताःर्न दिवसाः कालोजगद्भक्षकः
लक्ष्मीस्तोयतरंगभंगचपला, विद्युच्चलंजीवितम्
तस्मान्मां शरणागतं शरणद त्वंरक्ष रक्षाधुना ।।१।।[2]

इत्यादिषुशान्तिभावस्य विनश्वरस्य जगतश्च प्रत्यक्षामूर्तिः नयनयोः समक्षं स्फुरन्तीवलक्ष्यते । प्रसादगुणो वर्णमैत्री साधनरूपेणालंकारिताच दृग्गोचरता याति ।

तनोतु क्षेमं नस्तव वदनसौन्दर्यलहरी,
परीबाहः स्रोतः-सरणिरिव सीमन्तसरणिः ।
बहन्ती सिन्दूरं प्रबल-कबरी-भारतिमिर-
द्विषां वृन्दैर्बन्दी-कृतमिव नवीनार्क-किरणम् ।।१।।[3]

आचार्याणां समकालीनेन दाक्षिणात्येन मूक-कविना 'मूक पंचशती' रचिता यत्र श्लोकानां पंचशती । एतस्यामेवशताब्द्यां पुष्पदन्ताचार्येण शिवमहिम्नस्तोत्रं, रचयांचक्रे । अत्र शिवस्तोत्रपरकाः श्लोकाः ।

असितगिरिसमं स्यात् कज्जलं सिन्धु-पात्रे;
सुर-तरुवर-शाखालेखनी-पत्रमुर्वी ।
लिखति यद्गृहीत्वा शारदा सर्वकालं
तदपि तवगुणानामीश पारं नयाति ।।१।।[4]

नीलगिरिसमं कज्जलं स्यात् सिन्धुरेव च मसीपात्रम् स्यात् कल्पतरोः शाखा च लेखनीभवेत् कर्गलपत्रं च उर्वी-स्यात् तदपि भगवतः शंकरस्य गुणान् वर्णयितुं न शव्यं अत्रैव केरलाधिपतिना कुल-शेखेरण 'मुकुन्दमाला' रचिता । यच्च वैष्णव-स्त्रोत्रेषु परमं प्रसिद्धम् । तथा च—

दिविवा भुविवा ममास्तु वासः,
नरकेवा नरकान्तक-प्रकामम् ।
अवधीरित—शारदा-रविन्दौ
चरणौ ते मरणेऽपि चिन्तयामि ।।१।।[5]

---

१. देव्यपराधक्षमापनस्तोत्रे श्लोक २
२. शिवापराधक्षमापन स्तोत्रे १३
३. सौन्दर्यलहरी स्तोत्रे ४४
४. शिवमहिम्नि स्तोत्रे ३२
५. मुकुन्दभालायाम् ८

स्वर्गे नरके भुवि यत्र कुत्रवा वासोऽस्तु परं विकसितशारदारविन्द-तिरस्कारि-चरणयोर्विस्मरणं न भवेदिति कवेः कामना ।

नवम-शतकान्तर्वर्तिना रत्नाकरेण 'वक्रोक्तिपंचाशिका' व्यलेखि यस्या इमौश्लोकौ ।

त्वं मेनाभिमतः भवामि सुतनुश्वश्र्वा अवश्यं मतः,
साधूनां भवता न मेरुचित इत्यत्र कवेऽहं पुनः ।
मुग्धे नास्मि न मेरुणा, ननु चितः प्रेक्षस्व मांपातुवः
वक्रोत्त्येति हरिः हिमाचलभुवं स्मेराननोमूकयन् ।।१।।
त्वं हालाहलभृत्करोषि मनसो मूर्च्छाममालिंगितः
हालांनैवविभर्मि नैवहलं, मुग्धेकथं हालिकः ।
सत्यं हालिकतैवतेसमुचिता, सक्तस्य गोवाहने,
वक्रोक्त्येति जितः हिमाद्रि-सुतया स्मेरः हरः पातुवः ।।२।।[1]

कश्मीरराज्ञोऽवन्तिवर्मणः समाश्रितेन कविनाचार्येण चानन्दवर्धनेन 'देवीशतकं'[2] व्यलेखि । श्रीमदीश्वरप्रत्यभिज्ञाचार्यचक्रवर्तिबन्द्याभिधानोत्पलदेवाचार्यः 'शिवस्तोत्रावलीं"[3] अलिखत् । विशिष्टाद्वैत-स्थापकेनाचार्य रामानुजगुरुणा यामुनाचार्येण 'चतुःश्लोकीस्तोत्ररत्नमरचि । अस्य तमिलं नामालबन्दार-स्तोत्रम् । आन्तरिकसौन्दर्येण विशिष्टाद्वैतनिम्बार्कसम्प्रदाययोरतिप्रसिद्धमिदम् भक्तजनैरभीक्ष्णंस्तूयते,

तवामृतस्यन्दिनि पादपंकजे,
निवेशितात्माकथमन्यदिच्छति ।
स्थितेऽरविन्दे मकरन्दनिर्भरे,
मधुव्रतो नान्यरसंसमीहते ।।१।।"[4]

भगवन् पीयूष-रसप्रवाहिचरणौ ते विहाय कोऽन्यं रसं पीपासति । मकरन्दामोदितकंजपुंजंविहाय मधुकरः किमन्यरसं समीहते ।

विशिष्टाद्वैताचार्यवरेण रामानुजेन १०१० शताब्द्यां गद्यत्रयंस्तुत्यात्मकमलेखि 'शरणागतिगद्यं, वैकुण्ठगद्यं श्रीरंगगद्यं चेति - तस्यैव शिष्येण श्रीवत्सांकेन श्रीस्तवः अतिमानुषस्तवः वरदराजस्तवः सुन्दरबाहुस्तवः वैकुण्ठस्तवः च निरमायि ।

एकादश शताब्द्याः कृष्णालीलामृतमतीव प्रसिद्धं स्तोत्ररत्नम् ।

---

१. सं० साहित्य का इतिहास, स्तोत्र प्रकरणे—ब० उपा०, पृ० २९८
२. ध्वन्यालोक भूमिकायाम्, श्रीरामप्रताप त्रिपाठी, पृ० ८
३. शिवस्तोत्रावली, स्तोत्रे, वाराणसी द्वितीय संस्करण, पृ० १९
४. सं० साहित्य का इतिहास, श्री बलदेव उपाध्याय, पृ० २९८

"कृष्णत्वं नवयौवनोऽसि मुग्धाः प्रायेण गोपांगनाः।
कंसो भूपतिरब्जनालभिदुरग्रीवा वयं गोदुहाः।
तद्याचे नलिनाक्ष भवन्तमधुना वृन्दावनंमन्दिरं,
आयासीरितिगोपवृन्दवचसा नम्रो हरिः पातु वः ।।१।।"

गीतगोविन्दकारः जयदेवः पीयूषवर्षी गीतगोविन्द शैल्या अलिखत् गंगा स्तवमालाम् मालावार-निवासिविल्वमंगलः कृष्णकर्णामृतमरचयत्।

मुग्धं स्निग्धमधुरमुरलीमाधुरी-धीर-नादैः,
कारंकारं करणविवशं गोकुल-व्याकुलत्वम्।
श्यामं कामं युवजनमनोमोहने मोहनांगम्,
चित्तेनित्यं वसतु महो मोहनं मोहनांगम् ।।१।।'

द्वादश-शताब्द्यामाचार्यानन्दतीर्थः "द्वादशस्तोत्रमलिखित्" लक्ष्मण-सेनश्च पद्मावतीम्। वेदान्तदेशिकः १३१८-१३६९ पंचविंशति स्तोत्रग्रन्थान-लिखत्। परम्परामिमाँ वर्द्धयितुं महत्कार्य चकार। श्लोकसहस्रबद्धमस्य पादुका-सहस्रं गरुडगण्डकं, रघुवीरगद्यमच्युतशतकादयो मुख्य-तमाः ग्रन्थाः।

अस्यामेव शताब्द्यां गौरधरपौत्रेण रत्नधर-पुत्रेण श्रीजगद्धर-भट्टेन कश्मीरान्तःवर्तिपद्मपुरवासिना व्यलेखि "स्तुतिकुसमांजलिः'। अत्राष्टत्रिंशत्-स्तोत्राणि। अयं भगवतः शिव-स्योपासक आसीत्। भक्ति-भाविता सरसाहृद्या चास्यकविता सुकोमलश्लेषानुप्रासयमकादिगुम्फिता, मुरजपद्मबन्धादिबद्धा। करुणरसभरिता। दार्शनिकता-सौन्दर्ययोः भरः दर्शनीयः।

"चारुचन्द्रकलयोपशोभितं भोगिभिः सह गृहीत सौहृदम्।
अभ्युपेतं घनकालशाम्भवं नीलकण्ठमतिकौस्तुभंस्तुमः ।।१।।"[२]

अत्रं शब्दश्लेषेण मयूरस्य भगवतः शंकरस्य च वैशिष्ट्यम् ध्वन्यते।

अन्यच्च—

"स्वैरेव यद्यपि गतोऽहमधः कुकृत्यैस्तत्रापि नाथ तव नास्म्यवलेपपात्रम्।
दृप्तः पशुः पतति यदि स्वयमन्ध-कूपेनोपेक्षते तदपि कारुणिकोहिलोकः।[३]"

सनातनगोस्वामी[३] श्री कृष्णलीलास्तवादीन्यलिखत् कांचीवासिनाप्यय-दक्षितेन (१५५४ सं) "वरद-राज-स्तवोलिखितः"। केरलवासीनारायणभट्टः (१५८५) "नारायणीयमलिखत्। अत्र १०१४ श्लोकाः। जीवगोस्वामी बहू-निस्तोत्राणि लिखितवान्। अस्यामेव शताब्द्यामाचार्यमधूसूदनसरस्वतिना "मन्दा-किनी" लिखिता यत्र च श्लोकानाम्द्वयधिकं शतम्। भगवतःश्रीकृष्णस्य जन्मा-रभ्यलोक-प्रस्थान पर्यन्तमस्ति।

---

१. स्तुतिकुसुमांजलि स्तोत्रे, श्रीप्रमबल्लभत्रिपाठि सम्पादित १।१४, संस्करण २५, वाराणसी
२. संस्कृत साहित्य का इतिहास, श्री बलदेव उपाध्याय, पृ० ३०२
३. श्रीस्तव कल्पद्रुमे, पृ० ४२६, मथुरा १९५९ जून

भगवतः श्रीकृष्णस्यानन्योपासकेन कृष्णचैतन्य-शिष्येण रूप-गोस्वामिना गन्धर्वप्रार्थनाष्टकादीनिस्तोत्राणि व्यलिखन्त। शाहजहाँसमाश्रितेन पण्डितराज-विरुदभाजा भगवतः श्रीकृष्णस्यानन्योपासकेनालौकिकप्रतिभाशालिनाचार्येण कविना च पण्डितराज जगन्नाथेन पंचलहर्योऽलिखन्त। 'करुणा-लहरी-पीयूष-लहरी सुधालहरी अमृतलरीत्यादीनि। अत्र गंगा-विष्णु-यमुना-लक्ष्मीसूर्यादीनां स्तोत्राणि। अस्य रचनायां स्वाभाविकः प्रवाहःपदानांमनोरमाशय्या कल्पना चमत्कारिता चेति। साक्षादमृतद्रवस्य निष्यन्द इवश्च्योतते। कालिन्द्याः कूले गोपांगनाभिः सहभवतः श्रीकृष्णस्यानुपमसौन्दर्यमाधुरी आस्वाद्यत।

"रे चेतः कथयामि ते हितमिदं वृन्दावने चारयन्,
वृन्दं कोऽपि गवां नवाम्बुदनिभः बन्धुर्नकार्यस्त्वया।
सौन्दर्याद्भुतमुद्गरद्भिरभितः सम्मोयहन्-मन्द स्मितैः,
एष त्वां तव वल्लभाँश्च विषयानाशुक्षयं नेष्यति ॥१॥
स्मृतापितरुणातपं करुणया हरन्तीनृणाम्,
अभंगरतनुत्विषां बलयिता शतैर्विद्युताम्।
कलिन्द-गिरिनन्दिनी तटसुरद्रुमालम्बिनी
मदीयमतिचुम्बिनी भवतु कापि कादम्बिनी ॥२॥[1]

अस्यामेवशताब्द्यां (१६५०) श्री नीलकण्ठ दीक्षितेन "शिवलीलार्णवः" आनन्दसागरस्तवः शिवोत्कर्षस्तवः मंजरीतिनामभिः शिवमहिमापराः त्रयः ग्रन्थाः लिखिताः।

वेंकटाध्वरिः मद्रास-निवासी वैष्णव आसीत् अस्य कालः १७तमा शताब्दी। अयं लक्ष्मीसहस्रं लिखितवान्। अत्रालंकारिक-सौन्दर्यमोदावहम्। मुख्यतः शब्दकविरयं श्लेषे दक्षोभक्तिभावनयाभावितोऽयंग्रन्थः लक्ष्म्याः सौन्दर्य-गुण-गायन-परः। अलौकिकीप्रतिभा, नूतनोत्प्रेक्षा कमनीया रचना चातुरी च मनोहरन्ति उत्प्रेक्षामण्डितरसपेशलोऽयं ग्रन्थः। वाचां वैदग्ध्यमपरा विशेषतेति।

'वरमादिषु मातराऽदिमं यदिमं कोशकृताहमध्यमम्।
अमरः किलपामरस्ततः, स वभूव स्वमेव मध्यमः ॥१॥[2]

अत्र कटेः पर्यायः मध्यः मध्यम्ः (मध्यं चावलग्नंमध्यो स्त्री) कथितः। इत्यपराधहेतोरमरः अमरकोशकारः पामरः मध्यमकार वभूव।

रामभद्रदीक्षितलिखितेषु "रामस्तवाद्भुत-सीतारामस्तवौ चमुख्यौ" अत्र राम-महिमा तद्बाण-महिमा च वर्ण्योविषयः। सन्यासि-नारायणतीर्थेन 'कृष्णलीला तरंगिणी" लिखितेति। वासिष्ठगणपतिमुनिप्रणीतमुमासहसं अपरो वैदुष्यपरः

---

१. सं० सा० का इतिहास, श्री बलदेव उपाध्याय, पृ० ३१६-३१८
१. सं० सा० का इतिहास, श्री बलदेव उपाध्याय १९८४, पृ० ३१३

आलंकारिका स्तोत्र-ग्रन्थः ब्रह्मानन्द रघुनाथदास—रामानन्दादयः सम्प्रदायाचार्या अनेके विविधग्रन्थानलिखन् एशं च स्तोत्राणामविच्छिन्न धारा प्रसृता । तत्तदध्याये-विशदीकरिष्यते ।

स्तोत्राणां संङ्ग्रहो विभिन्नभाषासु प्रकाशितः बंगलिप्यो वसुमित्र-सम्पादित स्तोत्रग्रन्थः कन्नणलिप्यां-स्तवकुसुमाँजलिः देवनागरीलिप्यां मुम्बईतो वृहत्-स्तोत्र-रत्नाकरः काशीतो वृहत्स्तोत्र रत्नाकरः गीताप्रेसगोरखपुरतः स्तोत्ररत्नावली, काशीतः पुराणकाव्यस्तोत्रसुधा, मद्रासतः स्तोत्रर्णावादयः संग्रह ग्रथाः प्रकाशिताः यत्र प्रायः न्यूनाधिकरूपेण ४०० स्तोत्राणि सन्ति ।

द्वितीयोऽध्यायः

# गणेशस्तोत्राणि

## गणेश

**शब्दार्थ :**

वाक्यार्थ-ज्ञाने पदार्थज्ञानं कारणमिति गणेशस्तोत्रसमीक्षणे गणेश-शब्दस्यज्ञानं नान्तरीयकत्वंभजत एवेतितदेव निरुप्यते ।

गण्यते गणयतीतिवा कर्मण्यपि प्रत्यये कर्तरिप्रत्ययेऽपि वा प्रमथोऽर्थो भवति तथा च कालिदासः "भर्तुः कण्ठच्छविरिति गणैः-सादरं वीक्षमाणः"[१] समूहोवार्थः "नगणस्याग्रतोगच्छेत् एवंच गणस्येशः गणेशः इतिहलायुधे ।[२] गणेशशब्दे सन्धौगणशब्द आपतति सचात्रदेव-समूह-वाचकः विश्ववाचको वा । अमरकोशे गणदेवता उक्ता ।

आदित्य-विश्व-वसवस्तुषिता भास्वरानिलाः ।
महाराजिक-साध्याश्च रुद्राश्च गणदेवताः ।।१।।[३]

आदित्याश्च द्वादशते च वृहदारण्यके निर्दिष्टाः

"कतम आदित्याद्वादश वै मासाः सम्वत्सरश्चैत एवादित्या एतेहीदं सर्वमाददानां यन्ति ते यदिदं सर्वमाददाना यान्ति तस्मादादित्याः "तत्रैव वसवश्चाष्टौ ख्याताः ।"[४]

"कतमे वसव इत्यग्निश्च पृथिवी च वायुश्चान्तरिक्षं चादित्यश्चद्यौश्च चन्द्रमाश्च नक्षत्राणि चैते वसव एतेषु हीदं सर्वं तस्माद्वसव इति ।"[५]

विश्वेदेवा दशप्रोक्ताः षड्त्रिंशत्तुषितामताः आभास्वराश्चचतुःषष्ठि पंचाशदूनका अनला तथा चोक्तम् वाचस्पत्ये ।

---

१. मेघदूते ३५

२. हलायुधकोशे (जोशी) २६६, राजकीय प्र०, यू० पी०

३. अमरकोशे (अभिनव लक्ष्मी सहित), वाराणसी, १।१।१०

४. वृहदारण्यकोपनिषदि ३।९।५

५. तत्रैव, ३।९।३

आदित्याःद्वादश प्रोक्ताः विश्वेदेवा दश स्मृताः ।
वसवश्चाष्ट संख्याता, षट्त्रिशंत्तुषितामताः ।।१।।
आभास्वराश्चतुःषष्टिर्वाता पंचाशदूनकाः ।
महाराजिकनामानो द्वेशतेविंशतिस्तथा ।।१।।
साध्याद्वादशविख्याताः रुद्राः चैकादशस्मृताः ।।१।।[1]

एवं च सर्वे देवाः गणपदवाच्यतामायान्ति तेषामीशः गणेशः सत्यार्थ-प्रकाशे च "ये प्रकृत्यादयो जडाः जीवाश्च गण्यन्ते तेषामीशः स्वामी पतिः पालकोवेति"[2] ऋग्वेदे तु भगवदर्थेप्रयोगः "निषुसीद गणपते"[3] ब्रह्मवैवर्तेगकारो-ज्ञानार्थवाचकोणकारश्च निर्वाणवाचकः प्रोक्तः गणेशस्तयोरीशः कथित :—

ज्ञानार्थवाचको गश्च, णश्चनिर्वृत्तिवाचकः ।
तयोरीशं परं ब्रह्म गणेशं प्रणमाम्यहम् ।।१।।[4]

निरुक्ते "वाङ्नामानीत्युत्वा" सप्तपंचाशद् वाङ्नाम्नांमध्ये गणशब्द-स्यापि तत्पर्यायित्वेन निर्देशः । तथा च—

धरा इला गौः गौरी···गीः गाथा गणः,

वेकुरेति सप्तपंचाशत् वाङ् नामानि"[5] एवं च वाचः ईशः गणेशः सिद्ध्यति । ऋग्वेदेऽपिवृहत्ः पतिःगणेशः कथितः ।[6] गणशब्दस्य 'नाम' अप्यर्थः निरुक्ते दुर्गादासीये भाष्येकथितः "सर्वगणंसर्वनामानम् ।"[7]

मौद्गल-पुराणे मनोवाणीमयं सर्वं दृश्यादृश्यस्वरूपकम् जगत् गकारार्थे । मनोवाणी-विहीनं संयोग-वियोगजन्यंणकारात्मकं तयोरीशः गणेश इति व्युत्पत्याब्रह्मसिद्ध्यति । तथा च :

मनो वाणीमयं सर्वं दृश्यादृश्यस्वरूपकम् ।
गकारात्मकमेवंतत् तत्रब्रह्मगकारकः ।।१।।
मनोवाणीविहीनं च संयोगायोगसंस्थितम् ।
णकारात्मकरूपंतत्, णकारस्तत्र संस्थितः ।।२।।[8]

---

१. अमरकोशे १।१।८—टीकायां वाचस्पत्यत उद्धृतम्—वाचस्पत्ये चतुर्थभागे २५०२ पृष्टे गणदेवतार्थे
२. सत्यार्थप्रकाशे प्रथम संस्करण, स्त० २
३. ऋग्वेदे, १०।११२।६
४. ब्रह्मवैवर्ते ३।४४।८६
५. निरुक्ते अ० २।खं० २३
६. ऋग्वेदे २।२३।१
७. निरुक्ते १।३।११
८. पुराणविमर्श, उपाध्याय बलदेव (काशी), पृ० ४८२, सन् १९६५

फलितार्थ :

१. गणेशस्य प्रथमोऽर्थोऽत्र कालिदासीयमेघदूतस्य ३५तमः श्लोकः प्रमाणम् ।

२. समूहस्य जगतः ईशोऽर्थि "नगणस्याग्रतोगच्छेदिति" हितोपदेशः ।

३. गणानामादित्यबसुतुषिताभास्वरानिलरुद्रादीनामीशः अमरकोशोक्तानामीशइत्यर्थः वाचस्पत्यंचात्रप्रमाणम् ।

४. चराचरं जगत्तस्येशः ।

५. ज्ञानार्थकगकारः निर्वाणार्थकणकारः तयोरीशो ब्रह्मवैवर्ते ।

३. गण इति वाङ्नाम तस्याःईशः निरुक्ते स्पष्टम् ।

७. गणेति सर्वनामा तस्येशः दुर्गादासभाष्ये निरुक्ते ।

८. गकारः सगुणवाचकः णकारः निर्गुणवाचकस्तयोरीशः अत्र मौद्गलपुराणंप्रमाणम् ।

प्रमुखनाम्नामर्थाः (स्तोत्रसमागतानाम्)

अधुना गणेश-शब्दार्थे निरुपिते तस्य स्तोत्रसाहित्ये समागतानाम् प्रमुखनाम्नामर्थोविविच्यते तेषाम् स्तोत्रप्रधानांगत्वात् ।

एकदन्तः

नास्त्यविदितं यद्गणेशस्योपरि यावानधिकविचारः क्रियते तावानेवायं परब्रह्म सिद्ध्यति। अस्याभासः पूर्वमेवप्रदत्तः नाम्नां व्याख्यानेनायमर्थः स्फुटो भवति । पुराणेषु दन्तभग्नस्यानेकाः कथाः सन्ति । नाम्नानेन स्वाभाविकरूपस्य ज्ञानंभवति शब्देऽत्रैक-शब्दोमायाबोधकः दन्तशब्दश्च माया-चालक ब्रह्मणोबोधकः तथा चोक्तं मौद्गलपुराणे ।

एक शब्दात्मिका माया, तस्याः सर्वं समुदभवत् ।
भ्रान्तिदं मोहदं पूर्णं नानाखेलात्मकं जगत् ।।१।।
दन्तः सत्ताधरस्तत्र स्वयं मायाचालकउच्यते ।
बिम्बेनमोहयुक्तश्च स्वानन्दगो भवेत् ।।२।।
मायाभ्रान्तिमतीप्रोक्ता, सत्ताचालक उच्यते ।
तयोर्योगे गणेशोऽयं, एकदन्तः प्रकीर्तितः ।।३।।[1]

वक्रतुण्डः

वक्रं तुण्डं यस्य सः वक्रतुण्डः हस्तिमुख इति यावत् । प्रतीकार्थस्त्वयं

---

१. पुराणविमर्शे १९६५, बलदेव उपाध्याय, काशी, पृ० ४८४ तमे उद्धृतं मोद्गलपुराणत् भगवत्तत्वे (श्रीकरपात्रि रचिते) १९९७ सं०, ६४२ पृष्ठे च,

वक्रंमात्मरूपं मुखं तुण्डं यस्य स आत्मनः स्वरूपं वक्रम् जगतोऽविषयत्वात् तथा चात्मरूपः गणेश इति । तथा च

कण्ठाधो माययायुक्तं मस्तकं ब्रह्मवाचकः ।
बक्त्राख्यं तेन विघ्नेशस्तेनायं वक्रतुण्डकः ।।२।।[1]

मनोवाणीमयं जगत् साधारणमस्ति सर्वेषां कृते समानमेवेदं अनुभवगम्यम् । किन्त्वात्मा जगतोऽविषयोऽत एव वक्रः कथितः । वक्रशब्देन मनोवागगोचरोऽचिन्त्योऽपरिवर्तनीय ईश्वरः प्रोक्तः । स एवात्मागणेशः । तत्त्वमसीति महावाक्यस्य प्रत्यक्षरूपः गणेशः कण्ठाधोमायया युक्तः । ऊपरिब्रह्मवाचकः ।

## लम्बोदरः

लम्बमुदरंयस्य स लम्बोदरः गणेशःतुन्दिलोऽस्ति लम्बोदरशब्देन स एवार्थोऽभिप्रेतः । अन्यच्च जगति जनाःद्विधा एकेलघूदराः येषां हृदये वार्ता न पचति । अन्ये च लम्बोदराः ये कस्यापि रहस्यगोपनेसमर्थाः, लघूदराश्च नैव । अन्यच्च प्रलये सर्वं ब्रह्मण उदरे लीनंभवतीत्यतस्तस्य लम्बत्वमपेक्ष्यते । "जगन्ति यस्यां सविकाशमासत ।"[2] माघकाव्ये "तज्जलानः" जगत् सर्वतस्माज्जायतेऽन्यते प्रीण्यते लीयते च तस्मिन्नेदं च परब्रह्मगणेशस्योदरस्यलम्बत्वमपेक्ष्यते । तथा च "तस्योदरात् समुत्पन्नं नानाविश्वं न संशयः ।"[3]

## शूर्पकर्णः

भगवतः गणेशस्य कर्णौ शूर्प-सदृशौ अत्रापि परब्रह्मरूपत्वं सिद्धयति । यथा शूर्पः मनुष्याणांभोज्यपदार्थे मिश्रितमलविकारादि-दूरीकृत्यभोजनीयं शुद्धं करोति । तथात्मा शरीरमुपेत्य मलावच्छिन इव भवति नरश्च सर्वं विस्मृतं करोति । भगवतः गणेशस्य नामैतादृशमानवानां कर्ण-कुहरमुपेत्य पापपुंजं विनाश्य नरं ब्रह्मोपासनया संयुनक्ति । तथा चोक्तम्

रजोयुक्तं यथा धान्यं रजोहीनं करोति च ।
शूर्पं सर्वनराणां वै योग्यं भोजन-काम्यया ।।१।।
तथा माया-विकारेण युक्तं ब्रह्म न लभ्यते ।
त्यक्तोपासनकं तस्य शूर्पकर्णस्य सुन्दरि ।।२।।
शूर्पकर्णं समाश्रित्य त्यक्त्वा मलविकारकम्,
ब्रह्मैवनरजातिस्थो-भवेत्तस्य न तथा स्मृतः ।।३।।[4]

---

१. भगवत्तत्वे (श्री करपात्री स्वामी १९९७) काशी, पृ० ६४२
पुराणविमर्शे ६८४—सं० प्रथम १९६५
२. शिशुपालवधे १।२३
३. भगवत्तत्वे (करपात्री स्वामी), पृ० ६४४
४. भगवत्तत्वे (श्री स्वामिकरपात्रि-रचिते) गणेशपुराणतः उद्धृतम्, ६४५

ज्येष्ठराजः

ज्येष्ठानां महतां देवानां ब्रह्म-विष्णु-शिवादीनां समेषां राजा प्रथमः पूज्यत्वादत एव ज्येष्ठराजः कथ्यते। 'उक्तं प्रथम एव गणानां...ज्येष्ठराजं... सीदसादनमृग्वेदे।

मूषकवाहनः

मूषकोवाहनं यस्य सः। गणेशस्य वाहने मूषकोऽतोमूषकवाहनः कथ्यते। मूषकशब्दः मुष्स्तेयेधातोर्निष्पाद्यते। सर्वप्राणिषु सर्वान्तिर्यामिरूपेण निवासकर्ता समेषांभोगानां भोक्ता एव मूषकः। तं न कश्चित् वेत्ति यतः स मायाजवनिकाछन्नैरज्ञेयः। अतएव भोक्तारं सर्वतपसामिति गीतायामुक्तम्॥ यथा मूषकः जनानां वस्तूनि चोरयित्वा भक्षयति एवमेव ब्रह्मान्तर्यामिरूपेण पुरायपापविवर्जितस्तिष्ठति।

मूषकंवाहनाख्यं च पश्यन्ति वाहनं परं,
तेन मूषकवाहोऽयं वेदेषु कथितोऽभवत्॥१॥
मुषस्तेये तथाधातुः ज्ञातव्यः स्तेय-ब्रह्म-धृक्।
नामरूपात्मकं सर्वं, तत्रासद्ब्रह्मवर्तते॥२॥
भोगेषु भोक्ता च ब्रह्माकारेण वर्तते।
अहंकारयुतास्तंवै न जानन्ति विमोहिताः॥३॥
ईश्वरः सर्वभोक्ता च चौरवत्तत्र संस्थितः,
स एव मूषकः प्रोक्तः मनुजानां प्रचालकः॥४॥[1]

चतुर्भुजः

चत्वारो भुजाः यस्य सः भगवतः गणेशस्य चत्वारो भुजाः चतुर्दिशः। एभिर्भुजैजनान्पाति। तत्रैकोभुजः स्वर्गेदेवान् रक्षत्यन्यो भुवम् तृतीयोऽसुरान् चतुर्थश्च नागान् तथा च।

स्वर्गेषु देवता चायं पृथिव्यां नरास्तथाऽतले।
असुरान्भोगिमुख्यांश्च, स्थापयिष्यतिबालकः॥१॥
तत्त्वानि चालयन्विप्रास्तस्मान्नाम्ना चतुर्भुजः।
चतुर्णांविविधानां च स्थापकोऽयं प्रकीर्तितः॥२॥[2]

गजमुखः

भगवतः गणेशस्य संकलांगन्नैकघा। मुखन्त्वस्यगजमुखमिव वर्ष्मं च नर

१. तत्रैव, ६४३

२. भगवत्तत्वे गणेशपुराणतः उद्धृतम्, पृ० ६४३

विघ्नाद्रिव्रजपक्ष तक्षणपविर्विघ्नाब्धिकालानलम् ।
विघ्नाच्छच्छदवार्षिकाम्बुदततिविघ्नासुराब्जेक्षणम् ।
विघ्नाभेद्यतमः प्रभातसमयंविघ्नालिमुस्ताकटिम् ।
विघ्नाहि-व्रजवैनतेयमनिशं विघ्नाधिपंसंश्रये ।।१।।[1]

एक एव गणेशो ब्रह्मेन्द्रविष्णु-शिवादिनामभिर्जगतः सर्वं कार्यं चालयति । वर्णमैत्री च दर्शनीया ।

नाकाधीशः सुरेश केशवशिवाद्याकारभेदाश्रया—
च्छोकाम्भोनिधिमग्नभग्नजनता नौकायमानः स्वयम् ।
राकायामवतीश-कोटि घटना-नीकाश नैजप्रभः ।
कोकाराति-कला-धरोऽवतु सुरानीकाधिराजाग्रजः ।।१।।[2]

द्वितीयेनस्रता प्रदर्शनं तत्र भगवतो गुणवर्णनम् । कदलीरसगर्व-हरं सुधा-शर्करामध्वासवादि-माधुर्यमतिशयकरम् य इदं नाचामति तस्य जन्म निरर्थम् । तृतीयं मनोनिग्रह-वर्णन-परं । निर्वेदे च मनो-निवृत्ति; कर्म पाशात् । तथा च—

मागाः मानस कर्म-कापथमुरोभागावगाढस्तना—
भोगामर्त्यबधूविचित्रतर-सम्भोगाख्य-सौख्य-प्रदम् ।
योगायाभिरता परे खलु महाभागा वयंनेदृशाः,
द्रागाशा-परिपूरकं गणपतिं नागाननं संश्रये ।।१।।[3]

नित्यं कार्याकार्यविचारशून्यजनानां वासनापराणाम् यम-भयं गणपति-चरण-निषेवनमन्तरा न निवर्तते । तथा च—

कार्याकार्यविचारणं विजहता, नार्यादिषुभ्राम्यता,
नार्याचार-कृता स्थितेन विबुधाचार्यहिते दुर्मते ।
धैर्यादिदुश्चरितं भयान्वहमहो कार्यातिमनेद्रुह्यता ।
सूर्यापत्यजभीः कथं गणपतेस्तार्या कथामन्तरा ।।१।।[4]

स्वरूप-पद्धतौ स्वरूप-प्रतिपादन-पुरस्सरं नारीगणेशवर्णने तथा च—

नारीमंकतलेदधानमखिलाधारीभवन्तीं घृतिं,
सूरीन्द्रैः सनकादिभिर्नुतिगुणं हारीभवद्भोगिनम् ।
स्फारीभूतकरांचलेन दनुजं गौरीद्रुहंचारुणसि—
न्दूरीकृत्यविचर्चिताखिलतनुं नारीगणेशं भजे ।।१।।[5]

---

१. स्तोत्रार्णवे १९६१, मद्रास २५१०
२. तत्रैव, ११
३. तत्रैव, ३१
४. तत्रैव, ४४
५. स्तोत्रार्णवे, ५२

गुणानुवर्णने गुण-कथनम्, चारित्रे चरित्र-चर्चा, नतौ नतिः, सम्प्रार्थनायां प्रार्थना. मनस्तृप्तौ मनस्तृप्ति-कथनम्, नैषधकर्तुः श्री हर्षस्य प्रभावोऽत्र लक्ष्यते।

स्तोत्रापेक्षया काव्यपक्षो भृशं राजते। वर्णगुम्फनमतीवसुष्टु। ओजः समास-बहुलागौडीरीतिः पण्डितराजजगन्नाथ शैल्या अपिप्रभावोऽत्र। रूपकोपमाश्लेषादिष्वपि रुचिवानयमिति।

विघ्नेद्धानलतोयवृष्टिरनघोविघ्नेभकण्ठीरवः।
विघ्नेन्द्रारिसुदर्शनार्पितपदो विघ्नत्वरीचन्द्रमाः।
विघ्नेर्मोत्यमृताक्तवर्तिरनघा, विघ्नेक्षुदन्तावलः,
विघ्नेन्दीवर-चम्पको भवतु मेविघ्नेश्वरः श्रेयसे ।।१।।[1]

एवं चात्र भाषा रसालंकर-वृत्ति-दृष्ट्या रसाभावपेशलमिदं स्तोत्र-काव्यमधिकं राजते।

## २८. श्रीगणेश-सहस्रनाम-स्तोत्रम्—

यतोऽत्रभगवतो गणेशस्य सहस्र-नाम्नां कीर्तनं पुस्तके धृतं नामेदम्।[2] पुष्पिकायां च।

"श्री रुद्रयामले महागुप्त-सारे शिव-पार्वतीसम्वादे गकारादि-गणेशसहस्रनामस्तोत्रं सम्पूर्णम्।[3]

रुद्रयामले महागुप्तसारेशिवः पार्वतींप्राह श्लोकाश्चात्र २८५। स्तोत्रस्यास्यनित्यं पाठेन मनोवांछितप्राप्तिः तथा च तत्रैव—

य इदं प्रयतः प्रातस्त्रिसन्ध्यं वा पठेन्नरः,
वांछितं समवाप्नोति नात्र कार्या विचारणा।
पुत्रार्थी लभते पुत्रान् धनार्यी धनमाप्नुयात् ।।१।।[4]
तस्य वंशेस्थिरालक्ष्मीः, कदापि न विमुंचति।
निष्कामः यः पठेदेतत् गणेश्वर-परायणः ।।२।।[5]

सरलं सानुप्रासमनुष्टुब्बद्धं। अत्र भगवतो गणेशस्य सर्वाणि नामानि गकारादीनि। तत्र विशेषतो समासयुतानि। कानिचित् यौगिकानि। अप्रसिद्धान्यपि। यथा गण-प्रथः गणगुणशब्दादीनां बाहुल्येनः निर्देशः। गणाग्रणी गणपालोगुणातीतोगुणमयोगुणप्रियः। ततोगादीनि ततोगुकारादीनि गुरुस्तोगुरुगुणः

---

१. तत्रैव, ४
२. गणेसहस्रनाम्नि, गीता प्रेस गोरखपुर २०१६
३. तत्रैव, ५३
४. गणेसहस्रनाम्नि, गीताप्रेस गोरखपुर २०१६, १७५-७६
५. तत्रैव, १८२

औकारादीनि । ग्रादीनि च । सरला भाषा । मन्यतेगकारादि-निर्वाहे प्रयाससाध्य-रूपेण सचेष्टः स्तोत्र-कर्ता । तथा च बहवः शब्दा कृत्रिमा इव जाताः ।

## २९. श्रीविनायकस्तवराजः

पुस्तकेलिखितं नाम ।[1] स्तवानांराजेति मत्वा स्तवराजइत्याभिधानम् । पुष्पिकायां च ।[2]

"इति श्री रुद्रयामले श्री विनायक-स्तवराजः सम्पूर्णः रुद्रयामलत इदं स्तोत्रार्णवेधृतम् । मद्रासस्य प्राच्य-लिपि पुस्तकालयस्य ताडपत्रीयमेतत् । कार्य-संख्या च १४३६९ । श्लोक संख्या २२ ।

स्तोत्रस्यास्य पाठेन प्रत्यूहव्रजाः क्षयं यान्ति । तथा च—

एवं श्री गणनाथस्य स्तवराजमनुत्तमम् ।
यः पठेच्छृणुयान्नित्यं प्रत्यूहैः स हि मुच्यते ॥१॥
अश्वमेध-समंपुण्य-फलं प्राप्नोत्यनुत्तमम् ।
वशीकरोतित्रैलोक्यं, प्राप्यसौभाग्यमुत्तमम् ॥२॥[3]

अत्रादिमे भगवतो गणपतेर्ध्यानमुक्तम् । तस्य हस्तेषु बीजापूरगदेक्षु-कार्मुक-चक्राब्जपाशोत्पलव्रीह्यग्रस्व-विषाण-रत्न-कलशाः सन्ति तथा च तत्रैव—

बीजापूर-गदेक्षु-कार्मुकरुचा चक्राब्जपाशोत्पल-
व्रीह्यग्रस्वविषाण - रत्न-कलश - प्रोद्यत्कराम्भोरुहः ।
ध्येयोवल्लभया स पद्मकरयां श्लिष्टोज्ज्वलद्भूषया,
विश्वोत्पत्ति-विपत्ति-संस्थितकरो विघ्नेश इष्टार्थदः ॥१॥[4]

अंशाशिनोरभेदमादाय शंकरनाम्नागणेश-वर्णनम् ।[5] तथा च

कुंजरास्य सुराधीश महेश करुणानिधे ।
दशवाह्यमहाराज गजवक्त्र चतुर्भुजः ॥१॥[6]

भगवान्गणशोऽणिमाद्यष्टसिद्धीनामाधारस्त्रयीमयः लक्ष्मी विष्ण्वादि-देव-पूजितः । तथा च—

त्रयीगुण-महादेव पाहि मां सर्वपालक ।
अणिमादिगुणाधार लक्ष्मीश्रीविष्णुपूजित ॥१॥

---

१. स्तोत्रार्णवे, पृ० ११
२. तत्रैव स्तोत्रान्ते
३. स्तोत्रार्णवे, श्लो० १९-२२
४. तत्रैव, १
५. तत्रैव, ३।४।५
६. तत्रैव, १२

गौरीशंकरसम्पूज्य जयत्वं गण-नायक ।
रतिमन्मथसंसेव्य, महीभूदारसंस्तुतः ॥२॥[1]

अनुष्टुब्छन्दः सरलाभाषेति ।

## ३०. श्री विद्यागणेशाष्टोत्तर-शतनाम-स्तोत्रम्

यतोऽत्रगण पतेर्नाम्नामष्टोत्तरशतमतस्तदेवनाम पुस्तके चेदमेव नामा लिखत् ।[2] श्री विद्यागणेशाष्टोत्तरशत-नामस्तोत्रम्" पुष्पिकायां च—

"इति महाशैवतन्त्रे अतिरहस्ये आकाशभैरवकल्पे शंकरविरचितेश्री विद्यागणेशाष्टोत्तरशतनामस्तोत्रं सम्पूर्णमिति ।"[3]

महाशैवान्तर्गताकाशभैरवकल्पतः स्तोत्रार्णवे उद्धृतम् श्लोकाश्चात्र २५ । पार्वतीं प्राह । तथा च —

श्रीमद्विद्यागणेशस्यनाम्नामष्टोत्तरं शतम् ।
वक्ष्यामिशृणु देवेशि सावधानेन चेतसा ॥१॥[4]

फलंचास्य सर्व-कामप्राप्तिः तथा च—

सर्वातीतः समरसः सत्यावासः सतां गतिः ।
इति विद्यागणेशस्य नाम्नामष्टोत्तरं शतम् ॥१॥
यः पठेच्छृणुयाद्वापि नित्यं ,भक्तिसमन्वितः ।
तस्य साधक-वर्यस्य सर्वावस्थासुसर्वदा ॥२॥[5]

अनुष्टुब्द्धेऽत्रादौ सार्द्धाष्टावधिफलकथनंततः नाम्नां परिगणनम् । अमर्त्य-नामभ्योऽस्य ब्रह्मत्वं स्फुटति । तथा च—

विज्ञात्मा वियत्कायः विश्वाकारो विनायकः ।
विश्वसृक्विश्वमुक्विश्वसंहर्ताविश्वगोपनः ॥१॥[6]
सरला सप्रसादानुप्रासमयीभाषा ।

## ३१. संकष्टनाशनगणेश-स्तोत्रम्

यतोऽत्र संकष्टनाशन-फलं । पुस्तके च तथैव लिखितम् ।[7] पुष्पिकायां च "इतिश्रीनारदपुराणे संकष्टनाशनगणेशस्तोत्रं सम्पूर्णम् ।"[8]

---

१. स्तोत्रार्णवे १०।११ श्लोकौ
२. तत्रैव, पृ० १४
३. तत्रैव, पृ० १५
४. तत्रैव, श्लोक १
५. तत्रैव, २४-२५ श्लोक
६. तत्रैव, १० श्लोक
७. बृहत्स्तोत्ररत्नाकरे, पृ० १२
८. तत्रैव, पृ० १२

नारदपुराणीयमेतद्वृहस्तोत्ररत्नाकरे काशीसंस्करणे धृतम् । श्लोक-संख्या ८ । प्रवक्तानारदः ।

त्रिसन्ध्यमस्यपठनात् सर्वसिद्धिर्जायते तथा च—

द्वादशैतानिनामानि त्रिसन्ध्यं यः पठेन्नरः ।
न चविघ्नभयंतस्य सर्वसिद्धिकरं परम् ॥१॥
विद्यार्थी लभते विद्यां, धनार्थी लभतेधनम् ।
पुत्रार्थी लभते पुत्रान् मोक्षार्थी मोक्षमाप्नुयात् ॥२॥
जपेद्गणपति स्तोत्रं, षड्मिर्मासैः फलंलभेत् ।
संवत्सरेण सिद्धिं च लभते नात्र संशय ॥३॥[1]

अत्र भगवतो गणेशस्य द्वादशनामानि तत्र प्रथमं बक्रतुण्डमिति । सरला सानुप्रासा भाषो । नामगणना परमिदमिति ।

## (ग) सामान्य-स्तोत्राणिः (३४)

१. ऋणहर-गणपतिस्तोत्रम् श्लोकाः १० । स्कन्दपुराणादुद्धृतम् । नामान्तरं महागणपतिऋणहर-स्तोत्रम् । ऋणविमुक्तिः फलम् ।

२. गजानन-स्तोत्रम् श्लोकाः १४ ।
वृहत्स्तोत्ररत्नाकरे काशी-संस्करणे । पृ० । फलम्—मनोरथप्रपूरकम् ।

३. गणपतिद्वादशनाममन्त्राक्षरावलिः । श्लोकाः ३२
स्तोत्रार्णवे ताडपत्रीयमेतत्स्तोत्रम् मद्रास-विश्वविद्यालयात्प्रकाशितम् । फलं विघ्ननाशः ।

४. गणपति-स्तोत्रम् । श्लोकाः ८
वृहत्स्तोत्ररत्नाकरे काशी-संस्करणे, पृ० २९७, यशोदमेतत् ।

५. गणपति-स्तोत्रम् । श्लोकाः ७ ।
वृहत्स्तोत्ररत्नाकरे काशी-संस्करणे पृ० २९८ पूर्वस्यपूरकम् । । ऐहिकामुष्मिकभोगदम् ।

६. गणपतिस्तोत्रम्, श्लोकाः १२ ।
वासुदेवसरस्वतीरचितम् । वृहत्स्तोत्ररत्नाकरे काशीसंस्करणेतृतीये पृ० ३०३ । गणेशप्रसादकरम् ।

७. गणपति-स्तोत्रम् । श्लोकाः ४० ।
श्रीकृष्णलीलाशुक-रचितम् । स्तोत्रार्णवे पृ० ४६४ । रक्षाकरम् ।

८. गणेशकवचम्, श्लोकाः २७ ।
वृहत्स्तोत्ररत्नाकरे काशी-संस्करणे पृ० ४ । गणेशपुराणोत्तरखण्डत उद्धृतम् । सर्वसिद्धिदम् ।

---

१. तत्रैव, पृ० ५-७

९. गणेशकवचम् वा० वि० कै० १८०६४। गणेशपुराणीयोपासनाखण्डतः।

१०. गणेशाष्टकम् विश्वसारतन्त्रतः। वा० सं० वि० कै० १८३३८। दुःखहरम्। श्लोकाः ८। रत्नमालास्तोत्रम् श्लोकाः १०, १म पृष्टे, गणाधिपप्रसाद-करम्।

११. गणेशपूजास्तोत्रम्। श्लोकाः ९। गरुड-पुराणे २४ तमेऽध्याये सूतकाण्डे अमांगल्यनिवारकम्।

१२. गणेशप्रबन्ध-स्तोत्रम् वा० सं० वि० वि० कै० १९८२६। रचयिता गोविन्दो विघ्निवारकम्।

१३. गणेशसहस्रनाम। वा० सं० वि० वि० कै० १४४०। पद्मपुराणनाम्नाधृतम्। सर्ववांछितदम्।

१४. गणेश-सहस्रनामस्तोत्रम्। वा० सं० वि० वि० कै० १४३८। गणशपुराणोपासनाखण्डतः। ६४ तमः पूर्णोऽध्यायः दुःखहरम्।

१५. गणेशस्तवः वा० सं० वि० वि० कै० १८३४१। विश्वसारतन्त्रतः। विघ्ननिवारकः।

१६. गणेश-स्तवराजः गणेशपुराणोपासना-खण्डतः वा० सं० वि० वि० कै० १९८२४।

१७. गणेश-स्तोत्रम् (आ० शंकरकृतम्) वा० सं० वि० वि० कै० १७४१६।

१८. गणेशाष्टकम्, श्लोकाः ११। पद्मपुराणे ६६ तमेऽध्याये कष्टनिवृत्तिकरम्। गणेशाष्टकं, श्लोकाः ९।

१९. पद्मपुराणोत्तरखण्डतो वृहत्स्तोत्र-रत्नाकरे काशी-संस्करणेधृतम्। दुःखनाशकरम्।

२०. गणेशाष्टकम्, श्लोकाः--१३। गणेश-पुराणतो वृहत्स्तोत्ररत्नाकरे काशी-संस्करणे धृतम्। गजानन-प्रसन्नताकरम्।

२१. गणेशाष्टकम्, श्लोकाः ९। स्तोत्रार्णवे षष्ठपृष्टे सर्वसिद्धिदम्।

२२. ढुण्ढि-स्तोत्रम्। श्लोकाः ११०। स्कन्दपुराणे काशी-खण्डे ४।५८ तमेऽध्याये दुःखहरम।

२३. वक्रतुण्डाष्टकम्, श्लोकाः ८। रचयितागोविन्दः दुःखहरम्।

२४. विघ्वेश्वर गीतम्, श्लोकाः ५०। स्तोत्रार्णवे १३२१ पृष्टे, उपासनापरम्।

२५. विनायकस्तोत्रम्। श्लोकाः ९। स्तोत्रार्णवे ७मे पृष्टे, विघ्ननाशकम्।

२६. विनायकाष्टोत्तरशतनामस्तोत्रं। श्लोकाः १९। स्तोत्ररत्नावल्याम् गीता-प्रेस, गोरखपुर २०१९ विघ्नविनाशकम्।

२७. गणेशोत्तरशतकम्, श्लोकाः ११३। स्तोत्रार्णवे, पृष्ट ५२०। रचयिता विद्वद्रत्नोपनामक-वैयाकरणशिरोमणि-श्रीनीलकण्ठशास्त्री। सर्वदुःखहरम्।

२८. गणेशपूर्वशतकम्, श्लोकाः ११०। स्तोत्रार्णवे पृ० ५१३। श्रीनीलकण्ठशास्त्री। विषयभोगनिवृत्तिकरम्।

२९. श्री गणेशाष्टोत्तरशतदिव्यनाम-स्तोत्रम्। पद्मपुराणतः बा० स० वि० वि० कैट० १४४३।

३०. श्री०गणेशस्तोत्रम्। श्लोकाः २१। शारदातिलके कलकत्ता १९३३।१३२१ पटले १३१-५१।

३१. संकष्ट-नाशन-गणेशस्तोत्रम्, श्लोकाः ८। नारदपुराणतः स्तोत्ररत्नावल्यां गीता-प्रेस, गोरखपुर, विद्यादायकम्।

३२, संकष्टनाशनस्तोत्र पाद्मं, श्लोकाः १५, संकष्टहरम्।

३३. संकष्टहरणगणेश-स्त्रोत्रम् श्लोकाः, गरुडपुराणे २२५ तमेऽध्याये।

३४. संकटहरणगणेशष्टकम्, श्लोकाः ८। वृहत्स्तोत्ररत्नाकरे १म-पृष्टे विजयदम्।

तृतीयोऽध्यायः

# शक्तिस्तोत्राणि

## शक्तिः

१. शक्ति-शब्दार्थः—

तत्रादौ शक्ति-स्तोत्र-प्रसंगे शवित-शब्दार्थोनिरुप्यते तन्मूलकत्वाच्छक्ति-स्तोत्राणाम् । वाक्यार्थज्ञाने पदार्थज्ञानस्य कारणता तु सर्वैरेवांगी कृता । तथा च शक्नोतीति शवितः । शक्लृघातोः "स्त्रियांक्तिन्निति"[१] कृतेक्तिनि प्रत्येये शक्तिः सिद्धयति सर्वकर्मकतुं प्रभुरिति शवितरिति तात्पर्यार्थं । निरुक्ते तु कर्मनाम्नां प्रसंगे शवित-शब्दस्तत्पर्यायत्वेन निर्दिष्टस्तथा च

"कर्मनामान्युत्तराणि···अयः शिमिः शक्तिः शिल्पमिति षड्विंशतिः कर्मनामानि"[२] अत्रैव स्तोत्रेहि यं दिवि देवासो अग्निमजीजनच्छक्तिभिः रोदसीप्राम इति मन्त्र-व्याख्यावसरे शक्तिभिरित्यस्य कर्मभिरित्यर्थो[३] दुर्गादासेन कृतः । बह्वृचोपनिषदि—"देवी ह्येकाग्रआसीत्सैषापरा शक्तिः सर्वशक्ति-भजीजनत्"[४] अत्र शक्तेः पर्यायः देवीतिधृतः ।

आप्टे कृते शब्द-कोशेशक्ति-शब्दस्य क्षमतार्थो निर्दिष्टः ।[५] सप्रभावो-त्साहमन्त्रजन्यत्वेन त्रेधा तथा च रघुवंशे "त्रिसाधनाशक्तिरिवार्थसंक्षयम"[६] हलायुध-कोशे शक्योजेतुमनयेति विग्रह उक्तः । कायजनन-सामथ्यमर्थः कृतः । बलं शौर्यम् स्थामगौरी लक्ष्मी प्राणाः शुष्मं उर्जमित्यादयोऽर्था उक्ताः[७] शब्द-कल्प-द्रुमेऽपि कायजननसामर्थ्यमर्थ उक्तः[८] तत्रैव "या देवी सर्व-भूतेषु शक्ति-

---

१. अष्टाध्यायी-पुस्तके ३।३।९४
२. निरुक्ते निघण्टु काण्डे २।१
३. तत्रैव दैवत-काण्डे ७।२।१
४. ईशाद्यष्टाविंशत्युपनिषदि वाराणसी १९६२ प्राच्यभारतीय प्रकाशन, पृ० ३६७
५. आप्टे संस्कृत ई० कोशे: ५४४ पृ०
६. रघुवंशे ३।१३
७. हलायुधकोशे १८७९, प्रथम संस्करण ५४८ पृष्टे
८. शब्दकल्पद्रुमे, ५ भागे, १९६१ वाराणसी

रूपेण संस्थितेति" मन्त्रे नागोजी भट्टेन शक्यते जेतुमनयेतिकरणेवितन्प्रत्ययः कृतः सा च शक्तिः प्रभावोत्साहमन्त्रभेदात्त्रिधोक्ता । तत्र प्रभुशक्तिः कोषदण्डौ । विक्रमेण स्वशत्त्या विस्फुरणमुत्साह-शक्तिः सामर्थ्यमिति भावः । द्रविणंतरः सहः वलम् शौर्य्यम् स्थाम शुष्मम् पराक्रम प्राण इत्यर्थाः शुष्मसहौ इति शब्द रत्नावली, उर्जं जटाधरः । गौरी मेदिनी । लक्ष्मीरिति शब्दमाला । शक्ति-नाम्नाब्रह्मण उपासना पुराणेषूक्ता तथा च ब्रह्मवैवर्ते—

त्वमेव सर्वजननी मूलप्रकृतिरीश्वरी ।
त्वमेवाद्या सृष्टिविधौस्वेच्छया त्रिगुणत्मिका ॥१॥

कार्यार्थे सगुणा त्वं च वस्तुतो निर्गुणा स्वयम् ।
परब्रह्म-स्वरूपा त्वं, सत्या नित्या सनातनी ॥२॥
तेजः स्वरूपा परमाभक्तानुग्रह-विग्रहा ।
सर्व-स्वरूपा सर्वेशा, सर्वाधिकारा परात्परा ॥३॥[1]

इयं च शक्तिः परा, अविद्याक्षेत्रज्ञभेदेन त्रिधा तथा च विष्णु-पुराणे—
विष्णोः शक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथा परा
अविद्या-कर्म-संज्ञान्या, तृतीया शक्तिरिष्यते ॥१॥[2]

कर्मशक्तिनाम्नाविद्याशक्तिः जगत् वेवेष्टि तथा च—
ययाक्षेत्रज्ञशक्तिः सा, वेष्टिता नृप सर्वगा ।
संसारतापानखिलान्, अवाप्नोत्य तिसंततान् ॥१॥[3]

सर्वभावेषु विभिन्नाशक्तयोयाभिर्भावास्तिष्ठन्ति अपगतासु नश्यन्ति ताश्च शक्तयोऽचिन्त्यास्तथा च विष्णु-पुराणे ।
शक्तयः सर्वभावानामचिन्त्याज्ञानगोचरा ।
यतोऽतोब्रह्मणस्तास्तु, सर्गाद्याभावशक्तयः ॥१॥
श्रावन्तितपतां श्रेष्ठ पावकस्य यथोष्णता ॥[4]

यथैकदेशस्थस्याग्निर्ज्योत्स्ना प्रसरणशीलाभवत्येवमेव परस्य ब्रह्मणः शक्तिः प्रस्फुरण-शीला भवति तथा च विष्णु-पुराणे ।
एकदेशस्थितस्याग्नेः ज्योत्स्ना विस्तारिणी यथा
परस्य ब्रह्मणः शक्तिः, तथेदमखिलं जगत् ॥१॥[5]

श्रीविष्णोरहन्तानामिकाप्येकाशक्तिरस्ति तथा च लक्ष्मी-तन्त्रे ।

---

१. ब्रह्मवैवर्तं पुराणे-प्रकृति खण्डे २।६६।७६
२. विष्णुपुराणे ६।७।६७
३. तत्रैव ६।७।६२
४. विष्णुपुराणे १।३।२।३
५. तत्रैव १।२२।५६

तस्य या परमा शक्तिः ज्योत्स्नेव हिमदीधितेः ।
सर्वावस्था-गतादेवी, स्वात्म-भूतानपायिनी ॥१॥
अनन्ता ब्रह्मणस्तस्य, साहमस्मि सनातनी ॥[1]

अन्यच् च—

नित्य-निर्दोष-निस्सीम-कल्याण-गुणशालिनी ।
अहं नारायणी नाम सा सत्ता वैष्णवी परा ॥१॥[2]

एवं च कारणेष्वपृथक्सिद्धः कार्योपयोगिधर्मः शक्तिः सा च द्विधा केवलं धर्मगता, यथाग्नौ उष्णता, धर्म-धर्म्युभयगता चेति । यथा क्षेत्रज्ञशक्तिः । क्षेत्रज्ञ ईश्वरेविशेषणोऽपिसन् शक्तिमानस्ति तथा च।हिर्बुध्न्यसंहितायाम् शक्तिश्च केति प्रश्नोत्तरे ।

शक्तयः सर्वभावानामचिन्त्या अपृथक्स्थिता ।
स्वरूपे नैवदृश्यन्ते, दृश्यन्ते कार्यतस्तु ताः ॥१॥
सूक्ष्मावस्थाहि सा तेषां, सर्वभावानुगामिनी ।
इदंतया विधातुं सा, न निषेद्धुं च शक्यते ॥२॥
सर्वैरनुयोज्या हि शक्तयो भाव-गोचरा ।
एवं भावगतस्तस्य परस्य ब्रह्मणोमुने ॥१॥
सर्वभावानुगा शक्तिः ज्योत्स्नेवहिमदीधितेः ।
भावाभावानुगातस्य-सर्वकार्यकरी विभोः ॥२॥[4]

शक्त्या विना यस्य कस्यापि देवस्य चराचरस्य च स्थितिरसम्भाव्या । तथा च शिवपुराणे ।

एवं परस्परापेक्षा शक्तिशक्तिमतोः स्थिता ।
न शिवेन विना शक्तिः, न च शक्त्या विना शिवः ॥१॥[5]

शक्तेः कार्याणि च लक्ष्मी-तन्त्रे—

तस्या मे पंचकर्माणि, नित्यानि त्रिदशेश्वर ।
तिरोभावस्तथा सृष्टि-स्थिति-संहृतिरेवच ॥१॥
अनुग्रह इति प्रोक्तं मदीयं कर्मपंचकम् ॥[6]

विष्णोः शक्तिः सर्वकार्यकरी तथा च लक्ष्मी-तन्त्र ।

---

१. लक्ष्मी तन्त्रे २।११।१२
२. तत्रैव ३.१
३. अहिर्बुध्न्यसंहितायाम् ३।१-२
४. तत्रैव ३।४-५
५. शिवपुराणे वायवीयसंहिताया उत्तरखण्डे ४।५
६. लक्ष्मीतन्त्रे १२

सर्व कार्यकरी साहं विष्णोरव्यय-रुपिणी ।
व्यापारस्तस्य देवस्य, साहमस्मि न संशयः ।।१।।
मयाक्तंहि यत्कर्म तेन तत्कृतमुच्यते ।।[1]

शक्तिरेवनादः तस्माच्च बिन्दूद्भवः तथा च शारदातिलके ।

निर्गुणः सगुणश्चेति, शिवो ज्ञेयः सनातनः ।
निर्गुणः प्रकृतेरन्यः, सगुणः सकलः स्मृतः ।।१।।
सच्चिदानन्द-विभवात्, सकलात्परमेश्वरात् ।
आसीच्छक्तिस्ततोनादः, 'नादाद्बिन्दु-समुद्भवः ।।२।।[2]

शक्तिशब्देन वागप्युच्यते तथा चैतरेयारण्यके—

अथवा वागेवेदं सर्वम्[3]

तैत्तरीये ब्राह्मणे च "वाचीमा विश्वा भुवनान्यर्पिता"[4]

शक्तिशब्दे 'श' शब्द ऐश्वर्य वाचकःक्तिश्च पराक्रमवाचकः तद्रूपा तद्दात्री च शक्तिस्तथा च देवी भागवते ।

ऐश्वर्यवचनः शश्च, क्तिः पराक्रम एव च ।
तत्स्वरूपातयोर्दात्री, सा शक्तिः परिकीर्तिता ।।१।।[5]

पृथ्वीद्यौरादयोऽपि शक्तिवाच्यास्तथा च शतपथे—

यथाग्निगर्भापृथिवी तथा द्यौरिन्द्रेणगर्भिणी[6]

जैमनीये च वागिति पृथिवी ।[7]

ब्रह्मणः सगुणरूपस्यार्द्धेन पुरुष-रूपो विष्णुरर्द्धेन स्त्री रूपा नारी । एवं च सर्वः पुरुषः शिव-विष्णु-पद-वाच्यः सर्वा च नारी शक्ति पद-वाच्या । तथा च मनुस्मृतौ—

द्विधाकृत्वाऽत्मनो देहं, अर्द्धेन पुरुषोऽभवत् ।
अर्द्धेन नारी तस्यां स, विराजमसृजत्प्रभुः ।।१।।[8]

मायासंक्लृप्तं जगत् शक्तिकृतमेवतथा च देवी भागवते—

मन्माया-शक्ति-संक्लृप्तं, जगत्सर्वं चराचरम् ।
सापिमत्तः पृथङ्माया, नास्त्येव परमार्थतः ।।१।।[9]

---

१. लक्ष्मीतन्त्रे
२. शारदातिलके, कलकत्ता १.१५।१६
३. एतरेयारण्यके ३।१।६
४. तैत्तरीयारण्यके २।८।८।४।५
५. देवीभागवते ६।२।१०, मनसुखराय, मोर क्लाइव रोड, कलकत्ता १९६०
६. शतपथे १४।६।७।२०
७. जै-सूत्रे, ४।२२।११
८. मनुस्मृत्याम्, १।३२
९. देवीभागवते, ७

शक्तिः परमात्मनोब्रह्मणः परा शक्तिः तस्या एव सर्व जगत् जायते। तथा च—

आराध्या परमा शक्तिः सर्वैरपिसुरासुरैः।
मातुः परतरं किंचिन, नाधिकं भुवनत्रये ॥१॥[1]
त्वं परा प्रकृतिः साक्षात्, ब्रह्मणः परमात्मनः
त्वत्तो जातं जगत्सर्वं त्वं जगज्जननी शिवे ॥२॥[2]

शक्तयश्चषद्—

पराशक्तिः, ज्ञान-शक्तिः, क्रियाशक्तिः,
इच्छाशक्तिः, कुण्डलिनीशक्तिः, अपराशक्तिः ॥[3]

फलितार्थस्त्वयम्—

१. यत्किंचित्क्रियते शक्त्यैव द्रविण-बलपराक्रमादयोऽस्य वाच्याः।
२. धर्म-धर्मिगतत्वेन द्विधा।
३. सर्वास्त्रियः शक्तिरूपाः।
४. शक्तिपदवाच्यंब्रह्म।
५. लक्ष्मी-मेधा-गौरी-सरस्वती-प्रकृत्यादि-शक्तिशब्दवाच्यम्।
६. ऐश्वर्य-पराक्रमरूपा तद्-दात्री च शक्तिः।
७. पृथिव्याकाशादयोऽस्यावाच्यार्थाः।
८. मूल-प्रकृतिः शक्तिः।
९. पराविद्याक्षेत्रज्ञरूपा।
१०. सर्वभावेष्वस्या स्थितिः।
११. सर्वकार्यकरी।
१२. अस्या-एव नादविन्द्वादीनामुत्पत्तिः।
१३. वागादयोऽप्यस्या अर्थाः।
१४. परा-प्रकृत्यादि-रूपा।

## २. शक्ति-संख्या

शक्तेः संख्या-विषयेविभिन्ननिर्देशाः समुपलभ्यन्ते। वस्तुतस्तु एकाप्यनन्ता, अनन्ता चैका। यथा च परमात्मैकोऽपित्रिधा तथा शक्तिरेकापि त्रिधा तथा च—

---

१. शक्त्यंके, गीता प्रेस, गोरखपुर, पृ० ४६
२. तत्रैव, पृ० ४८
३. तत्रैव, पृ० ६८

परमात्मा यथादेव एकएव त्रिधा स्थितः
प्रयोजनवशाच्छक्तिरेकैव त्रिधाभवत् ।।१।।[1]

क्रिया-सारे च-विन्दुः शिवात्मकस्तत्र, बीजं शक्त्यात्मकं स्थितम् ।
"तयोर्योगे भवेन्नादः, तेभ्यो जातास्त्रिशक्तयः ।।१।।"[2]

गोरक्षसिद्धान्ते च त्रिशक्तिभ्यः परमोमिति तथा च—
इच्छा, क्रिया तथा ज्ञानं, गौरीब्राह्मी तु वैष्णवी ।
त्रिधाशवितः स्थिता यत्र, तत्परं ज्योतिरोमिति ।।१।।[3]

ब्रह्मवैवर्तेऽष्ट-शक्तयः—
इन्द्राणी वैष्णवी शान्ता ब्रह्माणी ब्रह्म-वादिनी ।
कौमारी नारसिंही च, वाराही विकटाकृतिः ।।१।।
माहेश्वरी-महामायाः, भैरवी-भीमरूपिणी ।
अष्टौ च शक्तयः सर्वा, रथस्था प्रययुर्मुदम् ।।२।।[4]

एता एव सप्तशत्या अष्टमेऽध्याये रत्नबीजं योद्धुमागता इति वर्णिता ब्रह्मवैवर्ते ११९ तमेऽध्याये अष्टौ शक्तयः कथिताः[5] प्रकृतिखण्डे च नव । प्रपंच-सारे पंचाशद् विष्णुशक्तयः कथितास्तथा च—

कीर्तिः कान्तिः तुष्टिपुष्टी, धृतिः शान्तिः क्रियादयः
प्रीतीरती रमा प्रोक्ता, क्रमेण स्वरशक्तयः ।।१।।
जया दुर्गा प्रभा सत्या, चण्डा वाणी विलासिनी ।
विरजा विजया, विश्वा, विनदा सुनदा स्मृतिः ।।२।।
ऋद्धिः-समृद्धिः शुद्धिश्च, भुक्तिः मतिः क्षमा ।
रमोक्ता क्लादिनी क्लिन्ना, वसुधा वसुधा जरा ।।३।।[6]
परा परायणा सूक्ष्मा सन्ध्या प्रज्ञा परा निशा ।
अमोघा विद्युता चेति, शक्तयः सर्व कामदाः ।।४।।[7]

एवमेव पंचाशच्छूद्रशक्तयः गणोदरी विरजादयः । कुलशक्तयश्च । रेवतीतन्त्रे तृतीये पटले चतुःषष्टि शक्तयः इति ।

## ३. प्रमुखनाम्नामर्थाः—

शक्ति-शब्दार्थे निरुपिते स्तोत्रेषु समागतानाम् शक्ति-प्रमुख-नाम्नामर्थाः

१. शब्दकल्पद्रुमे, ५ भागे शक्तिमाहात्म्यत उद्धृतम् १९६१ संस्करणे
२. तत्रैव, क्रियासारतः उद्धृतम्
३. तत्रैव, गोरक्षासिद्धान्ततः उद्धतम्
४. शब्दकल्पद्रुमे ५ भागे १९६१ संस्करणे, ब्रह्मवैवर्तततः ११९ अध्यायतः उद्धृता
५. तत्रैव, प्रकृति खण्डतः १२० अध्यायतः १८-२०
६. प्रपंचसारतः शब्दकल्पद्रुमे
७. प्रपंचसारे १।११-१४

निर्दिश्यन्ते। तत्रादौ लक्ष्मीः—

**लक्ष्मीः—**

१. लक्षयति नाम दर्शयति चराचरं जगत्सालक्ष्मीः।
२. लक्ष्यते वेदादिभिः शास्त्रैः ज्ञानिभिश्च सालक्ष्मीः।[1]
३. लक्षयतिपश्यति अंकतेचिह्नयतिचराचरं जगत्
अथवा वैदिकै र्योगिभिश्च लक्ष्यते।
४. लक्षेर्मुट्चेत्युणादिसूत्रव्याख्यायां लक्षयति
पश्यत्यंकति वा सा लक्ष्मीः।[2]
५. लक्षयति जनान् लक्ष्यते जनैर्वेति लक्ष्मीः।
६. लक्ष्मीलाभात् लक्षणात् लप्स्यमानात् लांछनात् लषतेर्वास्यात् प्रेप्सा कर्मणेलम्ब्रतेर्वा स्यादाश्लेषाकर्मणोलज्जतेर्वास्यादश्लेषा-कर्मणः[3] इति।
७. जगत् या लक्ष्यमाणा सा लक्ष्मीरिति गीयते।[4]
८. लक्ष-दर्शनाकंनयोः वाहुलकात् मक्प्रत्ययः।[5]

**श्रीः—**

१. श्रयति हरिमिति श्रीः।[6]
२. श्रयन्तीवैष्णवं भावं सा श्रीरितिनिगद्यते।
३. ज्याश्रीयते सेव्यतेसर्वेणजगता विद्वद्भिः योगिभिश्च
सा श्रीरीश्वरी, 'क्विव्वचि' इत्यादिना क्विपिसिद्ध्यति।
४. अहिबुध्न्यसंहितायाम्—

श्रृणाति निखिलान्दोषान्, शणाति च गुणैर्जगत्।
श्रीयते चाखिलैर्नित्यं, श्रयते च परं पदम्॥१॥

**अथर्ववेदे—**

अश्व-पूर्णा रथमध्यां हस्तिनाद-प्रमोदिनीम्।
श्रियंदेवीमुपह्वये, श्रीर्मेदेवीजुषतामिति॥२॥[7]

---

१. सत्यार्थ प्रकाशे, प्रथम संस्करण, पृ० ८
२. उणादिसूत्रम्, ४।१४०
३. अष्टोत्तरनाम मालिका पं० सं०, विद्यासागर शास्त्री, रामगंज, अजमेर २०२०, पृ० १९५
४. अहिबुंध्न्यसंहितायाम् अध्याये
५. अथर्ववेदे, १।४।१८।१।मन्त्रे
६. अहिबुंध्न्यसंहितायाम् शक्त्यंके, पृ० २७
७. अष्टोत्तर शतनाममालिकायाम्, पृ० १९८

एवचं श्रिञ् सेवायाम् हिंसापात्रादिनिष्पद्यते ।

**पद्मा-कमला—**

अव्यक्त-कालपुम्भावात् पद्मा पद्म-मालिनी ।
कामदानाच्चकमला, पर्याय-सुखभोगता: ।।१।।[१]

**देवी—**

(क) द्योतनादिगुण-युक्ता । दिवु क्रीडा विजिगीषा व्यवहार द्युतिस्तुति-मोदमदस्वप्नकान्ति गतिषु । इगुपद्यलक्षणे के प्राप्ते "देवसेव-मेषादय" पचादिषु द्रष्टव्येति वचनात् नन्दि ग्रहीति[२] अचि-देवडिति टित्वेन पाठात् टिड्ढाणञ्जित[३] ङीपि यस्येति चेतीकार-लोपेदेवीति "शन्नो" मन्त्र व्याख्यावसरे सायण:[४] इति ।

(ख) देवो दानात् दीपनात् द्योतनात् द्यु-स्थाने भवति वा स्त्रीत्वे[५] तथा चर्ग्वेदे "देवीमुषसोरोचमानाम्"[६] पुराणी[७] देवीमुषस सुवृत्तिमर्हति ।[८]

**सरस्वती—**

१. सृगतो धातो: सरस्तस्मान्मतुपि
२. सर इत्युदकं नाम तत्कस्मात्सर्तेः सृगतौ इत्यस्य तेन सरसाविशिष्टेन तद्वतीती दुर्गादास:[९]
३. सरो विज्ञानं विद्यते यस्या: सा ।[१०]
४. सर:प्रसरणमस्या अस्तीति निघण्टुभाष्यकारोदेवयज्वा ।
५. सरस्वती देवयन्तो हवन्ते, सरस्वतीमध्वरेतापमाने सरस्वती सुकृतो अह्वयन्त, सरस्वती दाशुषेवार्यप्रदात ।[११]

---

१. शक्यत्तके पृ० २७, अहिर्बुध्न्यसंहितात:
२. अष्टाध्यायाम् (पाणिनि) ३।१।१३४ तथा ४।१।१५
३-४. अथर्ववेदे १।६।१
५. निरुक्ते ७।१५
६. ऋग्वेदे १।११५।२
७. तत्रैव, ३।६१।१
८. तत्रैव ३।६०
९. निरुक्ते ३।२६ व्याख्यायाम्
१०. सत्यार्थप्रकाशे प्र० सं०, पृ० १६ व्याख्यायां निघण्टुभाष्यत:
११. ऋग्वेदे १०।१७।४

**वृहद्देवतायां च—**

सरांसि धृतवन्त्यस्य, सन्ति लोकेषु यन्त्रिषु
सरस्वन्तमितिप्राहुः वाचं प्राह सरस्वतीम् ।।१।।[1]
अरण्यानी च रात्री च, श्रद्धा चोषाः सरस्वती ।
पृथिवी चैव नामैषा, भूत्वाप्यर्चं भजन्ति ।।२।।[2]

एषैव दुर्गा सूर्या सती गौरी तथा च वृहद् देवतायाम्—

एषैव दुर्गा भूत्वर्चं कृत्वा स्यात्सूवतवर्णिनी ।।[3]
सूर्यामेव सतीमेतां गौरीं वाचं सरस्वतीम् ।
पश्यामो वैश्वदेवेषु निपातेनैव केवला ।।२।।[4]
सरस्वतीत्वमितयस्मिन् अधर्चे मध्यमानुवाक् ।।[5]

**चण्डिका**

१. चण्ड्यते कुप्यते इति चण्डा चण्डो च सैव चण्डिका बह्वादिम्यश्चेति[6] ङीपि केऽण[7] इति ह्रस्वे ।
२. यद्वाकुत्स्तिशत्रुर्मिनिन्दिता संज्ञायां कन् ।
३. चण्ड उग्रः शिवः तस्य स्त्री संज्ञायां कनि ।
४. चण्डयते इति चण्डिकाण्वुलि युवोरनाकौ इत्यकि स्त्रीत्वे प्रत्ययस्थादिति[8] इत्वे । प्रपचितं चैतत् सर्वशान्तनवीव्याख्यायां मार्कण्डेयपुराणे ।[9]

**महामाया—**

१. "मात्यस्यां विश्वमितिमाया" "माकाम्यामयचि ।"
२. मानपूजायाम् चुरादिः मानयितुर्महामाया पृषोदरादित्वान्मलोपः ।
३. मा लक्ष्मी अयः शुभावहोविधिः यस्याः सामाया महतीचासौ माया महामाया ।
४. अः विष्णुस्तस्या माया महती चासौ माया महामाया ।

---

१. वृहद्देवतायाम् २।५१ तथा २।७४
२-३. तत्रैव २।७७
४. तत्रैव २।८१
५. तत्रैव २।८५
६. अष्टाध्यायाम् ४।१।४५
७. तत्रैव ७।४।१३
८. अष्टाध्यायाम् ७।१।७
९. तत्रैव ७।३।४

५. अय्गतौ अययति अर्पयतिणिजन्तात् पचाद्यचि स्त्रियांटापि अया आसमन्तात् अभिव्याप्तां मां लक्ष्मीं उपासकाय अयमति अर्पयति वा शक्तिर्भवतीतिमहामाया ।[1]

**सीता**—

(क) मूल-प्रकृति-रूपत्वात्सा सीता प्रकृतिः स्वयम् ।
प्रणव-प्रकृति रूपत्वात्, सा-सीता प्रकृतिरुच्यते ।।१।।[2]

(ख) सीतेति त्रिवर्णात्सा साक्षान्मायामयो भवेत् ।
विष्णो-प्रपंचबीजंच, माया ईकार उच्यते ।।१।।
सकारः सत्यममृतं प्राप्तिः सोमश्च कीर्त्यते ।
तकारः तार-लक्ष्म्याश्च वैराजः प्रस्तरः स्मृतः ।।२।।
सीताभगवतीतज्ञेया, मूल-प्रकृति-संज्ञिता ।
प्रणवत्त्वात्प्रकृतिरिति, वदन्ति ब्रह्मवादिनः ।।३।।[3]

**दुर्गा**— १. दुर्दुःखेन गम्यते प्राप्यते ।
२. दुर्दुःखेन गम्यते ऽथवा ।[4]
३. दुर्गासन्त्रासनात् दुर्गा तथा च सप्तशत्याम्
तत्रैव च बधिष्यामि दुर्गमाख्यंमहासुरम्
दुर्गा देवीति विख्यातं तन्मेनाम भविष्यति ।।१।।[5]
४. सर्व-बुद्ध्यधिदेवीयमन्तर्यामिस्वरूपिणी ।
दुर्ग-संकटहंत्रीति दुर्गेति प्रथिता भुवि ।।२।।[6]
५. दुर्गात्संत्रायते यस्माद् देवी दुर्गेति कथ्यते ।
मूल-प्रकृति रूपिरायाः सम्विदो जगदुद्भवे ।।
प्रादुर्भूतं शंक्तियुग्मं प्राणबुद्ध्यधिदैवतम् ।।१।।
दुर्गाबुद्ध्यधिष्ठात्री राधाप्राणेश्वरीमता ।

**राधा**— राध्नोति सकलान्कामान्, तस्माद्राधेतिकीर्तिता ।।२।।[7]

**प्रकृति**—प्रशद्वऽत्रप्रोपसर्गः कृतिश्च प्रशब्दः प्रकृष्टवाचकः कृतिश्च सृष्टौप्रवर्तते च ब्रह्म-वैवर्ते—

१. मार्कण्डेय पुराणे ८१।१ व्याख्या मनसुखराय क्लाइव रोड, कलकत्ता, १६६०
२. शाक्तोपनिषदिः (आडयार पुस्तकालये १९२५ श्री महादेवशास्त्री). पृ० ८९
३. तत्रैव ८९-९१ पृ०
४, हलायुधकोशे, ३५८
५. सप्तशती स्तोत्रे ११:४९-५०
६. देवीभागवते ८।५०
७. तत्रैव ७।८

प्रकृष्टवाचकः प्रश्च, कृतिश्च सृष्टिवाचकः
सृष्टौ प्रकृष्टा देवी, प्रकृतिः सा प्रकीर्तिता ॥१॥[1]

प्रकृतौ प्रशब्दस्य सत्त्वगुणोऽर्थः कृश्च रजसि तिश्च तमसि तथा च देवी-**भागवते**—

गुणेसत्त्वेप्रकृष्टे प्रशब्दो वर्तते श्रुतः।
मध्यमेरजसिकृश्चेति तिशब्दस्तमसिस्मृतः ॥१॥
त्रिगुणात्मस्वरूपायाः सा च शक्तिसमन्विता।
प्रधाना सृष्टिकरणे, प्रकृतिस्तेन कथ्यते ॥२॥
प्रथमेवर्ततेप्रश्च कृतिश्च सृष्टिवाचकः।
सृष्टेरादौ यादेवी, प्रकृतिः साप्रकीर्तिता ॥३॥[2]

## ४. महात्म्यम्—

वस्तुतस्त्वस्या माहात्म्यं नेति नेतीति शब्दैरेव वक्तुं शक्यते। शब्दार्थ-प्रकरणे तदर्थ निरूपणे च केचिदंशाः स्पष्टीकृताः। जगति यत्किंचिद्भूतं, भविष्यति भवति वा सर्व शक्त्यैव। मनोरथं पूरयितुमस्याः प्रभावादेव समर्थो भवति जनः। शक्तिप्रभावादेव विधिहरिहरादयः स्व-स्वकार्थ सम्पादयन्ति। तथा शक्ति-कागमसर्वस्वतन्त्रे—

शक्तिं विना महेशानि, सदाहं शवरूपकः।
शक्तियुक्तो यदादेवि शिवोऽहं सर्वकामदः ॥१॥
शक्तियुक्तं जपेन्मन्त्रंनमन्त्रं केवलं जपेत्।
सावित्रीसहितोब्रह्मा, सिद्धोऽभून्नगनन्दनि ॥२॥
द्वारवत्यां कृष्णदेवः, सिद्धोऽभूत्सत्ययासह।
तथा क्रौंचवधूसंगान्ममसिद्धिर्वरानने ॥३॥
ईश्वरोऽहंमहादेवि, केवलं शक्ति-योगतः ॥४॥[3]

शक्तिमन्त एवावतिष्ठन्ते नेतरे तथाचोत्पत्ति-माहात्म्ये—

सहबुद्ध्या बुद्धिमन्तो, न वक्तुमुचितेसराः
सर्वे शक्त्यालयेविश्वे शक्तिमन्तोहिजीविनः ॥१॥[4]

शक्तिमाहात्म्यं-शिवपुराणे-—

ज्ञानशक्तिस्तुतत्कार्य कारणं करणं तथा।

---

१. ब्रह्मवैवर्तपुराणे २।१।५
२. देवीभागवते ६।१।६-८, मनसुखराय मोर क्लाइव रोड, कलकत्ता, १९६०
३. शब्दकल्पद्रुमे ५ भागे, १९६१। वाराणसी, शक्ति-शब्दार्थे।
४. तत्रैव, शक्तिकागमसर्वस्वतन्त्रतः।

प्रयोजनं च तत्त्वेन बुद्धिरूपाध्यवस्यति ।।१।।
यथेप्सितं क्रियाशक्तिः यथाध्यवसितं जगत् ।
कल्पयत्यखिल-कार्याणि, क्षिणोत्संकल्परूपिणी ।।२।।[1]

देवी-भागवते स्पष्टं कथितं यत् सर्वं कार्यंशक्त्यैव । जनाः विष्णुहीनं शिवहीनं न व्यवहरन्ति कंचित् शक्ति-हीनं बदन्ति

रुद्रहीनं विष्णुहीनं न वदन्ति जनाः किल ।
शक्तिहीनं यथासर्वं प्रवदन्ति नराधमम् ।।१।।[2]

ब्रह्मवैंवर्तें च गणेश-खण्डस्य सप्तमाध्याये स्पष्टमेवेरितम् यत् ब्रह्म-विष्णु-शिवादयः सर्वे शक्त्यैव । यथा कुलालोमृदा विना घटं कुर्तुमक्षमः स्वर्णकारः स्वर्णंविना कुण्डलंकर्तुमक्षमः । तथैव शिवादयः शक्त्याविना किंचित्कर्तुं मक्षमाः । शक्तिरत्रोपादानकारणत्वेनोक्तजगतःसमवायसम्बन्धोऽपि तया सह ।

सप्तशत्या विविध-मन्त्राणामाराधनेनासम्भवानि कार्याणयपिसिध्यन्ति तथा च—रोगनाशाय ।

रोगानशेषानपहंसितुष्टा, रुष्टातुकामान्सकलानभीष्टान्
त्वामाश्रितानां न विपन्नराणाँ, त्वामाश्रिताह्याश्रयतां प्रयन्ति ।[3]

सामूहिककल्याणाय च—

देव्या यया ततमिदं जगदात्मशक्त्या ।
निश्शेषदेवगण शक्तिसमूहमर्त्या ।
तामम्बिकामखिलदेवमहर्षिपूज्याम्
भक्त्यानताःस्म विदधातु शुभानिसा नः । १।।[4]

जगतोऽशुभविनाशाय—

यस्याः प्रभावमतुलंभगवाननन्तो
ब्रह्मा हरश्च नहि वक्तुमलं वलं च ।
सा चण्डिकाखिल-जगत्परिपालनाय
नाशाय चाशुभभयस्य मतिं करोतु ।।१।।[5]

एवं भगवती सर्वं कर्तुं क्षमा । तस्या निमेषपातमात्रेणाशक्यमपि सम्भवति । अतएवाघटित-घटना-पटीयसीयमुच्यते ।

इयमेव भगवती सुकृतिनांभवेनेपुलक्ष्मीरन्यत्रालक्ष्मीः । अनयैव विश्वरक्षा सम्भवति । तथा च सप्तशत्याम् विश्वरक्षायै ।

---

१, शिवपुराणे वायवीय संहितातः ७।८
२. देवीभागवते ३।६।१५
३. सप्तशतीस्तोत्रे ११।२९
४. तत्रैव ४।३
५, सप्तशती स्तोत्रे ४।४

या श्रीः स्वयं सुकृतिनां भवनेष्वलक्ष्मीः
पापात्मनां कृतधियां हृदयेषुबुद्धिः ।
श्रद्धासतांकुलजन—प्रभवस्य लज्जा
तां त्वां नताःस्म परिपालय देवि विश्वम् ।।१।।[1]

अभ्युदयाय—

विश्वेश्वरीत्वं परिपासि विश्वम्
विश्वात्मिकाधारयसीतिविश्वम् ।
विश्वेशवन्द्या भवत भवन्ति
विश्वाश्रया ये त्वयि भक्ति-नम्राः ।।१।।[2]

विपद्विनाशाय—,

शरणागतदीनार्त-परित्राण-परायणे ।
सर्वस्यार्ति-हरेदेवि, नारायणि नमोऽस्तुते ।।१।।[3]

श्रीसूक्ते च—

ऋणरोगादि-दारिद्र्यम्, पापं च अपमृत्यवः ।
भयशोक-मनस्तापाः नश्यन्तु मम सर्वदा ।।१।।[4]

अन्यच् च—

श्रीर्वर्चस्वमायुष्यमारोग्यमाविमधावत्पवमानेमहीयते ।
धन-धान्यंपशुंबहुपुत्रलामं शतसम्वत्सरंदीर्घमायुः ।।२।।[1]

एवं चास्याभगवत्या आराधनया आध्यात्मिकाधिदैविकाधिभौतिकोपद्रवाणांशान्तिः ।

## ५. शक्त्याःस्वरूपम् वैदिकम्

शक्तिस्तोत्र-निरूपणप्रस्तावेऽस्याः वैदिकस्वरूपविवेचनमत्यावश्यकं । वेदप्रमाणत्वात्सर्वविषयाणाम् । वस्तुतोऽस्या स्वरूपमनिर्वचनीयं । ब्रह्मविष्णुशिवपत्न्यः शक्तयो वा लक्ष्मी-पार्वती-सरस्वत्यस्तथा च महानारायणोपनिषदि—

"ओं ह्रीं श्रीश्च ते लक्ष्मीश्च पत्न्यौ ।"[6]

इयं च परमादेवी शतमूला शतांकुरा दुःस्वप्नादिनाशिनी तथा च तत्रैवोपनिषदि । दूर्वारूपाचेयम् ।

---

१. तत्रैव ४।५
२. तत्रैव ११।३३
३. तत्रैव ११।१२
४. श्रीसूक्ते, २६
५. तत्रैव, २७
६. महानारायणोपनिषदि (विमलानन्द मैसूर), पृ० २१

सहस्रपरमादेवी शतमूलाशतांकुरा ।
सर्बंहरतु मे पापं. दूर्वा दुःस्वप्न-नाशिनी ।।१।।[1]
सर्वजनानामलक्ष्मीनाशिका । तथा च
श्रीर्मेभजतु अलक्ष्मीर्मेनश्यतु ।[2]

श्री सूक्ते च—

ऋण-रोगादिदारिद्र्यं, पापं चापमृत्यवः ।
भयशोकमनस्तापाः नश्यन्तु मम सर्वदा ।।२।।[3]

लक्ष्मी-रूपेणहिरण्य-वर्णा, स्वर्ण-रजत-मालिका-श्वेताश्व-पूर्णा रथस्था हस्तिनादा । आदित्यवर्णासिद्धिपुष्टिकारिणी सर्व-भूतानामीश्वरी तथा च श्री-सूक्ते ।

ओं हिरण्य-वर्णां हरिणीं, सुवर्ण-रजतस्रजां ।
चन्द्रां हिरण्य-मयीं लक्ष्मीं, जातवेदो ममावह ।।१।।
अश्वपूर्णां रथमध्यस्थां हस्तिनाद-प्रमोदिनतीम् ।
श्रियंदेवीमुपह्वये श्रीर्मा देवी जुषतामिति ।।२।।
चन्द्रांप्रभासां यशसा ज्वलन्तीं,
श्रियंलोके देव-जुष्टामुदाराम् ।
तां पद्मनेमींशरणमहंप्रपद्ये
अलक्ष्मीर्मेनश्यतांत्वांवृणोमि ।।३।।[4]

भगवती, अजा लोहिता शुक्ला कृष्ण । सृष्टौलोहिता पालने शुक्ला संहारे कृष्णा तथा च महानारायाणेपनिषदि ।

अजामेकां लोहितशुक्ल-कृष्णां,
बह्वीं प्रजांजनयन्तीं सुरुपाम् ।
अजोह्यन्यो जुषमाणोऽनुशेते,
जहात्येनांभुक्तभोगामजोऽन्यः ।।१।।[5]

रोचमाना चेयं तथा चर्ग्वदे : "देवीमुषसं रोचमानाम्"[6]

पुराणी, अपीयं युवतिर्नित्या सनातनत्वात् व्रतधारिणी हिरण्यवर्णा तथा चर्क्संहितायाम्—

---

१. तत्रैव, १।३४
२. महानारायणणोपनिषदि (विमलानन्द मैसूर), १।४८, पृ० ७५
३. श्रीसुक्ते, २६
४. तत्रैव, १,३,५,६
५. महानारोयणोपनिषदि (विमलानन्द मैसूर), ५।२, पृ० १४३
६. ऋर्क्संहितायाम् १।११५।२

पुराणीदेवीयुवतिः पुरन्धिरनुव्रतं चरतिविश्वयोरसेदव ।[1]
अच्छावोदेवीमुषसंविमातीप्रवोमरव्वंनयसासुवृत्रि ।[2]
हिरण्यपाणिः संविता विचर्षणी ।[3]

द्योतनादि-गुण-युक्ता दान-दीपन-द्योतन-द्युस्थानत्वादि-युक्ता तथा "शन्नोदेवीति[4] मन्त्र-व्याख्यायां सायणः प्रातः सूर्यसमप्रभा पाशां-कुश-धारिणी त्रिनेत्रा रक्तवसना महापापविनाशिनी तथा च देव्युपनिषदि ।

हृत्पुण्डरीकमध्यस्थां प्रातः सूर्यसम-प्रमाम् ।
पाशांकुशधरां सौम्यां वरदाभयहस्तकाम् ॥१॥
त्रिनेत्रां रक्त-वसनां भक्तकामदुहंभजे ।
भजामि त्वां महादेवि, महाभयविनाशिनी ॥२॥[5]

महत्तत्वादिरूपेणेयं जगद्व्याप्नोति । सर्वप्रकाशिका रात्रौ च विशेषेण पश्यति जनान् । समस्त-विभूतिधारिका तथा चर्क् सहितायां ।

ओं रात्रीव्यख्यदायती पुरत्रादेव्यक्षिभिः ।
विश्वा अधिश्रियोऽधित ॥[6]

भगवतीजगदम्बिका पामरान्स्वांकेधारयति ग्रामवासिनः पक्षिणो नराः नगरवासिनो वा तदङ्कमासाद्यसुखंस्वपन्ति तथा च ऋग्देवे—

निग्रामाहो अविक्षतनिपद्वन्तो निपक्षिणः निश्येना सश्चिवदर्थिनः ।[7]

सर्वे देवा अस्यामेव सन्निविष्टा । इयमेव सत्वरजस्तमांसि । देवदानवगन्धर्वमनुष्याः विभिन्नाधारेण वसन्त । ब्रह्म-विष्णु-रुद्रादयोऽस्या एव स्वरूपान्तराः ग्रहनक्षत्रादयोऽस्याः रूपाणि काल-परिमाणानिचेयमेव तथा च देव्युपनिषदि—

"सैंषाष्टौवसवः, सेषैंकादश रुद्रा, सैंषाद्वादशादित्या, सैंषा विश्वेदेवाः, सोमपा असोमपाश्च । सैषा यातुधाना असुरारक्षांसि पिशाचाः यक्षाः सिद्धाः सैंषा सत्वरजस्तमांसि । सैंषाब्रह्मविष्णुरुद्र-रुपिणी । सैंषाप्रजापतीन्द्रमनवः । सैंषाग्रहनक्षत्रज्योर्तीषि कालाकाष्ठादिकाल-रूपिणी ।"[8]

तथा चेयम् ब्रह्मरूपिणी विविधदेवैः सहचरतिसर्वान् च दधाति । तथा

---

१. ऋक्संहितायाम् ३।६१।१
२. तत्रैव ३।६१।५
३. तत्रैव १।३५।६
४. अथर्ववेदे १।६।१
५. देव्युपनिषदि, २१
६. ऋक्संहितायाम् १०।१०।१२७।१
७. ऋग्वेदे १।१०।१२७।५
८. देव्युपनिषदि, १७

च ऋक्वेदे—

अहंरुद्रेभिर्वसुभिः चराम्यहमादित्यैरुतविश्वदेवैः ।
अहं मित्रावरुणावुभौविभर्मि, अहमिन्द्राग्नी अहमश्विनावुभा ।।
अहं सोममाहनसं विर्भमि अहं त्वष्टारमुतवृषणं भगम्
अहं दधामिद्रविणं हविष्मते, सुप्रात्यायययजनाय
अहंरुद्राय धनुरातनोमि, ब्रह्मद्विषेशरवेहन्तवाउ
अहंजनाय समदं कृणोमि, अहद्यावापृथिवी आविवेश ।[१]

अथर्ववेदेचैमौमन्त्रावविकल-रूपेणधृतौ ।[२]

तथा चास्याः ब्रह्मत्वं सर्वदेवब्रह्मविष्णु-रुद्रादि-जनकत्वेन सर्व-कारणत्वेन च निर्विवादम् । तथा च श्वेताश्वतरोपनिषदि ।

मायांतु प्रकृतिं विद्यात्, मायिनं तु महेश्वरम् ।
तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत् ।।१।।[३]
द्वे अक्षरेब्रह्मपरे त्वनन्ते, विद्याविद्ये निहिते-चात्र गूढे ।
क्षरंत्वविद्याह्यमृतं तु विद्या, विद्याविद्ये ईशेते यस्तु स देवः ।।२।।[४]

गीतायां च—

मम योनिर्महद्ब्रह्म, तस्मिन्गर्भंदधाम्यहम् ।
सम्भवः सर्वभूतानां, ततो भवति भारतः ।।१।।[५]
मयाध्यक्षेण प्रकृतिः सूयते सचराचरम् ।
हेतुनानेन कौन्तेय, जगद्विपरिवर्तते ।।१।।[६]

ब्रह्मसूत्रे—"सर्वोपेता तद्दर्शनात् ।"[७]

श्वेताश्वतरोपनिषादि च—

ते ध्यानयोगानुगता अपश्यन्;
देवात्मशक्तिं स्वगुणैर्निगूढाम् ।
यः कारणानि निखिलानि तानि,
कालात्मयुक्तयान्यधितिष्ठत्येकः ।।१।।[८]

इयमेव ब्रह्मणः परशक्तिः कथ्यते । तथा च तत्रैव—

---

१. ऋग्वेदे १०।७।१२५। १,२ तथा ६
२. अथर्ववेदे ४।३०।१ तथा ५, पृ० ५१६
३. श्वेताश्चवतरोपनिषदि ४।१०
४. श्वेताश्वतरोपनिपद् ५।१
५. श्रीमद्भगवद्गीतायाम् १४।३
६. तत्रैव ९।१
७. वेदान्तदर्शने, ब्रह्मसूत्रे, गीताप्रेस, गोरखपुर २०१४, तृ० सं० २।१।३०
८, श्वे० उप० १।३।७

नतस्यकार्यंकरणं च विद्यते,
न तन्समश्चाभ्यधिकश्च दृश्यते।
परास्य शक्तिर्विविधैवश्रूयते
स्वाभाविकी ज्ञानबलक्रिया च ।।१।।[1]

वहवृचोपनिषदि—सच्चिदानन्दलहरी, महात्रिपुरसुन्दरी
प्रविश्य स्वयमेकैवविभाति सैवात्माततोऽ
न्यदनात्माचिदाद्याद्वितीयब्रह्मसम्विदिति ।।[2]

देवी भगवती ब्रह्मस्वरूपा सर्वंविदधाति । इयमेवासीत् ततः सर्वं प्रावर्तत । अस्यामेवजीवाः प्रलयं यान्ति अतएव जायन्ते जीवन्ति च। तथा च जाबालोपनिषदि । शक्त्यंके—

विद्याशक्तिः समस्तानां शक्तिरित्यभिधीयते ।[3]

अनयैव प्रेरितं सर्वं भवति । अस्या एवकृपया आयुर्द्रविणं ब्रह्म-वर्चस्वादीनि प्राप्यन्ते । तथा च महानारायणोपनिषदि ।

स्तुता मया वरदा वेदमाता, प्रचोदयन्ती पवतेद्विजाताः

अथर्ववेदे च सरस्वत्याः देव्या उपासना कथिता हविषा यजनं च प्रतिपादितम् ।

सरस्वत्यावाचमुपह्वयामहे ।[4]
सरस्वत्या उरु व्यथेविन्देमहविषावयम् ।[5]

इत्थं च ऋग्यजुरथर्ववेदेदोपनिषदारण्यक-संहितासु श्रीसूक्तोषोऽथर्ववेदेदेवी-सूक्तादिषुभगवत्या देव्याः निर्देशः प्राप्यते । ब्रह्मस्वरूपेण वर्णनं चोपलभ्यते । अस्याः उपासनायाः प्राचीनता सिद्ध्यति ।

तथा शक्ति-पूजोत्तर-कालिकीबौद्ध-प्रभावात् अचलिदिति पाश्चात्यानां वादो नादरणीय इति । मुण्डकोपनिषदि च—

काला कराली च मनोजवा च[6]

## (ख) लौकिकं स्वरूपं (स्तोत्रप्रतिपादितम्)

वेदादिषु भगवत्याःस्वरूपे प्रतिपादिते तदुत्तरकालीन-साहित्येपुराणादौ विशेषतः स्तोत्रेषु तस्याः स्वरूपम् क्रिमितिवर्ण्यते। भारतीयवाङ्मयेशक्ति-साहित्यं

१. तत्रैव ७।८
२. वृहवृचोपनिषदि ३६
३. शक्त्यंके, गीता प्रेस गोरखपुर, पृ० २७३
४. अथर्ववेदे ५।१०।८
५. तत्रैव, ५।२३।१
६. मुण्डकोपनिषदि १।२।४

स्वानन्तराशित्वं गाम्भीर्यं चावहति। शक्ति-शक्तिमतोः ब्रह्मशक्त्योः कोऽपि भेदोनास्ति। तथा च शक्तिस्वरूपनिरूपणं वा ब्रह्मणोनिरूपणं प्रकारान्तरेण। शिवेन विना शक्तिः शक्त्या विना च शिवः नावतिष्ठेते। उभयोः परस्परापेक्षित्वात्। समर्थितोऽयमर्थः पुराणदिषु तथाब्रह्मवैवर्ते (शक्तिस्तोत्रे)

तेजः स्वरूपा परमा भक्तानुग्रह-विग्रहा।
सर्वस्वरूपा सर्वेशा, सर्वाधारापरात्परा ॥१॥
सर्ववीजस्वरूपा च, सर्वपूज्या निराश्रया।
सर्वज्ञा सर्वतोभद्रा, सर्वमंगल-मंगला ॥२॥[1]

मार्कण्डेयेचास्या सर्वजगतां हेतुत्वमभिहितम्। दुर्गास्तोत्रे—

हेतुः समस्तजगतां त्रिगुणापिदोषैः,
न ज्ञायसे हरिहरादिभिरप्यपारा।
सर्वाश्रयाखिलमिदं जगदशंभूतम्
अव्याकृताहिपरमाप्रकृतिस्त्वमाद्या ॥१॥[2]

गीतायामपि-भगवतोऽध्यक्षत्वेप्रकृतिरेवजगतप्रसौति तथा च तत्रैव

मयाध्यक्षेणप्रकृतिः सूयते सचराचरम्
हेतुनानेन कौन्तेय, जगद्विपरिवर्तते ॥१॥[3]

अन्यच्च—प्रकृतिं पुरुषं चैव विद्ध्यनादीहूयुभावपि।[4]
भागवते च— दैवात् क्षुभितधर्मिण्यां, स्वस्यां योनौपरः पुमान्
आधत्तं वीर्यं सासूत, महत्तत्वं हिरण्यमयम् ॥१॥[5]

सौन्दर्यलहरी स्तोत्रे भगवता शंकरेणापि शिवशक्त्योरद्वैततोक्ता। तथा च—

शिवःशक्त्या युक्तोयदि भवतिशक्तः प्रभवितुं
न चेदेवंदेवः नखलु कुशलः स्पन्दितुमपि।
अतस्त्वामाराध्यां हरिहरविरिंचादिभिरपि
प्रणन्तेस्तोतुम्वा, कथमकृतपुरायः प्रभवति ॥१॥[6]

ब्राह्मण एवास्या अप्यवतारा: भवन्ति तथा च भागवते

---

१. ब्रह्मवैवर्तपुराणे प्रकृतिखण्डे २।६६।९-१०
२. मार्कण्डेय पुराणे, मनसुखराय मोर, क्लाइव रोड, कलकत्ता २०१८, दुर्गास्तोत्रे ८१।७
३. गीतायाम् ९।१०
१. गीतायाम् ९।१०
२. भागवते, गीताप्रेस गोरखपुर २०१८, ३।२६।१९
३. सौन्दर्यलहरी स्तोत्रे १, पंचस्तवी च १९५३ मैसूरे

नामधेयानिकुर्वन्ति स्थानानि च नराःभुवि ।
दुर्गेति भद्र-कालीति विजयावैष्णवीति च ॥१॥[1]

मार्कण्डेय-पुराणे सप्तशतीस्तोत्रे च—

इत्थं यदा यदा बाधा दानवोत्था भविष्यति
तदा तदाववतीर्य्याहं करिष्याम्यरिसंक्षयम् ॥१॥[2]

देवीभागवतेमुहुर्मुहुरनया ब्रह्मणोऽभेदःकथितः ।

एकमेवाद्वितीयंयत्, ब्रह्मवेदाःवदन्ति वै ।
सात्वं किं वाप्यसौ वाकिं, सन्देहं विनिवर्तय ॥१॥[3]

अस्योत्तरमपि तत्रैव

सदैकत्वं न भेदोऽस्ति, सर्वदैव ममास्य च ।
योऽसौ साहमहंयोऽसौ, भेदोऽस्ति खलुविभ्रमात् ॥१॥[4]

तन्त्र-ग्रन्थ कृत् पण्डितोमानाथोऽपि ।

यस्या दृष्टोनैव भूमण्डलांशो
यस्या दासोविद्यते नाक्षितीशः ।
यस्याज्ञातं नैवशास्त्रं किमन्यैः
यस्याकारः सा पराशक्तिरेव ॥१॥[5]

प्रकृतिरूपा शक्तिरपि नित्या तदभावेब्रह्मणोऽकिंचत्करत्वात् तथा च प्रपंच-सारे—

प्रकृतिः पुरुषश्च नित्यौ कालश्च[6]

इयं भगवती नित्यापि देवानां कार्य-सिद्ध्यर्थमाविर्भवति । दुर्गा-स्तोत्रे

देवानां कार्यसिद्ध्यर्थमाविर्भवति सा यदा ।
उत्पन्नेतितदालोके सा नित्याप्यभिधीयते ॥१॥[7]

देवीभागवतेप्रकृतिरूपेणाख्याता—

एषाभगवती देवी सर्वेषां कारणं हि नः ।
महाविद्या महामाया, पूर्णाप्रकृतिरिष्यते ॥१॥
दुर्गाज्ञेयाऽल्पधियां देवी योगगम्या दुराशया

---

१. भागवते १०।२।१२
२. मार्कण्डेयपुराणे ९१।५१। मनसुखराय क्लाइव रोड, कलकत्ता २०१८
३. देवीभागवते ३।५।४१, मनसुखराय क्लाइव रोड, कलकत्ता २०१७
४. तत्रैव ३।६।२
५. शक्त्यंके, गीताप्रैस गोरखपुर १९९१, पृ० २९१
६. प्रपंचसारे १।२१
७. मार्कण्डेय पुराणे ८१।४८

इच्छा परातमनः कामं, नित्यानित्य-स्वरूपिणी ।।२।।[1]

योगवासिष्ठे भगवान् वसिष्ठोऽपि, आह ।

ज्ञान-शक्तिः क्रियाशक्तिः, कर्मता कर्तृतापिवा ।
इत्यादिकानां शक्तीनां, अन्तोनास्ति शिवात्मनः ।।१।।
चिच्छवितर्ब्रह्मणोत्र, शरीरेष्वपिदृश्यते ।
स्पन्दशक्तिश्चवर्तिषु, जडशक्तिस्तथोपले ।।२।।[2]

भगवत्याः साकाररूपे विभिन्नदेवीनां विभिन्न-प्रकारेण रूप-कल्पना तथा च मार्कण्डेये—

सरथस्थस्तथात्युच्चैः गृहीतपरमायुधैः ।
भुजैरष्टाभिरतुलैर्व्याप्याशेषंबभौनभः ।।१।।[3]

देवीभागवते सहस्र-भुज-वर्णनम् । देवी-स्तोत्रे—

सहस्रनयनारामा, सहस्रकर-संयुता ।
सहस्रवदना रम्या, भातिदूरादसंशया ।।१।।[4]

तुलना-सहस्र शीर्षा पुरुषः सहस्राक्षः सहस्रपात् (यजुर्वेद)

दश-भुजा भगवतीरूपे महाकाली स्वहस्तेषु खड्गचक्र-गदेषु-चाप-परिघभुशुण्डी-शिरःशंखान् धारयति त्रिनयना च । नीलाश्मद्युतिस्तथा च ध्यान-श्लोके—

खड्गं चक्रगदेषु-चाप-परिधान् शूलंभुशुण्डीं शिरः ।
शंखसन्दधतींकरैस्त्रिनयनां सर्वांगभूषा-वृताम् ।
नीलाश्म-द्युतिमास्य पाददशकां सेवेमहाकालिकाम् ।
यामस्तौत्स्वपितेहरौ कमलजं हन्तुं मधु-कैटभम् ।।१।।[5]

महालक्ष्मी च स्वस्वरूपेऽक्षमालापरशुगदाशर-वज्रपद्म धनुः कुण्डिका दण्डशक्ति-खड्गादीनि हस्तेषु धारयति । तथा च दुर्गायाः ध्यान-श्लोके—

ओम् अक्षस्रक्परशुं गदेषु-कुलिशं पद्मं धनुः कुण्डिकां
दण्डं शक्तिमसिं च चर्मजलजं घण्टां सुराभाजनम् ।
शूलं पाश-सुदर्शने च दधतीं हस्तैः प्रसन्नानाम् ।
सेवेसैरिभमर्दिनीमिह, महालक्ष्मीं सरोजस्थिताम् ।।१।।[6]

---

१. देवीभागवते ३।३।५१-५२ मनसुखराय (कलकत्ता), २०१७
२. योगवासिष्ठे ६।३७।१६ तथा ६।१०७।७
३. मार्कण्डेयपुराणे ८६।१६
४. देवीभागवते, देवीस्तोत्रे ३।३।४८
५. दुर्गासप्तशती स्तोत्रे, गीता प्रेस गोरखपुर २०१५—प्रथमाध्याये ध्यानश्लोक, पृ० ६४
६. तत्रैव, ध्यानश्लोके ८२, द्वितीयाध्याये

महासरस्वती च--घण्टा-शूल-हल-शंख-मुसलादीनि धारयति वीणा-पुस्तकधारिणी च ।

घण्टाशूलहलानिशंखमुसलेचक्रंधनुः सायकं
हस्ताब्जैर्दधतीं घनान्तविलसच्छीतांशुतुल्यप्रभां
गौरींदेहसमुद्भवां त्रिजगतामाधारभूतामहा-
पूर्वामत्र सरस्वतीमनुभजे शुम्भादि-दैत्यार्दिनीम् ।।१।।[1]

शाक्तप्रमोदे देवीरहस्ये तन्त्रागमादिषु दशमहाविद्याः प्रोक्ताः तासांस्वरूपाणि पृथक्-पृथक् । तत्र काली चतुर्भुजाशवारूढा तथा च कालीतन्त्रे—

शवारूढां महाभीमां घोरदंष्टां हसन्मुखीम् ।
चतुर्भुजां खड्गमुण्डवराभयकरां शिवाम् ।
मुण्डमालाधरां देवीं लसज्जिह्वांदिगम्बराम् ।
एवं संचिन्तयेत्कालीं श्मशानानलवासिनीम् ।।१।।[2]

एवमेव तारा-षोडशीभुवनेश्वरी -छिन्न-मस्ता दक्षिणामूर्ति-धूमावती-मातंगी-वगलादिदेवीनां ध्यानादिकम् देवी रहस्यशाक्त-प्रमोदतन्त्रागमादिषु प्रसिद्धम् । तासु प्रायः सर्वाः रुद्रस्य विभिन्न-रूपाणां शक्तयः । धूमावती-विधवा कथिता । तस्याः स्वरूपम् च विवर्णा मलिनवस्त्रा च सा तथा धूमावती-तन्त्रे ।

विवर्णा चंचला दुष्टा दीर्घा च मलिनाम्बरा ।
विमुक्तकुन्तला वै साविधवा विरलाद्विजा ।।१।।[3]

वाहनं चास्या, सिंहः । तथा च—

कालाभ्राभां कटाक्षैररिकुलभयदांमौलिबद्धेन्दुरेखाम्
शंखंचक्रंकृपाण त्रिशिखमपिकरैरुद्वहन्तींत्रिनेत्राम् ।
सिंहस्कन्धाधिधिरुढां त्रिभुवनमखिलंतेजसा पूरयन्तीम् ।
ध्यायेद्दुर्गाजंयाख्यां, त्रिदश-परिवृतां सेवितां सिद्धिकामैः ।।१।।[4]

ब्रह्मत्वे चास्याः त्रिनेत्राणि चन्द्रसूर्यवह्न्यः चतुर्भुजाः चतस्रो दिशः । सिंहश्च स्वयमेवविष्णुः । तथा च वैकृतिकरहस्ये ।

अधुनासम्प्रवक्ष्यामि सिंहस्य च यथोचितम् ।
सिंहस्त्वं हरिरूपोऽसि, स्वयं विष्णुर्नसंशयः ।।१।।
पार्वत्याः वाहनत्वे हि, अतस्त्वां पूजयाम्यहम् ।[5]

---

१. दुर्गासप्तशती, स्तोत्रे, ध्यानश्लोक ११७, पंचमाध्याये ।
२. शाक्तप्रमोदे बाम्बे २००८ श्रीराजदेवनन्दन सिंह कालीतन्त्रे, ध्यानश्लोके, पृ० ३
३. तत्रैव, धूमावती स्तोत्रे १. पृ० २८१
४. सप्तशती स्तोत्रे, गीता प्रेस गोरखपुर, पृ० १०७
५. प्रतीकविद्यायां धृतं, जनार्दन मिश्र पटना २०१५, पृ० १७४

महिषश्च शिवरूपो तथा च कालीतन्त्रे—

अधुनासम्प्रवक्ष्यामि महिषस्य च पूजनम् ।
महिषस्त्वं महावीर शिवरूपी सनातनः ॥[1]

एवं च श्रुति-स्मृतिपुराण-दर्शनादिषु सर्वत्र लब्धप्रसरेयं बौद्धोत्तर-युगीना-कथमिति विरम्यते ।

## ६. मन्त्र-गायत्र्यादीनि—

एकस्या एवदेव्याः विभिन्ननाम-रूपायाः गायत्र्यः विभिन्न-ग्रन्थेषु विभिन्न रूपेणोपलभ्यन्ते । तथा च—

१. "कात्यनायै विद्महे कन्या कुमारि धीमहि तन्नो दुर्गिः प्रचोदयादिति" महानारायणोपनिषदि ।[2]

२. -'महाशूलिन्यै विद्महे महा-दुर्गायै धीमहि तन्नो भगवती प्रचोदयादिति"[3] अपि तत्रैव ।

३. सुभगायै विद्महे काल-मालिन्यै धीमहि तन्नो गौरी प्रचोदयादित्यपि[4] तत्रैव ।

४. "महादेव्यै विद्महे विष्णु-पत्न्यै च धीमहि तन्नो लक्ष्मीः प्रचोदयादिति ।"[5]

५. "कालिकायै विद्महे श्मसान-वासिन्यै धीमहि तन्नो घोरा प्रचोदयादिति ।"[6] (कालिकायाः)

६. "महालक्ष्म्यै च विद्महे विष्णु-पत्न्यै च धीमहि, तन्नो लक्ष्मीः प्रचोदयात्"[7] (लक्ष्मीगायत्री)

७. "महालक्ष्म्यै च विद्महे सर्वशक्त्यै च धीमहि तन्नोदेवी प्रचोदयात् ।"[8] (महादेवी गायत्री) ।

८. "ओम् सर्व-सम्मोहिन्यै विद्महे विश्वजनन्यै धीमहि तन्नो शक्तिः प्रचोदयादिति"[9] (शक्तिगायत्री) ।

९. "ओम् त्वरितायैदेव्यै विद्महे महानित्यायै धीमहि तन्नो देवी प्रचोदयादिति[10] (त्वरितायाः) ।

---

१. काली विलासतन्त्रे, १९।७ १८।१९

२. महानारायणोपनिषदि विमलानन्द मैसूर, पृ० ५४

३. तत्रैव, पृ० ५५

४. तत्रैव, पृ० ५६

५. महानारायणोपनिषदि, विमलानन्द मैसूर, तन्त्रागमनाम्ना ।

६. तत्रैव

७. ऋक्षष्ठिशिष्टे २।११।२६

८-१०. तन्त्रसारे श्रीकृष्णानन्द वागीश, चौ० वाराणसी, १९३८, पृ० ४९

१०. "ओम् ऐंवागैश्वय्यैं विद्महे क्लीं कामेश्वर्यै धीमहि सोस्तन्नो शक्तिः प्रचोदयात्"[१] (वालागायत्री)।

११. ओं ऐत्रिपुरादेव्यै विद्महेक्लीं कामेश्वर्यै च धीमहि सौरस्तन्नः क्लिन्नो प्रचो दयात्"[२]

१२. "ओं त्रिपुरायै विद्महे भैरव्यै च धीमहि तन्नो देवी प्रचोदयात्।"[३]

१३. "ओं महादेव्यै विद्महे दुर्गायै च धीमहि तन्नो गौरी प्रचोदयादिति।"[४] (जय दुर्गा गायत्री)।

१४. "ओम् नारायरायै विद्महे महाश्रिये धीमहि तन्नः श्रीः प्रचोदयात्"[५] (श्री गायत्री)।

१५. "ओम् वाग्देव्यै विद्महे कामराजाय धीमहितन्नो देवी प्रचोदयात्"[६] (सरस्वत्याः)।

१६. "ओम् भगवत्यै विद्महे माहेश्वय्यैं धीमहि तन्नोऽन्न-पूर्णा प्रचोदयात्"[७]

१७. "ओम् महिषमर्दिन्यै विद्महे दुर्गायै धीमहितन्नो देवी प्रचोदयादिति"[८] (महिषमर्दिनीगायत्री)।

१८. "ओम् वैरोचन्यै विद्महे छिन्न-मस्तायै धीमहि तन्नो देवी प्रचोदयात्"[९] (छिन्नमस्तागायत्री)।

१९. "ओम् कालिकायै विद्महे महोग्रायै धीमहि तन्नो देवी प्रचोदयात्"[१०]।

२०. "ओम् तारायै विद्महे महोग्रायै धीमहि तन्नो देवी प्रचोदयात्"[११] बीजम् (ह्रीमिति) तथा व तन्त्र सारे।

अथ वक्ष्येजगद्धात्रीमधुना भुवनेश्वरीम्।
ब्रह्मादयोऽपि यांज्ञात्वा, लेभिरे परमांश्रियम्॥१॥
न कुलीशोऽग्निमारूढः वामनेत्रोर्ध्वचन्द्रकः
बीजंतस्याः समाख्यातं, सेवितांसिद्धि-कांक्षिभिः॥२॥

नकुलीशो हकारः, अग्निः रेफः वामनेत्रमूढिः अर्द्धचन्द्रोऽनुस्वारः।[१२] तथा च (ह्रीं)।

देव्युपनिषदि च स एवार्थः कथितस्तथा च—

---

१-६. तन्त्रसारे श्रीकृष्णानन्द बागीश, चौ० वाराणसी, १९३८, पृ० ४९
७. तन्त्रसारे, वाराणसी, १९३८।४९
२-११. तत्रैव, पृ० ६९-७०
१२. तत्रैव, पृ० ८४

वियदीकारसंयुक्तं वीतिहोत्रसमन्वितम् ।
अर्द्धेन्दु-लसितं देव्याः, बीजं-सर्वार्थ साधकम् ।।१।।
एवमेकाक्षरं ब्रह्म, यतयः शुद्ध-चेतसः ।
ध्यायन्ति परमानन्दमया, ज्ञानाम्बुराशयः ।।२।।[1]

वियदाकाशः (ह) वीतिहोत्रोऽग्निः (रः) अर्द्धचन्द्रः (ं) एवं च (ह्रीं) इदं देव्या बीजं सर्वार्थिदम् प्रणवसमम् इमंमन्त्रं शुद्धचेतसः यतयः ध्यायन्ति । अस्यार्थ इच्छा ज्ञानक्रियाधाराद्वैताखण्ड-सच्चिदानन्द भूतशिवस्य शक्तेर्विस्फुरण-मिति ।

मन्त्रश्च—"ओं ऐं ह्रीं क्लीं चामुण्डायै विच्चै" तथा च देव्युपनिषदि—

वाङ्मायाब्रह्मसूस्तस्मात् षष्ठे वक्त्र-समन्वितम् ।
सूर्यो वाम-श्रोत्रविन्दु संयुक्तष्टातृतीयकः ।।१।।
नारायणेन संमिश्रो वायुश्चाधारयुक्ततः ।
विच्चेनारायणकोडेवायुः, स्यान्महदानन्द दायकः ।।२।।[2]

वाग्वाणी 'ऐं' माया 'ह्रीं' ब्रह्मसूः कामः "क्लीं, ततः षष्ठः वर्णोऽकारयुक्तश्च सूर्ये मः अवामश्रोत्रं दक्षिणकर्णम् (उ) विन्दुयुक्तः (मुं) टात्तृतीयो 'डः' नारायणेनाकारेण युक्तः (डा) वायुः (यः) अधरः (ए) तेनयुक्तो विच्चे । अन्तेर्गामन्त्रश्च—"ओं ह्रीं दुं दुर्गायै" तथा तन्त्रसारे—

अथ दुर्गामनूम् वक्ष्ये दृष्टादृष्टफल-प्रदम् ।
मायारिः कर्णविन्द्वाढ्यो, भूयोऽसौ स्वर्गवान्भवेत् ।।१।।
पंचान्तकः प्रतिष्ठावान्, मारुतोभौतिकासनः ।
तकारादि-हृदयान्तोऽयं, मन्त्रोवस्वक्षरात्मकः ।।२।।
तारा माया स्ववीजं च दुर्गायैहृदयं ततः ।।[3]

"अर्द्धकारः कर्ण उकारः, पंचान्तकः गकारः प्रतिष्ठा आकारः मारुतो यकारः, भौतिक एकारः ।।"

## (ख) विशिष्ट स्तोत्राणि (३१)

**१. अन्न-पूर्णा-स्तोत्रम्—**

अन्नपूर्णाभगवती परत्वात्तदेव नाम उपक्रमोपसंहारयोश्चेदमेवनाम ।[4] "अन्नपूर्णा-स्तोत्रम् ।

---

१. देव्युपनिषदि १८-१९

२. देव्युपनिषदि, २०

३. तन्त्रसारे, पृ० ९७, वाराणसी, १९३८

४. बृहत्स्तोत्ररत्नाकरे खेमराज श्रीकृष्णदास, बम्बई, पृ० २३२ । सं० १९८२

"इतिश्रीमच्छंकराचार्य विरचितमन्नपूर्णाष्टकस्तोत्रम् । अत्राष्टकमित्यधिकं पदम् । शंकरग्रन्थावल्यांचेदमेव नाम् ।

शंकराचार्य-रचितम् । श्लोकसंख्या १२ । वृहत्स्तोत्र—रत्नाकरयोः शंकर-ग्रन्थावल्यांच ।

भगवतामाचार्याणाम् कृतौ कापि नैसर्गिकी प्रतिभाहृदयाह्लादकारिणी मनोमुग्धकारिणी शैली संगीतप्रवाहमयी जनयतिकामप्यभिनवामभिख्यामनिर्वचनीयाम् । रचयितुर्भावभंगिमाशब्दैः प्रवाहितोच्छलतीव । सानुप्रासा दीर्घ-समासाऽपि सरला "भिक्षां देहिनमोऽस्तुते" पदयुताऽर्थज्ञानम्विनापि श्रोतुर्हृदयानावर्जयति ।

नित्यानन्दकरी वराभयकरी सौन्दर्यरत्नाकरी,
निर्धूताखिलघीर-पावनकरी प्रत्यक्षमाहेश्वरी ।
प्रालेयाचलवंशपावनकरी काशीपुराधीश्वरी
भिक्षांदेहि कृपावलम्बनकरी, मातान्नपूर्णेश्वरी ।।१।।

अत्र भगवती अन्नपूर्णाऽभयकरी मोक्ष-करी विश्वेश्वरी च कथिता । तथा च—

क्षत्र-त्राणकरी महाभयकरी माता कृपा-सागरी,
साक्षान्मोक्षकरी सदा शिवकरी विश्वेश्वरी धीवरी ।
दक्षा-क्रन्द-करी निरामय-करी, काशी-पुराधीश्वरी,
भिक्षां देहि कृपावलम्बन-करी, मातान्नपूर्णेश्वरी ।।[3]

२. आर्या-स्तवः—

आर्यायाः भगवत्याः स्तोत्रत्त्वादेतदेवनाम । पुराणेचेदंनाम[4] "आर्यास्तवंप्रवक्ष्यामि यथोक्तमृषिभिः पुरा ।"[5]

हरिवंशे विष्णुपर्वणितृतीयेऽध्याये प्रथमश्लोकमारम्य ३५ तमं यावत् ३५ श्लोकाः वैशम्पायनोऽत्रप्रवक्ता ।

इमंस्तवं प्रातः य पठेत् । स कांक्षितं लभते । त्रिभिर्मासैः नृणाँ घोरबन्धनं पुत्रनाशं धनक्षयं व्याधिमृत्युमयं सर्वशाम्यति सर्वार्थ-सिद्धिं च नरो लभते । तथा च—

इमं यः सुस्तवं दिव्यमिति व्यासप्रकल्पितम् ।
यः पठेत्प्रातरुत्थाय, शुचिः प्रयतमानसः ।।१।।

---

१. शंकर ग्रन्थावल्यां २५ संस्करणे ११ सम्पुट

२. तत्रैव, १

३. तत्रैव, १०

४. हरिवंशपुराणे (पूना १९३६ ई०), नीलकंठीयुतम्, सं० १६१

५. हरिवंशपुराणे (पूना १९३६ ई०), २८, वि० पर्व ३।१

त्रिभिर्मासैः काँक्षितं च फलं वै संप्रयच्छति।
षड्भिर्मासैः वरिष्ठंतु वरमेकं प्रयच्छसि ॥२॥[१]

अत्रानुष्टुप् छन्दसा विविधनामपदैः सरलयाभाषया सानुप्रासया सप्रसादया-भगवत्याः कीर्तनम्। भगवतीसिद्धसेनस्य जननी सर्वत्र पर्वत-नदीगुहासु वसति। सर्वथा लोकान् सृजति विभिन्ननामानि भजते स्त्रीवाचकाः शब्दा अस्या एव नामान्तराणि अनया सर्वं जगत् स्थावरं व्याप्तम्। तथा च—

"त्वया व्याप्तमिदं सर्वं जगत्स्थावर-जंगमम्।
संग्रामेषु च सर्वेषु अग्नि-प्रज्वलितेषु च
नदीतीरेषु चौरेषु कान्तारेषु भयेषु च ॥[२]

**३. इन्द्रकृत-दुर्गा-स्तोत्रम्—**

यत इन्द्रेण भगवत्याः दुर्गायाः स्तोत्रं कृतमत स्तदेव नाम उपक्रमोपसंहार-योरपीदमेव नाम, तथा च "स्तोत्रेणानेन तुष्टाव शिवां शंकर-बल्लभामिति"[३] "पुनरावृत्ति रहितं स्तोत्रं जाप्यान्नसंशयः।"[४]

सौर-पुराणे ४९ तमेऽध्याये ४५ तमं श्लोकमारभ्य ६१ तमं यावत्। श्लोक-संख्या १७। स्तोत्रकर्ता इन्द्रः।

फलं चास्य त्रिविधदुःख-निवृत्तिः देवी-लोक-प्राप्तिश्च। तथा च—

"य इमाँ कीर्तयिष्यन्ति, जपमालाँ भवानि ते।
त्रिविधैरपि दुःखौघैं, मुच्यन्ते नात्र संशयः ॥१॥[५]

अनुष्टुव्छन्दोबद्धैः सम्बोधनान्तपदैर्युतम् संगीतमय्यासरण्या भगवत्याः स्तवनम्। तथा च—

जयदेवि महामाये, जयत्रिदश-बन्दिते।
जयभद्रे विदेहस्थे, जयाद्ये त्रिगुणात्मिके ॥१॥[६]

स्तोत्रस्यास्य सरला, सानुप्रासा पौराणिकी प्रवाहमयी भाषा। सर्वसाधारण-जनैरपि सुबोधमिदं स्तोत्रं स्वरसमय्या जनानामोदयति।

**४. उत्कण्ठा दशकम्—**

यतोऽत्रभगवत्याराधायावर्णनमुत्कण्ठायुतरूपेण। पुस्तकस्योपक्रमोप-संहारयोरिदमेवनाम। तथा च—"उत्कण्ठा-दशकम्[७] अन्ते च" इति श्री रघुनाथदासगोस्वामिविरचितस्तवावल्यां श्रीउत्कण्ठादशकम् सम्पूर्णम्।[८]

---

१. तत्रैव २।३।८-३२ तथा ३४
२. तत्रैव २।३।३५
३. सौर-पुराणे आनन्दाश्रम-पूना १८११ शा वा शकाब्दे, पृ० १९। अध्याये ४९।४५
४. तत्रैव ४९।६१
५. तत्रैव ४९।५९-६१
६. तत्रैव ४९।४६
७. श्रीस्तवकल्पद्रुमे वृन्दावन मथुरा २०१९, पृ० ६१३
८. तत्रैव, ६३४

रचयिता रघुनाथदासः गोस्वामी श्लोकाः ११ स्तोत्रस्यास्य पाठेनाभीष्ट-प्राप्तिः । तथा च तत्रैव—

उत्कण्ठादशकस्तवेन नितरां नव्येन दिव्यैः स्वरैः,
वृन्दारण्यमहेन्द्रपट्टमहिषीं यः स्तौतिसम्यक् सुधीः ।।१।।
तस्मैप्राणसमा, गुणानुरसनात्, संजातहर्षोत्सवैः ।
कृष्णोऽनर्घमभीष्टरत्नमचिरादेतत् स्फुटंयच्छति ।।२।।[1]

शार्दूल-विक्रीडित-छन्दोबद्धेदीर्घसमासमयेऽत्र स्तोत्रे भाषायाः सौन्दर्य-युतानुप्रासछटा दर्शनीया । उत्कण्ठितायाः देव्याः समादरे कृतोत्कण्ठः कविरपि, उत्कण्ठित इव लक्ष्यते । 'राधा कदाहं भजे' इति मुहुर्मुमुरुद्‌गिरन् कविस्ता-दात्म्यावस्थापन्न इव । पदशय्यावर्णमैत्री रचना-चातुरी गुम्फन-सौष्ठवादीनि मनोहरन्ति । तथा च—

छिन्नस्वर्णविनिन्दचिक्कण-रुचिस्मेराक्यः सन्धिते
रक्तारक्त सुचीनपट्टवसनावेशेन विभ्राजिताम् ।
उद्‌घूर्णोच्छ्रितिकण्ठपिच्छ विलसद्वेणीमुकुन्दं मनाक्
पश्यन्ती नयनांचलेन मुदितांराधां कदाहं भजे ।।१।।

अत्रोत्कण्ठितायाः मूर्तिः पुरःस्फुरन्ती दृश्यते । मनाक्शब्देनात्रोत्कण्ठितायाः सा शक्यं व्यज्यते ।[2]

**५. चण्डिका-स्तोत्रम्—**

यतोऽत्र चण्डिकायाः स्तवनम् । सूच्यामिदमेव नाम ।[3] "अथ चण्डिका-स्तोत्रम्" पुष्पिकायां च ।

"इति श्री ह०वृहद् धर्मोपासना-स्तबके श्री दुर्गोपासना-कल्पद्रुमे मार्कण्डेय-विरचिते चण्डिका-स्तोत्र-निरूपणं नाम प्रकरणम्"[4] श्लोकाः १२

स्तोत्रस्यास्य पाठेन सर्व-पाप-निवृत्ति-पूर्बकम् स्वेष्ट-प्राप्तिस्तथा च ।

इत्येवं बीजमन्त्रैः स्तवनमतिशिवं पातक-व्याधि-नाशं
प्रत्यक्षं दिव्य-रूपं ग्रहगणमथने, मर्दनं शाकिनीनाम्
इत्येवं वेगवेगं सकलभयहरं मन्त्र-शक्तिश्च नित्यम्
मन्त्राणां स्तोत्रकं यः पठति, स लभते प्रार्थितां मन्त्र-सिद्धिम् ।[5]

तान्त्रिकमेतदादावत्र ध्यान-रूपेण दुरित-नाशायाभ्यर्थना । तान्त्रिक-रीत्या "ओं ह्लीं ह्लीं कं कं कं पदैः स्तवनं विचित्रयौजःसम्बलितयाभाषया विघ्न-ध्वंस-प्रार्थना रौद्र-वीरमूर्ती समक्षमिवायाते । तथा च ।

---

१. तत्रैव, ११
२. श्रीस्तवकल्पद्रुमे वृन्दावन मथुरा २०१६, पृ० ११
३. वृहज्ज्योतिषार्णवेऽष्टमे धर्मस्कन्धे उपासना स्तबके १२८ अ० दुर्गोपासना, कल्पद्रुमे
४. तत्रैव, पृ० ४८, ४९
५. तत्रैव, श्लोकः १२

भ्रमसि जगदियं भक्षयन्ती, ग्रसन्ती हुंकारोच्चारयन्ती
प्रदहतुदुरितं चण्डमुण्डाप्रचण्डेति ।[1]

सानुप्रासाभाषा, काली, कपाली चामुण्डेति पद्यानिजनानाकर्ण-कुहरमभिव्याप्य प्रत्यक्षतोभय-निवारणं कुर्वन्तीव । सर्वासां देवीनां बीजं चण्डिकेति तथा च—

त्वं ब्राह्मीत्वं च रौद्री, त्वं च शिखिगमनात्वं देवी कुमारी ।
त्वं चक्री चक्रहस्ता, घुरघुरितरवा, त्वं वराह-स्वरूपा ।
रौद्रेत्वं चर्ममुण्डा, सकलभुवितले, संस्थिते स्वर्गमार्गे ।
पाताल-शैलश्रृंगे हरि-हरनमिते देवि चण्डि नमस्ते ।।१।।[2]

६. जाड्यापहास्तोत्रम्—

पुस्तके धृतं नाम । यतःस्तोत्रे जाड्यस्यबुद्धिमान्द्यस्य प्रमुखत्वेन चर्चाऽतस्तदेव नाम । नाम्नोऽस्य निर्देशःस्तोत्रेऽपि तथा च—

स्तोत्रं जाड्यापहं दिव्यं प्रातरुत्थाय यः पठेत ।[3]

गर्ग-संहितायाः पंचमेभागे (खण्डे) २२तमेऽध्याये ४१तम श्लोकतः ४५ तमं यावत् । श्लोकाश्च ५ । स्तोत्र-कर्ता नारदः ।[4]

यथा-नाम तथा-गुण इतिरीत्याऽस्य स्तोत्रस्य पाठस्य फलंतु निखिलाज्ञाननिवृत्तिर्बुद्धिमान्द्यादिविनाशश्च । तथा च तत्रैव—

स्तोत्रं जाड्यापहं दिव्यं प्रातरुत्थाय यः पठेत ।
नारदोक्तं सरस्वत्याः, स विद्यावान्भवेदिह ।।१।।[5]

यद्यप्यत्रस्तोत्रे श्लोकानां संख्या तु पंचैवपरमतीवप्रभावशालीदम् । भगवत्याः सरस्वत्या स्तोत्रमिदंभगवत्याः स्वरूप-वर्णनं तत्र च वर्णमैत्री, शब्द-योजनाः वर्णशब्दयोरनुप्रासता प्रसादगुणितादि-विषयाः सराहनीया इति । भगवती सरस्वती केयूर-किरीट-कंकणधारिण्युक्ता । नूपुर-राजिता वीणा-पुस्तक-धारिणी । तथा च—

वराभयपुस्तकवल्लकीयुतं
परं दधानां विमले करद्वये ।
नमाम्यहं त्वां शुभदां सरस्वतीम्,
जगन्मयीं ब्रह्म-मयीं मनोहराम् ।।५।।[6]

---

१. तत्रैव, श्लोकः १०
२. वृहज्ज्योतिषार्ण वेऽष्टमेधर्मस्कन्धे उपासना स्तवके, श्लोकः २
३. गर्गसंहितायाम् गंगाविष्णुदास, मुम्बई, पृ० ३५-४६
४. तत्रैव ५।२२।४५
५. तत्रैव
६. तत्रैव ५।२२।४३

७. दुर्गा-कवचम्—

सूच्यामिदमेव नाम[1] ब्रह्माण्ड-मोहनमस्यापरंनाम। तथा चान्ते—

इति श्री ब्रह्मवैवर्तेमहापुराणे प्रकृतिखण्डे नारदनारायण-सम्वादे ब्रह्माण्ड-मोहनं कवचं नाम सप्तषष्ठितमोऽध्यायः।[2]

ब्रह्मवैवर्ते २ये खण्डे ६७ तमेऽध्याये १मश्लोकमारभ्य २७ तमं श्लोकं यावत्। नारदं प्रतिनारायण आह।

कवचस्यास्य धारणेन सर्वतीर्थयात्रयापृथिव्याः भ्रमणेन च यत्फलं लभ्यते तत्फलं लभते। सिद्धे कवचे नरः पुत्रपौत्रादियुतो भवति। तद्गेहेलक्ष्मीः स्थिरा भवति। तथा च—

कवचं धारयेद्यस्तु सोऽपि विष्णुर्नसंशयः।
स्थाने च सर्वतीर्थानां, पृथिव्याश्च प्रदक्षिणे ॥१॥
यत्फलं लभते लोकस्तदेव धारणान्मुने।
पंचलक्ष-जपेनैव सिद्धमेतद् भवेन्मुने ॥२॥[3]

स्तोत्रस्य भाषा सरला, पौराणिकी। प्रवाहमयी अत्रादौ परम्परा-कथनं ततोंगन्यासकरन्यासादिकम्। ततोदिग्रक्षणम्। फलं चान्ते।

८. दुर्गा-कवचम्—

यतोऽत्रदुर्गायाः वर्णनम्। सूच्यामुपक्रमेऽध्यायान्ते चेदमेव नाम।[4] तथा च—

शृणु नारद वक्ष्यामि दुर्गायाः कवचं शुभम्।[5]

अध्यायान्तेचास्य नाम दुर्गतिनाशिनीकवचम्।[6] तथा च—

इतिश्री ब्रह्मवैवर्ते महागणपति-खण्डे नारद-नारायण-सम्वादे दुर्गति-नाशिनी कवचं-नामैकोन चत्वारिंशोऽध्यायः ॥[7]

ब्रह्मवैवर्ते तृतीये खण्डे ३९ तमेऽध्याये ३५ श्लोकमारभ्य २३ तमं यावत्। श्लोकाः २०। नारायणो वक्ता-नारदः श्रोता।

सर्वतीर्थयव्रतादिभिर्यत्फलं प्राप्यते तत्फलं लभतेऽस्य धारणात् अज्ञात्वा शतलक्षं प्रजप्तोऽपि न सिद्धि-दायकम्। तथा च—

सुस्नातः सर्वतीर्थेषु, सर्वयज्ञेषु यत्फलम्।
सर्वव्रतोपवासे च तत्फलं लभते नरः ॥१॥

---

१. ब्रह्मवैवर्ते, दिल्ली विश्वविद्यालयीय पुस्तकालये (बाम्बे), पृ० ७
२. तत्रैव, पृ० ३१२
३. तत्रैव २।६७।१६-१९
४. तत्रैव, पृ० ९
५. ब्रह्मवैवर्तेपुराणे ३।३९।१३
६. तत्रैव, पृ० ४११
७. तत्रैव, ४१२

इदं कवचमज्ञात्वा, भजेद् दुर्गतिनाशिनीम्।
शतलक्षं प्रजप्तोऽपि, न मन्त्रः सिद्धिदायकः ।।२।।[१]

स्तोत्रमिदं पुराब्रह्माशंकराय ददौ त्रिपुर-संग्रामे हरश्च गौतमाय सच पद्मनाभाय। गायत्र्यं छन्दः ब्रह्माण्ड-विजयमस्यापरं नाम। विनियोगस्ततोऽगं न्यास-करन्यासादिकम्। दिग्रक्षणं च। सरला सुबोधा चात्रभाषा प्रवाहमयी पौराणिकी शैली।

## ९. दुर्गाब्रह्म कवचम्—

यतोब्र ह्मप्रोक्तं दुर्गा-कवचंमितितदेवनाम। सूच्यां[२] स्तोत्रादौ पुस्तके धृतमिदं नाम। "तत्रादौ दुर्गा ब्रह्मकवचम्"[३] पुष्पिकायां च हरिहर-ब्रह्मविरचितं देव्याः कवचम्।[४]

वाराहपुराणतः दुर्गोपासना-कल्पद्रुमे उद्धृतम्। श्लोक-संख्या ५६।

फलं चास्य स्तोत्रस्य नित्यं पाठेन प्रेतादि-बाधा-शान्तिः। तथा च तत्रैव—

ब्रह्मराक्षस - वेतालाः, कुष्माण्डाभैरवादयः
नश्यन्ति दर्शनादस्य, कवचे हृदि संस्थिते ।।१।।
मानोन्नतिर्भवेद्राज्ञस्तेजोवृद्धिकरंपरम्।
यशसा वर्द्धते सोऽपि, कीर्तिमण्डित-भूतले ।।२।।
देहान्ते परमं स्थानं, यत्सुरैरपि दुर्लभम्।
प्राप्नोति पुरुषो नित्यं, महामाया-प्रसादतः ।।३।।[५]

परमं प्रसिद्धमिदमास्तिक-जगति देवी भागवते। च पठितं दुर्गा सप्तशत्या आदौ विधीयते। तत्रादौ नव-दुर्गा-नाम-कथनं ततोदिग्रक्षणं। करांगरक्षापरम्। अन्ते च फल-कथनम्। अनुष्टुप्छन्दः सरलाभाषा सप्रसादा सानु-प्रासा। प्रवाहमयी शैली। देव्याः प्रभाववर्णनात्मिका। तत्तन्नामप्रसंगेऽस्याः रूपं शक्तिश्च प्रदर्शिता। यस्या दिशः योऽधिदेवीसैव तस्या रक्षिका प्राच्यां रक्षुतुमामैन्द्री, इन्द्रः प्राच्या अधिपतिः। ऐन्द्रीचाधीश्वरी।

## १०. दुर्गाष्टोत्तरशतनामस्तोत्रम्—

भगवत्या दुर्गायाः अष्टोत्तर-शतनामानीतितदेवनाम। सूच्याम्[६] उपक्रमे "अथ दुर्गाष्टोत्तर-शत-नामस्तोत्रं।[७] अन्ते च" श्री दुर्गाष्टोत्तरशतनामात्मक

१. तत्रैव ३।३९।१९, २२
२. दुर्गोपासना कल्पद्रुमे, पृ० ५
३. तत्रैव, १६२
४. तत्रैव, १६४
५. दुर्गापासना कल्पद्रुमे, ५२, ५३, ५४, श्लोकाः
६. तत्रैव, पृ० १—शाक्तप्रमोदे (देवनन्दन सिह) २००८, मुम्बई, ४२६ पृष्टे
७. तत्रैव, पृ० १८

स्तोत्र-निरूपणं नाम प्रकरणमिति ।[1]

विश्व सारतन्त्रतोऽत्रोद्धृतम् । ईश्वरः शतानीकं प्रोवाचं श्लोकाश्च १९ शाक्तप्रमोदेऽपीदम ।[2]

फलंचास्याष्टोत्तरशतनामस्तोत्रस्य पाठेन चतुर्वर्गप्राप्तिरसाध्यं तस्य किमपिनास्ति तथा च तत्रैव—

नासाध्यं विद्यते देवि, त्रिपुलोकेषु पार्वति ।
धनं धान्यं सुतान् जायां, हस्तिनमेव च ॥१॥
चतुर्वर्गतंथा चान्ते, लभेन्मुक्तिं च शाश्वतीम् ।
राजानो दासतां यान्ति, राज्यश्रियमवाप्नुयात् ॥२॥
भौमावस्यांनिशाभागे चन्द्रेशतभिषागते ।
विलिख्यप्रपठन् स्तोत्रं, स भवेत्सम्पदां पदम् ॥३॥[3]

अनुष्टुप्वद्धेऽत्र भगवत्याः दुर्गायाः अष्टोत्तरशतनाम्नां कथनम् । बहूनिनामानि प्रसिद्धान्येव । अल्पसमासानि । गणनापराणि । तैः शक्त्या शक्तिमत्वं च द्योत्यते । सरला सानुप्रासा प्रवाहमयी भाषा । गुणात्मिकान्यपिकानिचित् नामानि यथा पटला, एकपर्णा, सर्वा अष्टदेव्य एकैव

ब्राह्मी माहेश्वरी चैन्द्री, कौमारी वैष्णवी तथा ।
चामुण्डा चैववाराही, लक्ष्मीश्च पुरुषाकृतिः ॥[4]

## ११. दुर्गा-स्तवराजः—

सूच्यामिदमेवनाम । पुराणे स्वयंश्रीकृष्णो नामेदंप्राह ।[5] "स्तोत्रराजंप्रदास्यामीति ।"[6]

ब्रह्मवैवर्ते ४थे खण्डे ८८ तमेऽध्यायेप्रथमं श्लोकमारम्य ७१तमं यावत् । श्लोक-संख्या ७१ ।[7]

योनित्यमिदं स्तोत्रं पठति स इहैव पार्वतीं द्रष्टुं समर्थो भवति । अग्निजलवायु-स्तम्भं कर्तुंप्रभुर्भवति । तथा च

सर्वसिद्धिं च लभते सिद्धस्तोत्रोभवेद्यदि ।
दशायुत-जपनैव, सिद्धस्तोत्रोभवेन्नरः ॥१॥
अग्निस्तम्भं जलस्तम्भं मृत्युस्तम्भंमनसस्तथा
अश्वमेध-सहस्राच्च, पृथिव्याश्च प्रदक्षिणता ॥२॥[8]

---

१. शाक्तप्रमोदे २००८, बाम्बे (राजदेवन्दन्दन सिंह), पृ० १९
२. तत्रैव, पृ० ४२९
३. शाक्तप्रमोदे २००८ बाम्बे (राजदेव नन्दन सिंह), १४, १५, १७
४. तत्रैव, ८
५. ब्रह्मवैवर्ते कृष्णखण्डे (वेंकटेश्वर प्रेस, मुम्बई) शं० १९६६, पृ० ४
६. तत्रैव, पृ० २०६, ४।८८।३
७. तत्रैव, पृ० २०६, ४।८८।३
८. ब्रह्मवैवर्ते कृष्णखण्डे (वेंकटेश्वर प्रेस, मुम्बई) सं० १९६६—४।८८।६८-६९

नन्दः सर्वं श्री-कृष्णमहिमानमवलोक्यैतावत्काल-पर्यन्तमिमं स बाल-बुद्ध्याऽमन्यदितिमोहमुपगतः । श्रीकृष्णस्तस्मै इदं स्तोत्रं प्राह अस्यैवप्रभावेण भगवान्महादेवः त्रिपुरं हन्तुं समर्थोविभूव । ब्रह्मा शंकराय ददौ[1] स च सनकादिभ्य आह । अतः प्रासरदिदं स्तोत्रम् ।

अत्रादौ स्तोत्रस्य महत्त्वं प्रतिपादितम् । ततः स्तवनविधिरुक्तः । "स्नातः पादौ च प्रक्षाल्य धृत्वा धौते च वाससीआचान्तः कुशहस्तश्च शुचिर्विष्णुं च संस्मरन्निति"[2] अत्र भगवती दुर्गादुर्गतिनाशिन्युक्ता । विष्णुमाया नारायणी सनातनी नारायणी, नित्यानन्दरूपा निर्गुणा सगुणा प्रकृति पुरुषरूपा परात्परा सावित्री कथितेति ।[3] एकैवभगवती दुर्गा स्थानाद्याधारभेदेनविभिन्ननाम्ना कथ्यते। सर्वा शक्तयोऽस्या एव जायन्ते ।

## १२. दुर्गा-स्तोत्रम्—

दुर्गायाः भगवत्याः वर्णनात्तदेवनाम। सूच्यामिदमेव नाम ।[4] अध्यायान्ते पुष्पिकायां चेदं नाम । तथा च—

इति श्री ब्रह्मवैवर्ते महापुराणे प्रकृति-खण्डे नारदनारायणसम्वादे दुर्गा-स्तोत्रं नाम षट्-षष्ठितमोऽध्यायः ।[5]

ब्रह्म वैवर्ते २ये खण्डे ६६ तमेऽध्याये १ श्लोकमारभ्य ३३ श्लोकंयावत् । श्लोकसंख्या ३३ ।

पूजा-काले स्तोत्रस्यास्य पाठेन सिद्धिर्जायते बन्ध्या काकबन्ध्या मृत-वत्सा वा वर्षमेकंश्रुत्वा सुपुत्रं लभते । कारागारात्प्रमुच्यते । यक्ष्मापीडितः गलत्कुष्ठी महाशूली रुजार्तःरोगाद् विमुच्यते । तथा च—

इत्यात्मना कृतं स्तोत्रं दुर्गायाः दुर्गनाशनम् ।
पूजा-कालेपठेद्योहि सिद्धिर्भवति वांछितम् ।।१।।
बन्ध्या च काक-बन्ध्या च मृतवत्सा च दुर्भगो ।
श्रुत्वा स्तोत्रं वर्षमेकं सुपुत्रं लभते ध्रुवम् ।।२।।
कारागारे महाघोरे यो बद्धो दृढबन्धने ।
श्रुत्वा स्तोत्रं मासमेकं बन्धनान्मुच्यतेध्रुवम् ।।३।।
राजद्वारेश्मसाने च महारण्ये रणस्थले ।
हिंस्रजन्तु-समीपे च, श्रुत्वा स्तोत्रं प्रमुच्यते ।।४।।[6]

---

१. तत्रैव, ४।७७।६०-६३
२. तत्रैव, ४।८८।१४
३. तत्रैव, ४।८८।१५;१६
४. तत्रैव, पृ० ७
५. ब्रह्मवैवर्त पृ० ३११
६. तत्रैव, २।६६।२६, २७, २८, ३१

दुर्गैवमूल-प्रकृतिः। त्रिगुणात्मिका सगुणा निर्गुणा च सनातनी सर्वाधारा सर्वेशा सर्वज्ञा सर्व-ज्ञान-प्रदा सर्वबुद्धि-स्वरूपा, श्रद्धा-पुष्टि-मेधा-क्षमादीनि तस्या एव नामान्तराणि ।[१] सैवमाहेश्वरी वैष्णवी ब्रह्माणी भद्रदा, भद्रकाली सनातनी।

**१३. दुर्गास्तोत्रम्—**

यतोऽत्रदुर्गास्तूयते स्तोत्रेणानेन। फलकथनेचात्र नामेदमेवधृतम् ।[२] 'देवि स्तोत्रमिदं ये-हिपठिष्यन्तितवानघे।'[३]

वाराहपुराणे ६५ तमेऽध्याये ५८ तमं श्लोकमारभ्य ७१ तमं यावत्। श्लोक-संख्या १४। स्तोत्रकर्तारोत्रदेवाः।

स्तोत्रस्यास्यप्रपठनात् सर्वसिद्धिर्जायते। तथा—च तत्रैव—

देविस्तोत्रमिदं ये हि पठिष्यन्तितवानघे।
सर्व-कामसमापन्नान् कुरु देवि स नोवरः॥१॥
एवमस्त्विति तान्देवानुत्त्वा देवी परापरा।
विससर्ज ततो देवान्, स्वयंतत्रैव संस्थिता॥२॥[४]

अतीवसरलमिदं स्तोत्रम्। सरलया सानुप्रसया प्रसाद-वलितयागिरा भगवत्याः देव्याः पुराणेषु या चरित्र-चर्चा तस्याः वर्णनम्। सप्तशत्याः कथा--- अत्रापि तिष्ठति। वैष्णवी महिषासुरनिहन्त्रीहस्तेषु च घण्टात्रिशूल-धारिणी विरुपाक्षी। अस्या एव भगवत्या रूपंद्वयम्। विद्या अविद्या चेति। येऽस्या शरणं गच्छन्ति तेषां भयं न विद्यते। भगवत्या एव प्रभावात् भूतं भव्यं भवं चावतिष्ठते। पौराणिक-रीत्या प्रभावकरमिदं स्तोत्रम्। एकैव दुर्गा-भगवती त्रिगुणात्मिका जगताम् सृष्टि-स्थितिलयादीनि विधत्ते। ब्रह्मेन्द्रविष्णु-शिवादिषु विभिन्ननामभिः निवसति। महाकाली महालक्ष्मी महासरस्वत्यादिरूपेणेति।[५]

**१४. देव-कृतं-देवी स्तोत्रम्—**

यतः देवैः कृतमिदमिति तदेव नाम शुम्भ-निशुम्भ-पराजिताः देवाः देवीं तुष्टुवुः। पुराणे धृतं नाम।[६] तथा च—

स्तोत्रं मे क्रियते मातुः समस्तैः स्वर्ग—वासिभिः।
निशुम्भ-शुम्भ-दैत्याभ्यां, प्रवलाभ्यां प्रपीडितैः॥१॥[७]

---

१. तत्रैव २।६६।८, १७
२. वाराहपुराणे (खेमराज मुम्बई), १९५९, पृ० ६०
३. वाराहपुराणे (खेमराज मुम्बई), ६१।७०
४. तत्रैव ६६।७०-७१
५. तत्रैव ६५।५८-६६
६. शिवमहापुराणे, पं० रामतेज पाण्डेय, पं० पुस्तकालय काशी, प्र० स० (२०२०), पृ० ८७४
७. तत्रैव ४७।१३

स्तोत्रस्यास्य पाठेनशत्रु-विनाश-पूर्वकं सकलकार्य-सिद्धि स्तथा च स्तोत्रान्ते स्वयमाहदेवी—

बभाषे निखिलान्देवान् यूयं तिष्ठत निर्भयाः ।
कार्यं वः साधयिष्यामि, स्वतन्त्राहंविनाश्रयम् ॥१॥[1]

शिवपुराण उमासंहितायां ४७ तमेऽध्याये ३यश्लोकमारभ्य १६शंयावत् । श्लोकाः १४ ।

भगवती जगदम्बिका त्रैलोक्यत्राणकारिणी समस्त-संसारोत्पत्ति-स्थिति-लयकारिणी । जनानां मुक्तिदायिनी । परम्बास्वरूपा कथिता । तथा च तत्रैव —

नमो मुक्ति-प्रदायिन्यै, पराम्बायै नमो नमः ।
नमः समस्त—संसारोत्पत्ति-स्थित्यन्तकारिणि ॥१॥[2]

सरले सानुप्रासे प्रबाहमये पौराणिकभावना-भरितेऽत्र स्तोत्रे किमपि विचित्रमानन्दमनुभवति हृदयम् सचेतसाम् । नमः शब्द युतैर्पदैरनुष्टुब्छन्दो-बद्धैर्भगवत्या वर्णनमतीव रोचकम् । कानिचित् तान्त्रिकान्यपि नामान्यत्र यथा तारा, छिन्नमस्ता, श्री विद्या, भैरवी, अजिता बगला धूमावती विलासिन्यादीनि ।[3]

**१५. देवीस्तोत्रम्—**

दुर्गासप्तशत्यां-धृतांमार्कण्डेये पुराणे च धृतमिदं नाम । देवैः कृतत्वाच्चतदेव नाम । आदावेव देवा उचुरिति श्लोकः ।[4]

मार्कण्डेय-पुराणे देवी माहात्म्ये ८४ तमेऽध्याये महिषासुर-बधानन्तरं १ मं श्लोकमारभ्य २७ श्लोकं यावत् देवाः चक्रुः । स्तोत्र-कर्तारो देवाः । श्लो० २७ फलं चास्य स्तोत्रस्य पाठात् सकल मनोरथसिद्धिः शत्रु-पराभवश्च । शाक्तेः परमप्रेम्णास्तोत्रमिदमाचरन्ति । तथा च ।

यदि-वापि वरो देयस्त्वयास्माकं महेश्वरि ।
संस्मृता संस्मृतात्वन्नो हिंसेथा.परमापदः ॥१॥
यश्चमर्त्यः स्तवैरेभिस्त्वां स्तोष्यत्यमलानने ।
तस्यवित्तर्द्धिविभवैः धनदारादि-सम्पदाम् ॥२॥
वृद्धयेऽस्मत्प्रसन्ना त्वं भवेथाः सर्वदाम्बिके ॥३॥[5]

स्तोत्रमिदं सरलता संगीतमय्या शैल्या विनिर्मितमत्र भावरसयोरनुभूति-प्रत्यक्षसिद्धेइव । वसन्ततिलका-तिलकीकृतमिदमत्र देव्याः प्रभावो ब्रह्म-विष्णु-

---

१. शिवमहापुराणे, प० राम तेजपाण्डेय, पं० पुस्तकालय काशी (२०२०), प्र० स०. पृ० ४७।१६

२. तत्रैव ४७।४१

३. तत्रैव, १५-१५ यावत्

४. मार्कण्डेयपुराणे (मनसुखराय मोर क्लाइवरोड कलकत्ता), १९६२

५. मार्कण्डेयपुराणे (मनसुखराय मोर, क्लाइव रोड, कलकत्ता) १९६२, ८४।३२-३३

शिवादिभिरप्यज्ञेय—इति कथितम् । तस्याः भृकुटी-कराल-रूपमेवदृष्ट्वा दैत्याः प्राणान् तत्यजुः । स्तोत्रे च शूलेनपाहिनोदेवीत्यादि चतुर्भिः श्लोकैः स्वात्मरक्षापि प्रकटी कृता । स्वाहा स्वधा रूपेण देवी सर्वत्रस्थितेति । तथा च—

यस्याः प्रभावमतुलंभगवाननन्तो ब्रह्मा हरश्चनहिवक्तुमलं बलं च ।
सा चण्डिकाखिलजगत्परिपालनाय, नाशाय चाशुभभयस्यमतिं करोतु ।।१।।
स्वाहासि वैपितृगणस्य चतृप्तिहेतुरुच्चार्यसेत्वमत एव जनैः स्वधा च ।।२।।[1]

**१६. देवकृतं लक्ष्मी-स्तोत्रम्—**

देवैः कृतंलक्ष्म्याः स्तोत्रमतस्तदेवनाम । सूच्यामपीदं तथैव ।[2] अध्यायान्ते पुष्पिकायां च । तथा च —

इतिश्री ब्रह्मवैवर्तेमहापुराणे श्रीकृष्णजन्मखण्डे नारायणनारद-सम्वादे भगवद् गुणवर्णनेलक्ष्मी-स्तोत्रकथनं नाम षट्पंचाशत्तमोऽध्यायः ।[3]

ब्रह्मवैवर्ते ४ खण्डे ४६ तमेऽध्याये ७५ तमं श्लोकमारम्य ९१ तमं यावत् । श्लोकाः १६ । गृहं प्रविशन्ती जयविजयाभ्यां निवारिता सती क्रुद्धा प्राणान्त्यक्तुमुद्यताऽभवत् तदा सर्वेदेवास्तांतुष्टुवुः ।

प्रातरुत्थायास्य पाठेन सर्वान्कामानवाप्नोति । स्वेष्टकामानवाप्नोति । शोकसन्तापनाशनं हर्षानन्द-करं तथा च—

इति लक्ष्मी-स्तवं पुण्यं सर्वदेवैः कृतं शुभम् ।
यः पठेत्प्रातरुत्थाय स वै सर्वंलभेत् ध्रुवम् ।।१।।
अभार्यो लभते भार्यां विनीतां च सुतां सतीम् ।
सुशीलां सुन्दरींरम्यां, अतिसुप्रियवादिनीम् ।।२।।[4]

**१७. देवी-स्तोत्रम्—**

स्तोत्रेऽस्मिन् देव्याः वर्णनत्वात्तद्देवनाम । पुराणेधृतं चेदम् नाम ।[5]

देवी-भागवते तृतीय स्कन्धे ५माध्याये २य श्लोक मारभ्य २१तिंयावत् । श्लोक-संख्या २० । स्तोत्रकर्ता शिवः ।

स्तोत्रस्यास्यपाठेन नरः सर्वेप्सितं च लभते मुक्तिं प्राप्नोति तथा च—
तपोयज्ञादयोऽनेन समं न विद्यन्ते ।

नतपसा न दमेन न समाधिना,
न च तथा विहितैः क्रतुभिर्यथा ।

---

१. तत्रैव ८४।५,१३ ।
२. ब्रह्मवैवर्तमहापुराणे (बम्बे), पृ० १
३. तत्रैव, पृ० १४७
४. ब्रह्मवैवर्तमहापुराणे (वाम्बे) ४।५६।८५, ८६, ८९, ९०
५. देवी भागवते (मनसुखराय मोर क्लाइव रोड, कलकत्ता (१९६०), ३।५ अध्यायान्ते

स्तोत्रस्यास्य पाठेनशत्रु-विनाश-पूर्वकं सकलकार्य-सिद्धिस्तथा च स्तोत्रान्ते स्वयमाहदेवी—

बभाषे निखिलान्देवान् यूयं तिष्ठत निर्भयाः ।
कार्यं वः साधयिष्यामि, स्वतन्त्राहंविनाश्रयम् ।।१।।[१]

शिवपुराण उमासंहितायां ४७ तमेऽध्याये ३यश्लोकमारभ्य १६शंयावत् । श्लोकाः १४ ।

भगवती जगदम्बिका त्रैलोक्यत्राणकारिणी समस्त-संसारोत्पत्ति-स्थिति-लयकारिणी । जनानां मुक्तिदायिनी । पराम्बास्वरूपा कथिता । तथा च तत्रैव—

नमो मुक्ति-प्रदायिन्यै, पराम्बायै नमो नमः ।
नमः समस्त—संसारोत्पत्ति-स्थित्यन्तकारिणि ।।१।।[२]

सरले सानुप्रासे प्रवाहमये पौराणिकभावना-भरितेऽत्र स्तोत्रे किमपि विचित्रमानन्दमनुभवति हृदयम् सचेतसाम् । नमः शब्द युतैर्पदरैनुष्टुव्छन्दो-बद्धैर्भगवत्या वर्णनमतीव रोचकम् । कानिचित् तान्त्रिकान्यपि नामान्यत्र यथा तारा, छिन्नमस्ता, श्री विद्या, भैरवी, अजिता बगला धूमावती विलासिन्यादीनि ।[३]

**१५. देवीस्तोत्रम्—**

दुर्गासप्तशत्यां-धृतंमार्कण्डेये पुराणे च धृतमिदं नाम । देवैः कृतत्वाच्चत-देव नाम । आदावेव देवा उचुरिति श्लोकः ।[४]

मार्कण्डेय-पुराणे देवी माहात्म्ये ८४ तमेऽध्याये महिषासुर-वधानन्तरं १ मं श्लोकमारभ्य २७ श्लोकं यावत् देवाः चक्रुः । स्तोत्र-कर्तारो देवाः । श्लो० २७ फलं चास्य स्तोत्रस्य पाठात् सकल मनोरथसिद्धिः शत्रु-पराभवश्च । शाक्तैः परमप्रेम्णास्तोत्रमिदमाचरन्ति । तथा च ।

यदि-वापि वरो देयस्त्वयास्माकं महेश्वरि ।
संस्मृता संस्मृतात्वन्नो हिंसेथा.परमापदः ।।१।।
यश्चमर्त्यः स्तवैरेभिस्त्वां स्तोष्यत्यमलानने ।
तस्यवित्तर्द्धिविभवैः धनदारादि-सम्पदाम् ।।२।।
वृद्धयेऽस्मत्प्रसन्ना त्वं भवेथाः सर्वदाम्बिके ।।३।।[५]

स्तोत्रमिदं सरलता संगीतमय्या शैल्या विनिर्मितमत्र भावरसयोरनुभूति-प्रत्यक्षसिद्धेइव । वसन्ततिलका-तिलकीकृतमिदमत्र देव्याः प्रभावो ब्रह्म-विष्णु-

---

१. शिवमहापुराणे, पं० राम तेजपाण्डेय, पं० पुस्तकालय काशी (२०२०), प्र० स०. पृ० ४७।१६

२. तत्रैव ४७।४१

३. तत्रैव, १५-१५ यावत्

४. मार्कण्डेयपुराणे (मनसुखराय मोर क्लाइवरोड कलकत्ता), १९६२

५. मार्कण्डेयपुराणे (मनसुखराय मोर, क्लाइव रोड, कलकत्ता) १९६२, ८४।३२-३३

शिवादिभिरप्यज्ञेय—इति कथितम् । तस्याः भृकुटी-कराल-रूपमेवदृष्ट्वा दैत्याः प्राणान् तत्यजुः । स्तोत्रे च शूलेनपाहिनोदेवीत्यादि चतुर्भिः श्लोकैः स्वात्मरक्षापि प्रकटी कृता । स्वाहा स्वधा रूपेण देवी सर्वत्रस्थितेति । तथा च—

यस्याः प्रभावमतुलंभगवाननन्तो ब्रह्मा हरश्चनहिवक्तुमलं बलं च ।
सा चण्डिकाखिलजगत्परिपालनाय, नाशाय चाशुभभयस्यमतिं करोतु ॥१॥
स्वाहासि वैपितृगणस्य चतृप्तिहेतुरुच्चार्यसेत्वमत एव जनैः स्वधा च ॥२॥[1]

**१६. देवकृतं लक्ष्मी-स्तोत्रम्—**

देवैः कृतंलक्ष्म्याः स्तोत्रमतस्तदेवनाम । सूच्यामपीदं तथैव ।[2] अध्यायान्ते पुष्पिकायां च । तथा च—

इतिश्री ब्रह्मवैवर्तमहापुराणे श्रीकृष्णजन्मखण्डे नारायणनारद-सम्वादे भगवद् गुणवर्णनेलक्ष्मी-स्तोत्रकथनं नाम षट्पंचाशत्तमोऽध्यायः ।[3]

ब्रह्मवैवर्ते ४ खण्डे ४६ तमेऽध्याये ७५ तमं श्लोकमारम्य ९१ तमं यावत् । श्लोकाः १६ । गृहं प्रविशन्ती जयविजयाभ्यां निवारिता सती क्रुद्धा प्राणान्त्यक्तुमुद्यताऽभवत् तदा सर्वेदेवास्तांतुष्टुवुः ।

प्रातरुत्थायास्य पाठेन सर्वान्कामानवाप्नोति । स्वेष्टकामानवाप्नोति । शोकसन्तापनाशनं हर्षानन्द-करं तथा च—

इति लक्ष्मी-स्तवं पुण्यं सर्वदेवैः कृतं शुभम् ।
यः पठेत्प्रातरुत्थाय स वै सर्वंलभेत् ध्रुवम् ॥१॥
अभार्यो लभते भार्यां विनीतां च सुतां सतीम् ।
सुशीलां सुन्दरींरम्यां, अतिसुप्रियवादिनीम् ॥२॥[4]

**१७. देवी-स्तोत्रम्—**

स्तोत्रेऽस्मिन् देव्याः वर्णनत्वात्तद्देवनाम । पुराणेधृतं चेदम् नाम ।[5]

देवी-भागवते तृतीय स्कन्धे ५माध्याये २य श्लोक मारभ्य २१तियावत् । श्लोक-संख्या २० । स्तोत्रकर्ता शिवः ।

स्तोत्रस्यास्यपाठेन नरः सर्वेप्सितं च लभते मुक्तिं प्राप्नोति तथा च—
तपोयज्ञादयोऽनेन समं न विद्यन्ते ।

नतपसा न दमेन न समाधिना,
न च तथा विहितैः क्रतुभिर्यथा ।

---

१. तत्रैव ८४।५,१३ ।
२. ब्रह्मवैवर्तमहापुराणे (बम्बे), पृ० १
३. तत्रैव, पृ० १४७
४. ब्रह्मवैवर्तमहापुराणे (बाम्बे) ४।५६।८५, ८६, ८९, ९०
५. देवी भागवते (मनसुखराय मोर क्लाइव रोड, कलकत्ता (१९६०), ३।५ अध्यायान्ते

तव पदाब्जपराग—निषेवणात्,
भवति मुक्तिरजे भवसागरात् ।।१।।[1]

द्रुतविलम्बित-छन्दोबद्धे सरले सप्रसादे सानुप्रासे संगीतमयेऽत्र सरसे देव्याः स्तोत्रंकृत्वा विष्णौ विरते भगवान्, शिवश्चकार । अत्र प्रतिपादितम् यत् ब्रह्म-विष्णु-शिवा-अस्याएवांश-भूताः । सर्वस्त्रीरूपत्वेन स्त्रीत्वमपि-स्वीकृतम् । पदाब्जसेवनेन समं यज्ञादयो न । अत्रशिवः प्रार्थनानन्तरं पदाब्जं प्रार्थयते तथा च—

यदिहरिस्तव देविविभावजः, तदनुपद्मजएवतवोद्भवः ।
किमहमत्रतवापि न सद्गुणः, सकललोकविधौ चतुरा शिवे ।।१।।
जननि देहि पदाम्बुज-सेवनं, युवतिभावगतानपि नः सदा ।
पुरुषतामधिगम्य पदाम्बुजात्, विरहिताखलभेत्सुखंस्फुटम् ।।२।।[2]

**१८. देवी-स्तोत्रम्—**

यतोऽत्रदेव्याः स्तवोऽतस्तदेवनाम । पौराणिकं नामापि ।[3]

देवीभागवते तृतीये स्कन्धेपंचमाध्याये २६तमं श्लोकमारभ्य ४६ तमं श्लोकं यावत् । श्लोकसंख्या २१ । स्तोत्र-कर्ता ब्रह्मा ।

फलं चास्य स्तोत्रस्य नित्यं पाठेन नरः सुखमेधते । तं कदाचित्कोपिसंशयो न भवति सर्वशान्तिं चाधिगच्छति च । तथा च—

स्वमुखेनापि सन्देहं छेत्तुमर्हसि मामकम् ।
पुरायभोगाच्च मे प्राप्ता संगतिस्तवपादयोः ।।१।।[4]

शिखरिणी-भुजंग-प्रयातानुष्टब्—छन्दोबद्धे सरले सानुप्रासे स्तोत्रे प्रसाद-सम्बलिते भगवत्या महिम—प्रतिपादनम् । देवीमिमां ज्ञातुं देवाः नापारयन् । तपो-योगज्ञानादिभिरपि अगम्या । ये भगवतीं जगदम्बिकांविहायेतस्ततः योगादिमार्गेषु व्रजन्ति तेऽज्ञानिनः । वस्तुतो देव्याःपरं नास्ति किंचित् । तथा च—

न वेदास्त्वामेवकलयितुमिहासन्नपटवः ।
यतस्तेनोचुस्त्वां सकलजनधात्रीमविकलाम् ।।१।।
स्वधाभूतादेवी सकलमखहोमेषुविहिता ।
तदात्वं सर्वज्ञा जननि खलु जाता त्रिभुवने ।।२।।
श्रमंयेष्टधायोगमार्गेप्रवृत्ता, प्रकुर्वन्तिमूढाःसमाधौस्थितावै ।
जानन्तिते नाम, मोक्ष-प्रदं वा, समुच्चारितं जातु मातर्मिषेण[5] ।।३।।

---

१. तत्रैव, ३।५।१९
२. देवीभागवते, मनसुखराय मोर, क्लाइव रोड, कलकत्ता (१९६०), ३।५।२, १३
३. तत्रैव, अध्यायान्ते
४. तत्रैव, ३।५।४५
५. देवीभागवते ३।५ २६, ३२, २७

**१९. देवी-स्तोत्रम्—**

यतोऽत्रदेव्याः स्तोत्रं । पुराणेधृतंनाम । पुष्पिकायां च तथा च—

इति श्री देवी—भागवते महापुराणेऽष्टादशसाहस्त्र्यां संहितायां तृतीय स्कन्धे विष्णुनाकृतं देवीस्तोत्रं चतुर्थोऽध्यायः ।[१]

देवी भागवते तृतीये स्कन्धे चतुर्थाध्याये २६ तमं श्लोकमारभ्य ४९ तमं यावत् । श्लोक-संख्या २४ । स्तोत्रकर्ता विष्णुः । ब्रह्माप्रवक्ता ।

स्तोत्रस्यास्य पाठेन नरो ज्ञानवान्भवति यतो विष्णुरिदमेव देवीमयाचत । तथा च—

नमो देवि महाविद्ये: नमामि चरणौ तव ।
सदा ज्ञानं प्रकाशंमे देहि सर्वार्थदे शिवे ॥१॥[२]

स्तोत्रेऽत्र रागप्रवाहिणी ललितललिता कोमल-कान्त पदावली भाषा । सरला अनुप्रासमयी । भगवत्याः महिमवर्णनपर्रामदम् । तत एवं सर्वमुत्पत्त्यादिकं भवति । जगतां रञ्जनाय सा मायां विस्तारयति । इयमेवगायत्री स्वाहा स्वधा सगुणा निर्गुणा च । तथा च—

ज्ञातं मयाखिलं त्वयिसन्निविष्टं, त्वत्तोऽस्यसम्भलयावपि मातरद्य ।
शक्तिश्चतस्य करणेवितत-प्रभावा, ज्ञाताधुनासकललोकमयीति नूनम ॥१॥
विस्तार्यसर्वमखिलं सदसद्विकारं, सन्दर्शयासिबिकलं पुरुषाय काले ।
तत्त्वैश्चषोडशभिरेव च सप्तभिश्च, भासीन्द्रजालमिव नः किल रंजनाय ॥२॥
याचेऽम्बतेऽध्रिकमलं प्रणिपत्य कामं, चित्तं सदा वसतु रूपमिदंतवैतत् ।
नामापि वक्त्र-कुहरे सततं तवैव, सन्दर्शनं तवपदाम्बुजयोः सदैव ॥३॥
गायत्र्यसिप्रथमं वेदकला, त्वमेव स्वाहा स्वधाभगवती सगुणार्धमात्रा ।
आम्नाय एव विहितो निगमो भवत्या, संजीवनाय सततं सुरपूर्वजानाम् ॥४॥[३]

**२०. देवी-स्तोत्रम्—**

देव्याः स्तोत्रत्वात्पुराणे तथैवोल्लेखात् पुष्पिकायां च तथा चाध्यायान्ते—

इतिश्री देवी भागवते महापुराणेऽष्टादशसाहस्त्र्याम्संहितायां तृतीय-स्कन्धेब्रह्मणा कृते देवी-स्तोत्रे सप्तमोध्यायः ।[४]

देवी भागवते ३ये स्कन्धे ७माध्याये २७ तमं श्लोकमारभ्य ४७ तमं यावत् । श्लोक-संख्या २१ । स्तोत्र कर्ता—ब्रह्मा ।

स्तोत्रस्यास्यपाठेन सकल-फलावाप्तिः । विशेषतः शत्रुनाशः—

---

१. तत्रैव, ३।४ अध्यायान्ते
२. तत्रैव, ३।४ ४९
३. देवीभागवते ३।४।३०, ३१, ३७, ४५
४. तत्रैव, ७ अध्याये

त्यत्त्वांगानि सर्वाणि, विष्णोरतुलजेसः।
निर्गता योग-निद्रा सा, नाशाय च तयोस्तदा ।।१।।[1]

बसन्ततिलकातिलकीकृते सरले संगीतमये ऽस्मिन्स्तोत्रे ललित-ललितया सरस-सरसया भाषया सानुप्रासया सप्रसादया देव्याः महिम-प्रतिपादनम्। यथा नरो नाट्यं तनोति तथैव भगवती जगज्जालं कलयति। बुद्धि—श्री धीह्री कीर्त्यादयोस्या एव रूपान्तराः। ब्रह्मादयोदेवा अपि महत्त्वमस्या ज्ञातुं न पारयन्ति। सन्त्यत्र कानिचिदपाणिनीया अपि प्रयोगाः। तथा च—

नाट्यं तनोषि सगुणा विविध-प्रकारं,
नोवेत्ति कोऽपितवकृत्य-विधानयोगं।
ध्यायन्ति यां मुनिगणाः नियतं त्रिकाले,
सन्ध्येति नामपरिकल्प्यगुणान्भवानि ।।१।।
बुद्धिर्हिबोधकरणा जगतां सदा त्वं,
श्रीश्चासिदेवि सततं सुखदा सुराणाम्।
कीर्तिस्तथा मतिधृतीकिलकान्तिरेव,
श्रद्धारतिश्च सकलेषु जनेषुमातः ।।२।।
कस्ते चरित्रमखिलं भुवि वेद धीमान्,
नाहं हरिर्न च भवोनसुरास्तथा न्ये।
ज्ञातुं क्षमाश्चमुनयो न ममात्मजाश्च,
दुर्वाच्यएवमहिमातवसर्वलोके ।।३।।[2]

## २१. देवी-सहस्रनामस्तोत्रम्—

यतोऽत्र देव्याः स्तवः सहस्रनामभिश्चात देवनाम। अध्यायान्ते पुष्पिकायां च। देवी सहस्रनामस्तोत्रवर्णनं।[3] कूर्मपुराणपूर्वार्द्धे १२शाध्याये ६२तमं श्लोकमारभ्य १९९ तमं यावत् १३८ श्लोकाः।

स्तोत्रस्यास्य पाठेन नराः सर्वानैहिकामुष्मिकान्कामानवाप्नुवन्ति। न तस्य कृते किंचिद् दुर्लभं शत्रवः भीताः पलायन्ते तथा च—

यश्चैतत्पठतिस्तोत्रं ब्राह्मणानां समीपतः
समाहित-मनाः सोऽपि सर्वपापैः प्रमुच्यते ।।१।।
अभ्यर्च्य गन्ध-पुष्पाद्यैः, भक्ति-योग-समन्वितः।
मंस्मरन्परमं भावं दिव्यं माहेश्वरं परम् ।।२।।
सोन्तकाले स्मृतिलब्ध्वापरं ब्रह्माधिगच्छति ।।[4]

---

१. तत्रैव, १।७।४६
२. देवीभागवते, १।७।३०, ३१, ३४
३. कूर्मपुराणे, (मनसुखराय मोर, क्लाइव रोड, कलकत्ता) १९६२,१।१२ अन्ते, पृ० ५८
४. कूर्मपुराणे, (मनसुखराय मोर, क्लाइ व रोड कलकत्ता), १९६२, ११२ ३१५।१६।१८

देव्या रूपं दिदृक्षुणा हिमवता प्रार्थिता भगवती स्वरूपं दर्शयामास तस्मै। स च सहस्रनामभिः स्तोत्रं चकार। सरले सानुप्रासे सप्रसादेऽत्र स्तोत्रे देव्याः नाम्नां सहस्रम्। अनुष्टुप् छन्दः। सन्त्यत्र-कानिचिन्नामानि यानि, अन्यत्र दुर्लभानि। स्तोत्रेऽस्मिन्स्त्रीवाचका सर्वेशब्दा देवी रूपा एवेति प्रतिपादितम् सन्त्यत्र बहूनिनामानि यौगिकानि समस्तानि च। इयमेकैव शर्वाणिरुद्राणीत्यादि नामभिः प्रोच्यते तथा च—

आत्मन्याधाय चात्मानमोंकारं समनुस्मरन्।
नाम्नामष्टसहस्रेण तुष्टाव परमेश्वरम् ॥१॥
ईश्वराणी च शर्वाणी शंकरार्द्ध-शरीरिणी।
भवानी चैव रुद्राणी, महालक्ष्मीरथाम्बिका ॥२॥[1]

## २२. देव्या अष्टोत्तर-शतनाम-स्तोत्रम्—

यतोह्यत्रदेव्या अष्टोत्तर-शत नाम्नां कथनमतस्तदेव नाम। अध्याया-दावन्ते च तदेव नाम कथनम्।[2]

फलं चास्यदेवी स्वयमाह, श्रवणेनास्य सर्वपाप-विमुक्तिः। अन्तेशिव-लोक-प्राप्तिश्च। तथा च—

एतदुद्देशतः प्रोक्तं नाम्नामष्टशतमुत्तमम्।
अष्टोत्तरं च तीर्थानां शतमेतद्व्युदाहृतम् ॥१॥
यः पठेच्छृणुयाद्वापि सर्व-पापैः प्रमुच्यते॥
सर्वपापविनिर्मुक्तः कल्पंवसति शिवपुरे ॥[3]

ऋषिभिः पृष्टादेवी स्वयमेवाह स्वनाम्नामष्टोत्तरं शतम्। अनुष्टुप्चात्र छन्दः प्रसादगुणयुतमिदम्। अत्र तत्र सर्वत्र वर्षेऽस्मिन् भगवत्याः विभिन्ननाम्ना रूपेण चायतनानि सर्वाः स्त्रियोऽस्या एवं रूपाणि। भगवत्याः नाम्ना परिगणना प्रसिद्धान्येव नामान्यत्रो-पात्तानि कानिचित्तु अप्रसिद्धान्यपि। यत्र स्थाने यादेवी प्रसिद्धा सात्वस्या रूपमेव। बह्वीनाम् नदीनाम् नामान्यपिदेव्याः नामानि। यथा सुनन्दा नन्दिनी तथा च—

शिवकुण्डे सुनन्दात्वं नन्दिनी देविका-तटे।
रुक्मिणी द्वारवत्यां, तु राधा वृन्दावने वने ॥१॥
देवकी मथुरायान्तु, पाताले परमेश्वरी।
चित्रकूटे तथा सीता, विन्ध्ये विन्ध्यनिवासिनी ॥२॥
प्रयागेललितादेवी, कामाक्षीगन्धमादने।
मानसेकुमुदानाम, विश्वकाया तथाम्बरे ॥३॥[4]

---

१. तत्रैव, १२।६१, ६२
२. मत्स्यपुराणे, १९५४, पृ० ३०, ३३
३. तत्रैव, १३।५४, ५५, ५६
४. मत्स्यपुराणे—मनसुखराय मोर, क्लाइव रोड, कलकत्ता १९५४, १३।३८।३९।२७

## २३. देव्यपराध-क्षमापनस्तोत्रम्—

यतोह्यत्र देवीं अपराध-क्षमापनस्यप्रार्थना पुस्तकेषु सर्वत्र नाम्नानेनास्य निर्देशः। बृहत्स्तोत्र-रत्नाकरयोः शिव शंकरग्रन्थावल्यां चानेन नाम्नानिर्देशः।[1]

आचार्य-शंकर-प्रणीतमिदं श्लोकानामत्र द्वादश।

आस्तिक-जगति परमं प्रसिद्धमिदं स्तोत्रमन्ते प्रत्यक्षतः फलकथनाभावेऽपि जप-स्तोत्रकुर्वतोजननं यातु इत्यभ्यर्थनायाः सत्त्वात् तस्या एव फलत्वात् निस्कामस्य तस्यप्रत्यक्षतः फलकथनासम्भवात्।

न मोक्षस्याकांक्षा न च विभववांछापि च नमे-
विज्ञानापेक्षाशशिमुखि सुखेच्छापि न पुनः।
अतस्त्वां संयाचे जननि जननं यातु मम वै
मृडानी रुद्राणी शिव शिव भवानीति जपतः॥८॥[2]

शिखरिणी छन्दोबद्धमिदं सरलया भाषया पृथक्-पृथक् पदर्थविबोधे सुगमतया जनानाकर्षति। अत्र कवेः हृदयसारल्यं विनम्रत्वं च दर्शनीये।

पृथिव्यां पुत्रास्ते जननिबहवः सन्ति सरलाः
परं तेषां मध्ये विरलतरलोऽहं तवसुतः।
मदीयोऽयं त्यागः समुचितमिदं नोतवशिवे
कुपुत्रो जायेतक्वचिदपि कुमाता न भवति॥१॥[3]

शिवशिवभवानी जपन् जीवनयापनं कामयमान आचार्यः भक्तेरुत्कृष्ट दशामिवगच्छति। दीनतायाः अपरःदृष्टान्तः मय्यनाथे, इत्युक्त्यामातुः वात्सल्यमुद्दीप्यते। तथा च—

नाराधितासिविधिनाविविधोपचारैः
किंरुक्षचिन्तनपरैर्नकृतंवचोभिः।
श्यामेत्वमेवयत्किंचिन्मय्यनाथे
धत्से कृपा मुचितमम्बपरं तदेव॥१॥[4]

## २४. देव्याः मंगलस्तोत्रम्—

मंगलाया देव्याः स्तोत्रत्वात्तदेवनाम। पुस्तकेतुमंगलचण्ड्युपाख्यान-शब्देनास्य निर्देशः। देव्याश्च मंगलस्तोत्रमित्यपि।[5]

देवीभागवते ९मे स्कन्धे ४७तमेऽध्याये २६तमं श्लोकमारभ्य सप्तत्रिशत्तमम् यावत्। श्लोकानां १२ शास्तोत्रकर्ता भगवान्महादेवः।

---

१. बृहत्स्तोत्ररत्नाकरयोः काशी बाम्बे संस्करण, पृ० ११९-१२०
२. देव्यपराधक्षमापन स्तोत्रे, श्लो० ८
३. देव्यपराधक्षमापनस्तोत्रे, श्लोक ३
४. तत्रैव, श्लोक ९
५. देवी भागवते (मनसुखराय मोर क्लाइव रोड, कलकत्ता), पृ० ६६९, श्लो० ३७

स्तोत्रस्यास्यपाठेन पुत्र-पौत्रादिवर्धनेन साकम् मंगलप्राप्तिः। तथा च तत्रैव—

देव्याश्च मंगलस्तोत्रं यः शृणोति समाहितः।
तन्मंगलंभवेत्तस्य न भवेत्तदमंगलम् ॥१॥
वर्धते पुत्रपौत्रैश्च, मंगलं च दिनेदिने।[1]

स्तोत्रे सरले संगीतमयेऽत्र भगवत्याः कतिपय-नामभिः सम्बोधनान्त-पदैः मंगल-कामना। मंगल-शब्दबाहुल्येन मंगलदातृतोच्यते। सानुप्रासा सप्रसादा भाषा। मंगलमन्तरा न कश्चित् विशिष्टविषयः। तथा च केचिच्छ्लोकाः।

मंगले मंगलार्हे च सर्वमंगलमंगले।
सतां मंगलदेदेवि सर्वेषां मंगलालये ॥१॥
मंगलाधिष्ठात्री देवी मंगलानां च मंगले।
संसार-मंगलाधारेमोक्षमंगलदायिनि ॥२॥
प्रथमे पूजितादेवी शिवेन सर्वमंगला।
द्वितीये पूजिता सा च, मंगलेन ग्रहेण च ॥३॥
तृतीये पूजिताभद्रामंगलेन नृपेण च।
चतुर्थे मंगले-वारे सुन्दरीभिः प्रपूजिता ॥४॥[2]

## २५. धन्वन्तरिकृतपार्वती-स्तोत्रम्—

धन्वन्तरिणाकृतमतस्तदेवनाम।

ब्रह्मवैवर्ते ४थखण्डे ५१ तमेऽध्याये ५५तमं श्लोकमारभ्य ७२ तमं यावत्। श्लोक-संख्या १८। स्तोत्र-कर्ता धन्वन्तरिः।[3]

भक्त्या स्तोत्रस्यास्य पाठेन नरस्यसर्प-भयं नश्यति। न केवलं स्तोतुरेवापितुतद्वंशजानामपि सर्प-भयं न भवति। तथा च तत्रैव—

इदं स्तोत्रं महत्पुरायं भक्ति-युक्तश्च यः पठेत्
वंशजानां नागभयं नास्ति तस्य न संशयः ॥१॥[4]

स्तोत्रे सरलयागिरा भगवत्या मनसायाः उपासना तत्स्वरूपवर्णनं च। प्रसादान्वितेऽनुष्टुप् छन्दोबद्ध आदौ मनसाया आवाहनम्। ततस्तस्याः स्वरूपवर्णनम्। सा च चारुचम्पक-वर्णाभा, स्मेरानना रत्नाभरण-भूषिता, शिरांसि च सुचारु-कवरीम् बिभर्ति। सदा च मातेव भक्तजनपरिरक्षिका। स्वरूपवर्णनान्ते-कतिपय नाममिः चतुर्थ्यन्त-युतैः नमः शब्दभूषितैः स्तवनम्। यथा—

---

१. देवीभागवते (मनमुखराय मोर, क्लाइव रोड, कलकत्ता), ९।४७।३७
२. तत्रैव, ९।४७।३०,३३,३४,३५
३. ब्रह्मवैवर्तमहापुराणे, श्रीकृष्णखण्डे (वे० प्र० वा० १९६६), पृ० १३९
४. तत्रैव, ४।५१।७२

नमः सिद्धिस्वरूपायै, सिद्धिदायै नमो नमः ।
नमः कश्यपकन्यायै, वरदायै नमो नमः ॥१॥[1]

स्तोत्रेऽस्मिन् पदानामुपादानं पृथक् रूपेण वर्तते । देवीसदा सर्पाद्रक्षति जनम्। स्तोत्रमिदंब्रह्माधन्वतरये ददौ। पुरानेनस्तोत्रेणास्तिकःस्तुष्टाव । सर्पभयाच्च विमुक्तोवभूव ।

**२६. नारायणीस्तोत्रम्—**

मार्कण्डेय-पुराणे एकनवतितमेऽध्याये २य श्लोकमारभ्य ३५तमं यावत् । श्लोकसंख्या ३४ । स्तोत्रकर्तारः देवाः । नारायणीस्तोत्रमिति नामकरणे सप्तम-श्लोकमारभ्य पंचविंशतिंयावत् श्लोकान्ते 'नारायणिनमोऽस्तुते[2] पदस्थितिरपिहेतुः।

स्तोत्रस्यास्य नित्य पाठेन दुष्कृतवाधादयः प्रशमंयान्ति । तथा च तत्रैव ।

एभिःस्तवैश्च मां नित्यं स्तोष्यते यः समाहितः
तस्याहं सकलांबाधां शमपिष्याम्यसंशयम् ॥१॥
नतेषां दुष्कृतं किंचिद् दुष्कृतोत्त्था न चापदः ।
भविष्यति न दारिद्र्यं न चैवेष्ट-वियोजनम् ॥२॥[3]

यदा देवी भगवती शुम्भादि-राक्षसान् जघान तदा प्रसन्नाः देवास्तां तुष्टुवुः ।

स्तोत्रेऽस्मिन् सर्वाः विद्याः स्त्रियः देव्यापूरिताः सैव । ब्रह्मणोऽन्तिके ब्रह्माणी विष्णोः गृहेलक्ष्मी शूलिनोऽन्तिके रुद्राणी । विश्वम्भरा च । तथा च—

विद्याः समस्तास्तव देविभेदाः स्त्रियः समस्ताःसकला जगत्सु ।
त्वयैकया पूरितमम्बयैतत्काते स्तुतिः स्तव्य-पराशक्तिः ॥१॥
हंस-युक्तविमानस्थे ब्रह्माणी रूप-धारिणि ।
कौशाम्भः क्षरिके देवि नारायणि नमोऽस्तु ते ॥२॥
त्रिशूलचन्द्राहिधरे महावृषभवाहिनि ।
माहेश्वरी स्वरूपेण नारायणि नमोऽस्तुते ॥३॥
विश्वेश्वरीत्वं परिपासिविश्वं, विश्वात्मिकाधारयसीतिविश्वम् ।
विश्वेशवन्द्या भवती भवन्ति, विश्वाश्रयाःयेत्वयि भक्तिनम्राः ॥४॥[4]

**२७. नील-सरस्वती-स्तोत्रम्—**

नीलरूपायाः भगवत्याः सरस्वत्याः स्तोत्रमिति तदेवनाम् । पुस्तकेऽपीद-मेवनाम ।[5] वृहत्स्तोत्ररत्नाकरे काशी-संस्करणे पुष्पिकायां चेदमेव नाम तथा च

---

१. ब्रह्मवैवर्ते महापुराणे, श्रीकृष्ण खण्डे (वे० प्रे० वा० १९६६) ४।५१।६३
२. मार्कण्डेय पुराणे (मनसुखराय मोर, क्लाइव रोड, कलकत्ता) १९६३, ९१तमे ध्याये
३. तत्रैव, ९१।१, ४
४. मार्कण्डेयपुराणे, (मनसुखराय मोर क्लाइव रोड, कलकत्ता), १९६३, ९१।११,१२,१४,३३
५. वृहत्स्तोत्ररत्नाकरे, (पण्डित पुस्तकालय काशी), २००३, पृ० १५०

इति नीलसरस्वती स्तोत्रम् ।[1] श्लोकाश्चात्र १२ ।

स्तोत्रस्यास्य पाठेन मोक्षं विद्यां धनं शत्रुक्षयं प्रज्ञां च विन्दति नरः । तथा च तत्रैव ।

अष्टम्यां च चतुर्दश्यां नवम्यां यः पठेन्नरः ।
षण्मासैः सिद्धिमाप्नोति, नात्र कार्याविचारणा ।।१।।
मोक्षार्थी लभते मोक्षं धनार्थी धनमाप्नुयात् ।
विद्यार्थी लभते विद्यां, तर्कव्याकरणादिकम् ।।२।।
इदंस्तोत्रं पठेद्यस्तु, सततं श्रद्धयान्वितः ।
तस्य शत्रुःक्षयं याति, महाप्रज्ञाप्रजायते ।।३।।[2]

तान्त्रिकरीत्यास्तोत्रस्यारम्भः । विद्याप्रदायिन्याः शत्रु-विनशकत्वेनापि चर्चा तथा च—

घोर-रूपे महारावे सर्वशत्रु-भयंकरि ।
भक्तेभ्योवरदे देवि, त्राहि मांशरणागतम् ।।१।।[3]

स्तोत्रेऽस्मिन्सरस्वत्या भीषणरूपस्यापि चर्चा । तस्या जिह्वा लौहमयी सा च महाकाली-महालक्ष्मी-महातारादि-रूपा । अनुष्टुप् छन्दः । सानुप्रासा सप्रसादौजः संम्वलिता । तथा च—

सुरा-सुरार्चिते देवि, सिद्ध-गन्धर्व-सेविते ।
जाड्य-पाप-हरे देवि त्राहि मां शरणागतम् ।।१।।
सौम्य-क्रोध-धरे-रूपे, चण्डरूपे, नमोऽस्तुते ।
सृष्टिरूपे नमस्तुभ्यं, त्राहि मांशरणागतम् ।।७।।[4]

**२८. परशुरामकृत-पार्वती-स्तोत्रम्—**

परशुरामेणकृतत्त्वात्पार्वत्याः स्तोत्रत्वाच्च चेदमेव नाम ।[5] अध्यायान्ते चेदमेव नाम । तथा च—

इति श्रीब्रह्ममहापुराणे गणपति-खण्डे नारायण-नारद-सम्वादे परशुराम-कृतं दुर्गा स्तोत्रं नाम पंचचत्वारिंशोऽध्यायः ।[6]

ब्रह्मवैवर्ते ३ये खण्डे ४५ तमेऽध्याये ८मं श्लोकमारभ्य ७६ तमं यावत् । श्लोकाः ६९ । परशुरामो विष्णुनोपदिष्टः पार्वतीं तुष्टाव ।

स्तोत्रस्यास्य पाठेन वांछितार्थ-प्राप्तिः पुत्र-कन्या-विद्या-प्रजा-राज्यवित्त-स्वास्थ्यवन्धनमुत्यादीनिप्राप्यन्ते तथा च तत्रैव—

१. तत्रैव, १५१
२. तत्रैव, श्लोकाः ९-११
३. बृहत्स्तोत्ररत्नाकरे (पण्डित पुस्तकालय काशी), २००३, १ श्लोक
४. तत्रैव, २, ३ श्लोक
५. ब्रह्ममहापुराणे (खेमराज श्रीकृष्णदास प्र० बम्बई), १९६३ सम्वत्, पृ० ९
६. तत्रैव, पृ० ४३०

स्तोत्रं वै करावशाखोक्तं पूजा-काले तु यः पठेत् ।
यात्रा-काले तथा प्रातर्वांछितार्थंलभेद्ध्रुवम् ।।१।।
पुत्रार्थी लभते पुत्रं कन्यार्थी कन्यकां लभेत् ।
विद्यार्थी लभते विद्यां, प्रजार्थी चाप्नुयात्प्रजां ।।२।।
भ्रष्टराज्यो लभेद्राज्यं नष्टवित्तो धनंलभेत् ।।
व्याधिग्रस्तो भवेन्मुक्तः स्तोत्रस्मरणमात्रतः ।
राजद्वारेश्मशाने च कारागारे च बन्धने ।।
स्तोत्र-स्मरण-मात्रैण वांछितार्थां लभेद्ध्रुवम् ।।[1]

स्तोत्रेऽत्र सरला पौराणिकी भाषा । सानुप्रासाल्पसमासा । सर्वास्त्रियः दुर्गावाचका एव ।[2]

**२६. ब्रह्मकृतसर्वमंगला-स्तोत्रम्** —

ब्रह्मणाकृतत्वात्सर्व-मंगलायाः स्तोत्रत्वाच्च—तदेव नाम । पुराणेऽपीद-मेवनामफल-कथनावसरे दृश्यते । तथा च—

इतिश्री ब्रह्मवैवर्तेगोप-कन्याकृतं सर्वमंगलास्तोत्रम् ।।[3]

ब्रह्मवैवर्ते ४थे कृष्णजन्मनिखण्डे २७तमेऽध्याये १७तमं श्लोकमारभ्य ५२तमं यावत् । श्लोक-संख्या ३५ । नारायणोनरंप्राह । सृष्ट्यादौ च मधुकैटभ-भीतने ब्रह्मणा कृतम् ।

स्तोत्रस्यास्य नित्यंपाठेन नरः सर्व-त्रासात् निवर्तते राजद्वारे श्मशाने-प्राण-संकटेहिंस्र जन्तु-भयग्रस्तोसंग्रामे शत्रु-ग्रस्तो नरश्चेत्पठेत्सर्व-कामप्राप्तिर्बाधा-निवृत्तिश्च ।[4]

स्तोत्रेऽस्मिन् भाषा सरला सप्रवाहा सानुप्रासा प्रभावात्मिका रसानुकूला । अत्रादौ दुर्गाशब्दार्थकथनं तत्र च दकारो दैत्यनाशनपरः उकारो विघ्ननाशकः रेफोरोगघ्नवचनोगश्च पापघ्नः। तथा च—

दैत्यनाशार्थ-वचनः दकारः परिकीर्तितः ।
उकारोविघ्ननाशार्थः, वाचकः वेदसम्मतः ।।१।।
रेफोरोगघ्नवचनः, गश्च पापघ्नवाचकः ।
भयशत्रुघ्नवचनश्चाकारः परिकीर्तितः ।।२।।[5]

दुर्गानारायणार्द्धवचना सदा नित्या निर्गुणा सनातनी अस्या सर्वमंगला-नाम सम्पूर्णैश्वर्यवाचकम् ।

---

१. ब्रह्ममहापुराणे, (खेमराज श्री कृष्णदास प्र० बम्बई), १६६३, ३।४५।६७,६८,६६,७०,७१
२. तत्रैव, ३।४५।६-५६
३. ब्रह्मवैवर्तमहापुराणे, पृ० ८५
४. तत्रैव, ४।२७।२६-३२
१. ब्रह्मवैवर्तमहापुराणे, ४।२७।२८१६

३०. भवानीभुजंगस्तोत्रम्—

भुजंगप्रयात-छन्दसाभगवत्या ; स्तोत्रत्वात्तेदवनाम पुस्तके उपक्रमोपसंहार-योश्चदमेव नाम । भवानी-भुजंग-प्रयातस्तोत्रमिति ।[1]

भगवत्पादैः शंकराचार्यैःकृतमिदं स्तोत्रम् । बृहत्स्तोत्र-रत्नाकरे काशी-संस्करणे शंकर-ग्रन्थावल्यां च धृतम् । बम्बई-संस्कृते बृहत्स्तोत्र-रत्नाकरेऽपि ।

स्तोत्रस्यास्य पाठेन शाश्वतपदोपलब्धिः अष्ट-सिद्धीनामवाप्तिश्च । तथा च तत्रैव ।

स्वकीयं पदं शाश्वतं चैव सारम् ।
श्रियं चाष्टसिद्धीश्च देवी ददाति ॥१॥[2]

स्तोत्रसाहित्ये भगवत्पादानामाचार्य-वराणाम् परमं प्रसिद्धं स्थानम् । प्रायः प्रसिद्धानां समेषांदेवानां स्तोत्राणि व्यरचयन्त । अत्र भाषा सौष्ठवं पदलालित्यं सरसप्रवाहात्मिकाशैली हृदयनिर्झरनिर्झरितस्वाभाविकी सरितेव हृदयानासिंचति सचेतसाम् । योग सिद्धान्त-प्रतिपादन परमिदम् ।तथा च —

षडाधार-पंकेरुहान्तर्विराजत् सुषुम्नान्तरालेऽपि तेजो लसन्तीम् ।
सुधामण्डलं द्रावयन्ती पिबन्ती, सुधामूर्तिमीडेऽहमानन्द-रूपाम् ॥१॥[3]

दीर्घसमासयुतम् । नमस्ते-नमस्ते इति पद-समन्वितं तुरीय-पादम् । भक्त-जनानावर्जयति ।

शरण्येवरण्ये सुकारुण्यपूर्णे, हिरण्यो पराद्यैरगम्येऽतिपूर्णे ।
भवारण्यमीतं च मांपाहिदुर्गे नमस्ते-नमस्ते-नमस्ते भवानि ॥१॥[4]

३१. लक्ष्मीस्तोत्रम्—

इन्द्रेण स्वराज्य-परिभ्रष्टेन स्वनष्टां श्रियं प्राप्तुकामेन लक्ष्मीस्तुताऽतस्ते-दवनाम ।[5]

विष्णु-पुराणस्यप्रथमेऽशेंनवमाध्याये ११७ तमं श्लोकतः १३३ तमं यावत् । श्लोक-संख्या १७ । स्तोत्रकर्तेन्द्रः ।[6] यदा भगवतः कृपयेन्द्रो दुर्वाससः शापाद्विमुक्तोजातः स तेजसा सम्पन्नः पुनः राज्य श्रियं प्रापतदा स्तवनमिदम-कार्षीत् । प्रयोजन्चास्य लक्ष्म्याः स्थिरत्व-प्राप्तिः ।

सरलेऽनुष्टुपछन्दोबद्धेऽत्रस्तोत्रे श्री सूक्तमाधारोऽत्र लक्ष्मीर्जगतो माता विष्णुश्चपितेति प्रतिपाद्य-विषयः । स्पष्टमेवात्र निर्दिष्टम् यद्ये सत्य-शौच

---

१. बृहत्स्तोत्ररत्नाकरे (काशी संस्करण), पृ० १३९
२. तत्रैव,
३. बृहत्स्तोत्ररत्नाकरे (काशी संस्करण), श्लोक १
४. तत्रैव, श्लोक १५
५. विष्णुपुराणे (दिल्ली विश्वविद्यालय पुस्तकालय), गीता प्रेस, गोरखपुर प्रकाशित, १।९ अध्यायान्ते ।
६. तत्रैव,

विहीनास्ते लक्ष्म्याऽपित्याज्याः भवन्ति। लक्ष्मीश्च सर्वलोकानामाश्रया विष्णुवक्षः-स्थल-शोभिनी। तथा च तत्रैव—

नमस्ते सर्वलोकानां जननीमब्जसम्भवाम्।
श्रियमुन्निन्द्रपद्माक्षीं विष्णु-वक्षः स्थलस्थिताम्॥१॥
पद्मालयां पद्म-करां, पद्मपत्र-निभेक्षणाम्।
वन्दे पद्ममुखीं देवीं, पद्मनाभप्रियामहम्॥२॥
सत्त्वेनसत्यशौचाभ्यां, तथा शीलादिभिर्गुणैः।
त्यज्यन्ते ते नराःसद्यः, सन्त्यक्ताः ये त्वयामले॥३॥[1]

भाषाऽत्रसरला, सानुप्रासा सर्वजनवेद्या स्वाभाविकी चात्र शैली। सरसम् पौराणिकम् सत्वगुणोपेतम्। भगवत्या श्रुति-प्रतिपाद्यं रूपमत्रदर्शितम्। श्रीसूक्तंपठित्वा पठनेनेदंमनुवाद मात्रमिवप्रतीयते।

## (ग) सामान्य स्तोत्राणि—(२८१)

१. अखिलाण्डेश्वरी स्तोत्रम्। श्लोकाः १०। स्तोत्रार्णवे धनायुरारोग्यदम्।
२. अन्नपूर्णा-सहस्रनाम-रुद्रयामलतो वाराणसी संस्कृत विश्वविद्यालयीय पुस्तकालये सं० १७५५८। सर्वापद्निवारकम्। सप्तपत्रात्मकम्।
३. अन्नपूर्णाष्टोत्तर शतनामस्तोत्रम्। सप्तपत्रात्मकम् सर्वापन्निवारकम्। वाराणसेय सं० वि० वि० १७५५७।
४. आनन्द-लहरी-स्तोत्रम्, श्लोकाः २०। आचार्य-शंकरकृतम्। तान्त्रिकमेतत्। सर्वेष्टदायकम्।
५. अर्गला-स्तोत्रम्—श्लोकाः २५। दुर्गायांधृतम्। सर्वसम्पद्दायकम्।
६. आपदुद्धार-दुर्गास्तोत्रम्। श्लोकाः १३। सिद्धेश्वरी-तन्त्रतोवृहत्स्तोत्र-रत्नाकरे काशीसंस्करणे वा सं० वि० विद्यालये च सर्वसिद्धिदम्। महा-निर्वाणतन्त्रे च।
७. आर्याष्टकम् श्लोकाः १० ताडपत्रीयम्। स्तोत्रार्णवे। कवित्व-शक्तिदम्।
८. इन्द्राक्षी-स्तोत्रम् श्लोकाः १८, वृहत्स्तोत्र-रत्नाकरे काशी-संस्करणे। पृ० १३८, वाक्सिद्धिदम् वश्यकारकम् च।
९. उमासहस्रम् श्लोकाः १०००। वासिष्ठगणपतिमुनिप्रणीतम्। अरविन्दा-श्रमतः प्रकाशितम्। काव्यात्मकम् देव्या अनुग्रह-कारकम्।
१०. कनकेश्वरी-स्तोत्रम्, श्लोकाः २७। स्कान्दे ५।१८६।१५-४१। धन-धान्यदम्।
११. कनकधारास्तोत्रम्, श्लोकाः १८। आचार्यशंकरकृतम् गुणाधिक्य-लक्ष्मीदम्।

---

1. विष्णुपुराणे, (दिल्ली विश्वविद्यालय पुस्तकालय) गीता प्रेस, गोरखपुर, १।९।११७-११९ श्लोकाः।

१२. कर्पूरस्तवराजः श्लोकाः २२। हितकारितन्त्रोक्तः। शाक्तप्रमोदे प्रथम-संस्करणे २००८ सं० प्रकाशिते च, पृ० ८१। तत्र महाकाल-प्रणीत इति लिखितम्। शत्रुघ्नम्।
१३. कल्याणवृष्टि-स्तवः श्लोकाः १६। आचार्य-शंकरकृतः। राजवश्य-कारकः।
१४. कामाक्षीस्तोत्रम्, श्लोकाः ९। स्तोत्रार्णवे। ताडपत्रीयम्। सौख्यदम्।
१५. कालीअष्टोत्तर-शतनामस्तोत्रम्-श्लोकाः २० रुद्रयामलतः। वा० सं० वि० वि० पु० सं० १४२५। शाक्तप्रमोदे कालीतन्त्रे, पृ० ९१। सर्वसिद्धिदम्।
१६. कालिकाचतुःश्लोकीस्तवेन्द्रः श्लोकाः ४। वा० वि० वि० पु० सं० १४२५। पृ० ५०५ कैटलाग। शत्रुनाशकम्।
१७. कालीकवचम् रुद्रयामले कालीतन्त्रे श्लोकाः २० सौख्यदम्।
१८. कालीकवचम् श्लोकाः ३६। शाक्तप्रमोदेकाली-तन्त्रे पृ० ८५। शत्रु-नाशकरम्।
१९. कालीकवचम् श्लोकाः २७ कालीकुलसर्वस्वतः। वा० वि० वि० पुस्तकालये। शत्रुनाशकरम्।
२०. कालीकवचम् श्लोकाः ९। वज्रपंजरमपरं नाम रुद्रयामलतः। सिद्धिदम् वा० वि० वि० पुस्तकालये।
२१. कालीकवचम् श्लोकाः १५। वीरभद्र-तन्त्रे। रक्षा-करम्।
२२. काली कवचम् श्लोकाः २६। शम्भवीय-संहितातः सुखदम्।
२३. कालीकवचम् श्लोकाः ३०। काली-कुलसर्वस्वे शान्तिदम्।
२४. कालीकवचम् श्लोकाः २२ कालीकल्पे। रक्षाकरम्।
२५. कालीकवचम् श्लोकाः २४। कालीकुल-सर्वस्वे सर्वेष्टदम्। शत्रुनाशकरम्।
२६. कालीकवचम् भैरवप्रोक्तम् श्लोकाः ५५। सर्वरक्षाकरम्।
२७. कालीकवचम्, श्लोकाः ५२। विरुपाक्षरचितम्। सर्वेष्टदम्। वैरिनाशनम्।
२८. कालीकवचम् श्लोकाः ३६। महाकालप्रोक्तम् कारागार-विमुक्तिदम्।
२९. कालीकवचम् श्लोकाः १५। भैरवप्रोक्तम्। शत्रुनाशकम्।
३०. कालीकवचम् श्लोकाः ६० भैरवप्रोक्तम्। कालिकारहस्ये। सर्व-रक्षाकरम्।
३१. कालीकवचम् श्लोकाः ६८ भूतडामरप्रोक्तम्। भूतादिबाधाशान्तिकरम्।
३२. कालीकवचम् श्लोकाः ८३ भूतडामरमहाकालभाषितम्। भूतादि-बाधा-शान्तिकरम्।
३३. कालीकवचम् श्लोकाः ७३। भैरवनिर्मितम् शत्रुनाशनपरम्।

३४. कालीकवचम् (त्रैलोक्यमोहनमपरं नाम)। श्लो० ६२ मोहनादिकरम्।
३५. कालीकवचम् श्लोका: ५४ कालीकल्पे। शत्रुनाशकरम्।
३६. कालीरजस्वलास्तोत्रम् श्लोका: २९। सर्वशान्तिकरम्। वा० वि० वि० १४७७।
३७. काली वैरिहरणकवचम् रुद्रयामले श्लोका: २८। सर्वविघ्नहरम्।
३८. कालीसहस्रनाम, श्लोका: ५२। महाकाल-संहितात:, वा० वि० वि० १४२९। सर्वसिद्धिदम्। काली-स्तोत्रम्। श्लोका: १७। शाक्तप्रमोदे, पृ० ८५, कालीतन्त्र: संसारतारकदेवीभक्तिदम्।
३९. कालीसहस्रनाम (ककारादि) श्लोका: १९५। महानिर्वाणतन्त्र: शाक्त-प्रमोदे, पृ० ९१। सिद्धिदम्।
४०. कालीस्तोत्रम् श्लोका: १७। शाक्तप्रमोदे, पृ० ८२। संसारतारक-भक्तिदम्।
४१. कालिकाशतनाम-स्तोत्रं श्लो० १३, महानिर्वाणतन्त्रे ७मोल्लासे दु:ख-नाशकम्।
४२. कालिकवचम्—श्लोका: २५। महानिर्वाण-तन्त्रे ७मोल्लासे, दु:ख-नाशकम्।
४३. कीलकस्तोत्रम् श्लोका: १४, दुर्गायां विजयदम्।
४४. कुमारीस्तोत्रम्, श्लोका: २५, शाक्तप्रमोद, पृ० ३९६, मुक्तिदम्।
४५. कुमारीकवचम्, श्लोका: ४३। शाक्तप्रमोदे ३९९ मुक्तिदम्।
४६. कुमारीस्तोत्रम् श्लोका: ९। शाक्तप्रमोदे ४०२ भाग्यदम्।
४७. क्षेमकरीस्तोत्रम् श्लोका: १०। पद्मपुराणे १।३५।१५८-१६७। रोगा-दिशान्तिदम्।
४८. कोटराक्षीस्तोत्रम् श्लोका: ६। पद्मपुराणे ६।१५९।८-१३। सौख्यदम्।
४९. कलंकेश्वरी-स्तोत्रम् श्लोका: २७। स्कान्दे ५।१८६।१५-४१। कलंकनि-वृत्तिकरम्। गरुडकृतम्।
५०. गायत्रीकवचम् श्लोका: १७। गायत्री-कल्पे। वा० वि० वि० पु० सं० १४४४। पुरश्चर्याफलदम्।
५१. गायत्रीकवचम् श्लोका: १७ वासिष्ठसंहितात:। ब्रह्मवधादिपातकनि-वृत्ति: फलम्।
५२. गायत्रीस्तोत्रम् वृहत्स्तोत्ररत्नाकरे श्लोका: ९। मन्त्रसिद्धिकरम्।
५३. गायत्रीस्तोत्रम्, श्लोका: २१। वृहत्स्तोत्ररत्नाकरे, पृ० १४४। सिद्धिकरम्।
५४. गायत्रीस्तोत्रम् श्लोका: १९ दे० भा० १२।५।१-२९। सर्वार्थदम्।
५५. गायत्रीसहस्रनामस्तोत्रं श्लोका: २०९। रुद्रयामलत: सकृच्छ्रवणमात्रेण-

कोटिजन्माघनाशनम् । वा० वि० वि० १४४५।

५६. गायत्रीसहस्रनामस्तोत्रम् श्लोकाः १६४। दे० भाग० १२।६।१-१६४। असाध्यसाधकम् ।

५७. गायत्रीहृदयम् श्लोकाः २८ । दे० भ० १२।४-३२ । सर्वसिद्धिकरम् ।

५८. गौरीदशकम् श्लोकाः ११ । आचार्य-शंकररचितम्, वा० वि० वि० १४५०, दुःखहरम् ।

५९. चण्डिकादेवीसूक्तम् श्लोकाः १३ । वाराहीतन्त्रतः, वा० वि० वि० प्र० सं० १४५६, दुःखहरम् ।

६०. चाटुपुष्पांजलिस्तोत्रं श्लोकाः २४ । श्रीस्तवकल्पद्रुमे ६४० पृष्टे, भवान्याः प्रसादकरम् ।

६१. छिन्नमस्तास्तोत्रम् श्लोकाः १२ । शाक्तप्रमोदे, पृ० २३२ धनधान्यदम् ।

६२. छिन्नमस्ताकवचम्—श्लोकाः १९ । शाक्तप्रमोदे, पृष्टे २६३ । आयुरारोग्यदम् ।

६३. छिन्नमस्ताष्टोत्तरशतनामस्तोत्रम् श्लोकाः २२ । शाक्तप्रमोदे, पृ० २३८ । रिपुनाशकम् ।

६४. छिन्नमस्ता-सहस्रनाम-द्विशताधिकाः श्लोकाः शाक्तप्रमोदे पृ०, २४०, सर्वदम् ।

६५. जगन्मंगलास्तोत्रम्, श्लोकाः ३७, भैरवीतन्त्रतः । वा० वि० वि० प्र० सं० १४५९ सिद्धिदम् ।

६६. ज्वालामुखीकवचम् श्लोकाः ३४ । देवीरहस्ये ३८७ पृष्टे । देवीवश्यकरम् ।

६७. ज्वालामुखीस्तोत्रम्, श्लोकाः २५ देवीरहस्ये, पृष्टे ४०३, देवीवश्यकरम् ।

६८. ज्वालामुखी-सहस्रनामस्तोत्रम् १३३ श्लोकाः देवी-रहस्ये, पृष्टे ३९० । शत्रुनाशकरम् ।

६९. तारास्तोत्रम् । श्लोकाः १० शाक्तप्रमोदे १३० पृ० विद्यालक्ष्मीदम् ।

७०. ताराकवचम् श्लोकाः ५५ । शाक्तप्रमोदे १३२ । शत्रुघ्नम् ।

७१. तारातकारादिसहस्रनामस्तोत्रम् श्लोकाः २४४ । शाक्तप्रमोदे १४० पृष्टे सर्वदम् ।

७२. ताराहृदयम् श्लोकाः २१ शाक्तप्रमोदे १३८ । रोगादिमुक्तिदम् ।

७३. दक्षिणाकालीकवचम्—श्लोकाः ६३ । रुद्रयामलतः वा० वि० वि प्र० सं० १४७८ । सर्वविद्यादम् ।

७४. दक्षिणाकालिकास्तोत्रम् श्लोकाः २२ । देवीयामलतः वा० वि० वि० १४७७ । सिद्धिप्रदम् ।

७५. दक्षिणामूर्तिसहस्रनामस्तोत्रम्, श्लोकाः १५४ । वा० वि० वि० पु०

सं० १४७९। सर्वसिद्धिकरम्।

७६. दुर्गाकवचम् श्लोकाः ५६। कुब्जिकातन्त्रतः सप्तशत्यां। सर्वसिद्धिकरम्।

७७. दुर्गामन्त्रनामसहस्रकम्, श्लोकाः १५६। देवीरहस्ये ४९ पटले। २९५ पृष्टे, शत्रुनाशकम्।

७८. दुर्गाष्टोत्तरशतनामस्तोत्रम् श्लोकाः १८, शाक्तप्रमोदे, पृष्टे ४२६ सर्वदम्।

७९. दुर्गा-नीराजनम् श्लोका ९। दुर्गोपासना-कल्पद्रुमे १६१ पृष्टे कष्टहरम्।

८०. दुर्गास्तोत्रम् श्लोकाः २५ शाक्तप्रमोदे ३९६। मुक्तिदम्।

८१. दुर्गास्तोत्रम् श्लोकाः १९२। देवीरहस्ये, ५० पटले, पृष्टे ३१२। वश्यकरम्।

८२. दुर्गास्तोत्रम्, श्लोकाः १४। वारा० पु० ९५।५८-७१। सर्वकामप्राप्तिः।

८३. देवकृतादितिमायास्तोत्रम् श्लोकाः ६। पद्मपुराणे ६।१०४।१८-२३ विजयदम्।

८४. देवकृत-भ्रामरी-स्तोत्रम् श्लोकाः ४१। दे० भा० १०।१३।८७-१२७। विघ्ननाशकम्।

८५. देवीचतुःषष्ठ्युपचार-स्तोत्रम् श्लोकाः ७२। आचार्यशंकरकृतम वांछितार्थदम्।

८६. देवीमहिम्नस्तोत्रम् अस्यापरं नाम पराशक्ति-महिम-स्तोत्रम्। दुर्वाससा कृतं श्लोकाः ६३ शुचिकरम्।

८७. देवीमहिम्नस्तोत्रम् श्लोकाः ३४, दुर्गोपासनाकल्पद्रुमे ३४ पृष्टे कीर्तिकरम्।

८८. देवीस्तोत्रम् श्लोकाः २१ देवी भा० ३।५।२६-४६। सर्वकामदम्।

८९. देवीकृतंस्तोत्रम् श्लोकाः १८, शिवपुराणे युद्धकाण्डे २६।२०-३७ यावत्। विजयदम्।

९०. देवीसूक्तम् श्लोकाः ३७, वा० वि० वि० पुस्तक सं० १४२९। दारिद्र्यविनाशकम्।

९१. देवीसूक्तवर्णनस्तोत्रम् श्लोकाः ७८, वा० वि० वि० प्र० सं० १४९०। सप्तशत्या १३शोऽशः। रुद्रयामलतः विजयदम्।

९२. देव्याः नीराजनम्, श्लोकाः, दुर्गासप्तशत्यां (राजा दरवाजा काशी), वाजपेयी सम्पादितायां विजयदम्, डा० ब्रजमोहन चतुर्वेदीतः प्राप्तम्।

९३. नवयुवकद्वन्द्वदिदृक्षाष्टकम् श्लोकाः ९, श्री रघुनाथ-दास-गोस्वामि-विरचितम्, श्रीस्तवकल्पद्रुमे ६६१ पृष्टे।

९४. पंचदशीस्तोत्रम् श्लोकाः १२। आचार्य-शंकर-कृतम्। बा० वि० वि० पुस्तक-संख्या १४९९। दुःखदारिद्यनाशकम्।

९५. पंचदशीविग्रहकवचम्, श्लोकाः ३०। रुद्रयामलतः वा० वि० वि० पु० सं० १५००। मन्त्र-सिद्धिकरम्।

९६. पद्मावतीस्तोत्रम्, श्लोकाः २६। वा० वि० वि० पु० सं० १५०३। मन्त्रसिद्धिकरम्।

९७. परापूजा-स्तोत्रम् श्लोकाः १८, आचार्यशंकर-कृतम्। पूजनजन्यफलदम्। वा० वि० वि० पु० सं० १५०४।

९८. पापप्रशमनस्तोत्रम्। श्लोकाः २७ वामनपुराणे ८८।२-२८ धर्म-कीर्ति-दायकम्। पापघ्नम्।

९९. पापप्रशमनस्तोत्रम् श्लोकाः ४९। पाद्मे ५।९४।१३२-१५८। पापनाशकम्।

१००. पीताम्बरा-कवचम् दक्षिणामूर्ति-संहितातः। श्लोकाः ४६, वा० वि० पु० सं० १५०७, शत्रुनाशकम्।

१०१. पीताम्बराष्टोत्तर शतनाम—श्लोकाः ५२। उत्कटशाबरनागेन्द्रप्रयाणतन्त्रतः। वा० वि० पु० सं० १५०६, शत्रुनाशकम्।

१०२. पीताम्बरा-सहस्र-नाम-स्तोत्रम् श्लोकाः १५३, उत्कटशाबरनागेन्द्र-प्रयाणतन्त्रतः। वा० वि० वि० पु० सं० १५०८। सर्वार्थदम्।

१०३. पुष्पावती-स्तोत्रम्, श्लोकाः १८, वा० वि० वि० पुस्तक संख्या १५१०। दुःखौधनाशनम्। उच्चाटनादिकृत्।

१०४. प्रत्यंगिरासूक्तम् श्लोकाः ४७, वा० वि० वि० पु० सं० १५११। शत्रुनाशन मुच्चाटनादिकृत्।

१०५. बंगलाकवचम् श्लो० ३८, विश्वसार-तन्त्रतः शाक्तप्रमोदे, पृ० ३१२। शत्रुनाशकम्।

१०६. बंगलाकवचम् बगलातन्त्रतः, वा० वि० वि० प्र० सं० १५१७, शत्रुनाशकरम्।

१०७. बंगलामुखीकवचं श्लोकाः ४५, एकवीणातन्त्रतः, वा० वि० प्र० सं० १५२० शत्रुनाशकम्। बगलामुखीस्तोत्रंश्लोकाः १७, शक्ति प्रमोदे-पृष्टे ३१०, शत्रुघ्नम्।

१०८. बंगलामुखीसहस्रनाम श्लोकाः, १८८ शाक्तप्रमोदे ३२० सर्वार्थदम्। इष्टपूरकम्।

१०९. बंगलामुखीशतनामस्तोत्रम् श्लोकाः १९। विष्णुयामलतः शाक्तप्रमोदे, पृ० ३१९। शत्रुनाशकम्।

११०. बंगलामुखीहृदयम्, श्लोकाः २५ सिद्धेश्वर-तन्त्रतः शाक्तप्रमोदे, पृ० ३१६। शत्रुनाशकम्।

१११. बंगलाब्रह्मास्त्रस्तोत्रम् रुद्रयामलतः श्लोकाः २२। बाम्बे वि० वि० प्र०

सं० १५१६। शत्रुस्तम्भनकरम् ।

११२. बंगलामुखी-स्तोत्रम्: श्लोकाः १८ । रुद्रयामलतः, वा० वि० वि० पुस्तक सं० १५२२, सकलकृत्यसिद्धिदम् ।

११३. बंगलारत्नमालिकास्तोत्रम् श्लोकाः ३९ । रुद्रयामलेनारदप्रोक्तम्, वा० वि० वि० पु० सं० १५२५ । सर्वसिद्धिकरम् ।

११४. बंगलार्णवकवचम् श्लोकाः १४ । वा० वि० वि० पु० सं० १५२७, शत्रुनाशनपरम् ।

११५. बंगलास्तवः—श्लोकाः ४३ । अथर्वणरहस्यतः, वा० वि० वि० पु० सं० ४३ । सर्वसिद्धिकरम् ।

११६. बन्दीमोचनदेवीस्तोत्रम् श्लोकाः ११, रुद्रयामलतः, वा० वि० वि० पु० सं० १५३४ । बन्दीमोचनकरम् ।

११७. बन्दीमोचन-स्तोत्रम् श्लोकाः ११ । बन्दीमोचनकरम् ।

११८. बालाकवचम् श्लोकाः २० । गौरी-सारतन्त्रतः, वा० वि० वि० पु० सं० १५३६ । योगमोक्षप्रदम् ।

११९. बालाष्टकम् श्लोकाः ८, वा० वि० पु० सं० १५३८ । सर्वकामदम् ।

१२०. बालाकवचम् श्लोकाः १७, देवीरहस्ये, ५०० पृष्टे, रुद्रयामलतउद्धृतम्, रोगादिनाशकम् ।

१२१. बालास्तोत्रम्, श्लोकाः ८ । देवीरहस्ये ५२० पृष्टे । सार्वभौमपदम् ।

१२२. बालासहस्रनाम श्लोकाः २०० देवीरहस्ये ५०२ पृष्टे, सदानन्दम् ।

१२३. बालासहस्रदामस्तोत्रम् । रुद्रयामले, वा० वि० वि० पु० सं० १५३९ । सर्वेष्टदम् ।

१२४. बालासहस्रनामस्तोत्रम् श्लोकाः २०० हंसयामलतः देवीरहस्ये । वा० वि० वि० पु० सं० १५४२, सर्वेष्टदम्, पृ० ५०२ ।

१२५. बालास्तवराजः श्लोकाः १७ । वा० वि० वि० पु० सं० १५४३, सर्व-कामदम् ।

१२६. बालाहृदयम् । श्लोकाः २१ । ज्ञानार्णवतोवा वि० वि० पुस्तकसंख्या १५४४ । शत्रूच्चाटनपरं सर्वसिद्धिकरम् ।

१२७. ब्रह्मकृतलक्ष्मी-स्तोत्रम् श्लोकाः ५३, स्कन्दे २।१५।१-५३, राज्य-प्राप्तिकरम् ।

१२८. भगवत्यष्टकम्-श्लोकाः ९ । अमरदास-कविरचितम् वृहत्स्तोत्ररत्ना-करयोः । सुपुत्रधनधान्यादिदम् ।

१२९. भगवतीपुष्पांजलि-स्तोत्रम्, श्लोकाः ३० । श्रीरामकृष्ण कविना रचितम् । बृहत्स्तोत्ररत्नाकरे काशी-संस्करणे, पृ० २३३, सुकृतिदम् ।

१३०. भगवती स्तोत्रम् श्लोकाः १७ । देवी-भागवते १।५।५२-६८ । दुःख-

विमुक्तिकारकम्।

१३१. भद्रकालीकवचम्, श्लोकाः १९। ब्रह्मवैवर्ते ३।३७।५-२४ महादानतपोव्रतजपादिजन्यफलम्।

१३२. भद्रकालीस्तोत्रम् श्लोकाः १९। ब्रह्माण्ड-पुराणे ३।३९।३५-४८। जयदम्।

१३३. भवानी-सहस्रनामस्तोत्रम् श्लोकाः २५०। रुद्रयामलतः, वा० वि० पु० सं० १५२२। सर्वदुःखनिवृत्तकरम्।

१३४. भवानी-पंचरत्नस्तोत्रम् श्लोकाः ५, आचार्य-शंकरकृतम् शान्तिदम्।

१३५. भ्रामरी-स्तोत्रम् श्लोकाः २१, दे०भा० १०।१३।८३-१०३, विमुक्तिदम्।

१३६. भवानी-स्तवनाष्टकम् श्लोकाः ८। वृहत्स्तोत्ररत्नाकरे, काशी-संस्करणे, करुणाकरम्।

१३७. भुवनेश्वरी-कवचम् श्लोकाः ३२, रुद्रयामलतः, शाक्तप्रमोदे २०६, पुत्रादिदम्।

१३८. भुवनेश्वरीस्तोत्रम् श्लोकाः २६- शाक्तप्रमोदे, पृ० २०२, सम्पत्तिदम्।

१३९. भुवनेश्वरी-सहस्रनाम-स्तोत्रम् श्लोका २०३, शाक्त-प्रमोदे, पृ० २१०। शत्रुनाशकम्। महातन्त्रार्णवतः।

१४०. भुवनेश्वरी-शतनामस्तोत्रम् श्लोकाः २४, रुद्रयामलतः शाक्तप्रमोदे, पृ० २०८। शत्रुनाशकम्।

१४१. भुवनेश्वरी-हृदयं, श्लोकाः २२, नीलसरस्वती-तन्त्रतः, शाक्त-प्रमोदे, पृ० २०६। धनार्युदम्।

१४२. भैरवी-कवचम् श्लोकाः ५१। रुद्रयामलतः शाक्ते-प्रमोदे २६२ पृष्टे। सर्वसिद्धिदम्।

१४३. भैरवी-स्तोत्रम् श्लोकाः १६। रुद्रयामलतः शाक्तप्रमोदे, पृ० २६०। वाक्सिद्धिकरम्।

१४४. भैरवी-सहस्रनामस्तोत्रम् श्लोकाः १५४। शाक्तप्रमोदे, पृ० २६८। सर्वाभीष्टदम्।

१४५. भैरवीशतनामस्तोत्रम् श्लोकाः २३। शाक्त-प्रमोदे गाणपत्यकारकम्।

१४६. भैरवीहृदयम् श्लोकाः १२। भैरवकुलसर्वस्वतः शाक्तप्रमोदे २६५। अतः पर किंचिद् पुरायंनास्ति।

१४७. मन्त्रमातृका-पुष्पमालास्तवः श्लोकाः १७, आचार्य शंकरकृतः, मनोविमलकारकः।

१४८. महाविद्यास्तोत्रम् श्लोकाः १२। स्कान्दे १।६२।५१-६२। विद्यादायकम्।

१४९. महाराज्ञीमूलमन्त्रस्तोत्रम् श्लोकाः १९, देवीरहस्ये ४७७ पृष्टे। राजपद-प्रापकं मुक्तिदम्।

१५०. महाराज्ञी-सहस्रनाम-स्तोत्रम् श्लोकाः १७७। देवीरहस्ये परिशिष्टे ६० पृष्टे। घोरपातकादि-विमुक्तिदम्।

१५१. महालक्ष्म्यष्टकम् श्लोकाः ११। बृहत्स्तोत्ररत्नाकरे, काशी-संस्करणे, धनधान्यदं शत्रुघ्नम् च।

१५२. मातंगीकवचम् श्लोकाः २५, शाक्तप्रमोदे ३३८। त्वरितंफलदायकम्।

१५३. मातंगी-स्तोत्रम्, श्लोकाः ९। रुद्रयामलतः शाक्तप्रमोदे, पृ० ३३७, श्रीदम्।

१५४. मातंगी-स्तोत्रम्, श्लोकाः १८। वा० वि० वि० पु० सं० १५६८, बाधा-निवृत्तिकरम्।

१५५. मातंगी-सहस्रनाम स्तोत्रम् श्लोकाः १६२। शाक्तप्रमोदे २४३ पृष्टे। सर्वेष्टदम्।

१५६. मातंगी-शतनाम-स्तोत्रम् श्लोकाः २५। रुद्रयामलतः शाक्तप्रमोदे, पृ० ३०४ सर्वदम्।

१५७. मातंगीहृदयम्। श्लोकाः १८, दक्षिणामूर्तिसंहितातः शाक्तप्रमोदे, पृ० ३४०। कुबेरसमसम्पत्तिकारकम्।

१५८. मातृ-कृत-दुर्गा-स्तोत्रम्, श्लोकाः ११। स्कान्दे १।२०।५०-६०। सर्वेष्टदम्।

१५९. याज्ञवल्क्यकृतवाग्देवीस्तोत्रम् श्लोकाः ३०, ब्र० वै० २।५।६-३५ मेधाकरम्।

१६०. योगनिद्रोक्तकवचम्, श्लोकाः २६, ब्र० वै० ४।१२।१७-४२, विषाग्नि-जलभीति निवारकम्।

१६१. योगेश्वरी-सहस्रनाम-स्तोत्रम् श्लोकाः २००। वा० वि० वि० पु० सं० १५७५। रुद्रयामले। सर्वसिद्धिदम्।

१६२. रजस्वलास्तोत्रम् श्लोकाः २२। वा० वि० वि० पु० सं० १५७७। सन्तानंद। बन्ध्यात्व-विनाशकरम्।

१६३. राधाकवचम् श्लोकाः ५९। व० वै० महापु० प्र० खण्डे ५६।१-५९। जीवन्मुक्तिकारकम्।

१६४. राधाकवचम्, श्लोकाः १६। नारद-पंचरात्रीयम् ज्ञानामृतसारतः। वृहत्स्तोत्ररत्नाकरयोः। हरितुल्यताकारकम्।

१६५. राधाकृत-पार्वतीस्तोत्रम्—श्लोकाः ३६। ब्र० वै० महापुराणे ४।२७। ७९-११४। हरिभक्तिदम्।

१६६. राधिकाषोडशनामस्तोत्रम् श्लोकाः ३२, ब्र० वै० १७।२१६-२४७। राधावमाधवचरणाजभक्तिदम्।

१६७. राधास्तोत्रम् श्लोकाः ३० । ब्र० वै० ४।६२।६४-६३ । इहसुखदमन्य-त्रमोक्षदम् ।

१६८. राधास्तोत्रं, श्लोकाः ३० । ब्र० वै० ४।६२।६४।६३, कृष्णभक्तिकरम् ।

१६९. राधिकाष्टोत्तरशतनामस्तोत्रम्, श्लोकाः ४२ । श्रीस्तवकल्पुद्रुमे ५६३ । रूपगोस्वामिकृतम् । प्रेमसुधाकरम् ।

१७०. राधिकाष्टोत्तरशतनामस्तोत्रम् श्लोकाः ४७ । रघुनाथगोस्वामिकृतम् श्रीस्तवकल्पद्रुमे । ५६७ ।

१७१. राधाष्टोत्तरशतम् श्लोकाः १७, श्रीस्तवकल्पद्रुमे, कृष्णभक्तिदम् ।

१७२. रेणुका-सहस्रनाम, वा० वि० वि० प्र० सं० १५६२, सर्वेष्टदम् ।

१७३ रेणुकास्तवराजः श्लोकाः १२३, भुक्तिमुक्तिदम् ।

१७४. लक्ष्मीपंजरस्तोत्रम्, श्लोकाः २४, महारहस्यतः, वा० वि० वि० पु० सं० १५६४ । लक्ष्मीदम् ।

१७५. लक्ष्मीस्तोत्रम्, श्लोकः २६, ब्र० वै० २।३६।५२।८० । सिद्धिस्तोत्रमिति नामान्तरम् । कुबेरतुल्यताकारि ।

१७६. लक्ष्मीस्तोत्रकवचम् श्लोकाः ३६, ब्र० वै० ३।२२ सर्वसम्पत्करं, विजयदम् ।

१७७. लक्ष्मीस्तोत्रं श्लोकाः ४६, स्कान्दे ३।५०।५६-१०५ धनधान्यदम् ।

१७८. लक्ष्मीस्तोत्रं श्लोकाः २३ । स्कान्दे ४।५।७८-१०० सम्पत्तिकरम् ।

१७९. लक्ष्मीस्तोत्रम् श्लोकाः ११ । वा० वि० वि० पु० सं० १५-६५ । धनधान्यदम् ।

१८०. लक्ष्मी-मानसपूजास्तोत्रम् श्लोकाः ६७, त्रिविक्रमकृतम्, वा० वि० प्र० सं० १५६६ । धनदम् ।

१८१. लक्ष्मी-सहस्रम्, श्लोकाः १००० स्तवकाः २५ । वेंकटाध्वरिरचितम् । देवीप्रसन्नताकरम् । स्तोत्रोपेक्षया काव्यत्वमधिकम् ।

१८२. लघुसप्तशतीस्तोत्रम् श्लोकाः १७ । पृथ्वीधराचार्य-रचितम् । योग-सिद्धिदम् । वृहत्स्तोत्ररत्नाकरे काशी-संस्करणे ।

१८३. लघुस्तोत्रम् श्लोकाः २५ । लघ्वाचार्य रचितम् । वृहत्स्तोत्र-रत्नाकरयोः । कवित्व-कारकम् ।

१८४. लघुदुर्गासप्तशतीस्तोत्रम् । श्लोकाः १०, दुर्गोपासना-कल्पद्रुमे, पृ० ४६ । आपद्विनाशकम् ।

१८५. ललितापंचरत्नम् श्लोकाः ५ । आचार्य-शंकरकृतम् सौभाग्यविद्याकरम् ।

१८६. ललिताम्बास्तोत्रम् श्लोकाः १४५ । ब्रह्माण्डपुराणीयम् । सर्वमनोरथ-पूरकम ।

१८७. ललिता-मकरन्दस्तवः श्लोकाः १७ । रुद्रयामले । वा० वि० पु० सं० १५६७।

१८८. ललितासहस्रनाम श्लोकाः ३२० । ब्रह्माण्डपुराणे हयग्रीवागस्त्य-सम्वादे ३५ अ० । सर्वरोग-शमनकरम ।

१८६. ललिताष्टोत्तर-शतनामस्तोत्रम श्लोकाः ३३ । सर्वसिद्धिकरम ।

१६०. वज्रपंजरकवचम श्लोकाः १६ । महादेवी-रहस्ये, ३० पटले । शत्रु विनाशकरम ।

१६१. वज्रपंजरकवचम श्लोकाः ४५ । स्कान्दे ४।७२।३७-८१ । शत्रु-विनाशकरम् ।

१६२. वज्रेश्वरी-विद्या-स्तोत्रम् । श्लोकाः १८ पाद्मे १।२२।१७८-१६५ । जाड्यनाशकम् ।

१६३. वाराही-निग्रहाष्टकम् । श्लोकाः ८ । बृहत्स्तोत्र रत्नाकरयोः भक्तिदम् ।

३६४. वाराही-अनुग्रहाष्टकम् । श्लोकाः ८ । बुद्धिदम् २०५, वीरकक्रृतपार्वती-स्तोत्रं श्लोकाः ६ । पाद्मे १।४६।११०-१२८ ।

१६५. विशाखानन्दाभिधस्तोत्रम् श्लोकाः १३४ । श्रीस्तवकल्पद्रुमे, पृ० ६१० । हर्षदम् । रघुनाथदास कृतम् ।

१६६. शारिकामूलमन्त्रस्तोत्रम् श्लोकाः २८ । देवीरहस्ये ४३६ पृष्टे, कल्याण-करम् ।

१६७. शारदाभुजंग-प्रयाताष्टकम् श्लोकाः ८ आचार्य-शंकरकृतम् । विद्या-कारकम् ।

१६८. शारिका-सहस्रनाम-स्तोत्रम् श्लोकाः १५३ । देवी रहस्ये ४२४ पृष्टे । इह सर्व-सुखं भुक्त्वा परत्र-त्रिदिवं व्रजेत ।

१६६. शारिका-त्रैलोक्य-मोहन-कवचम् श्लोकाः ४५ । देवी-रहस्ये ४१६ । सर्व-कामप्रदम् ।

२००. शिवकृत-पार्वती-स्तोत्रम् श्लोकाः ६ । ब्र० वैवर्ते महापुराणे ४।३७।४१-४६ ।

२०१. शिवकृतपार्वती-स्तोत्रम् श्लोकाः ३५ । ब्र० वै० ४।४३।७४।१०८ ।

२०२. शीतलाष्टकम् श्लोकाः १५ । वृहत्स्तोत्ररत्नाकरयोः श्लोकाः १५ । शीतलारोग-शान्तिरकम् ।

२०३. श्यामाकवचम् श्लोकाः १५ । भैरवतन्त्रतः दुःखनिवृत्तिकरम् ।

२०४. श्यामास्तोत्रम् श्लोकाः २२ । महाकाल-रचितम् शान्तिदम् ।

२०५. श्रीकमलात्मिका-कवचम् श्लोकाः ३४ । शाक्त-प्रमोदे ३५६ पृ०, लक्ष्मीदम् ।

२०६. श्रीकमलात्मिकाष्टोत्तर-शतनाम श्लोका: १९ । शाक्तप्रमोदे ३७० धनदम् ।
२०७. श्रीकमलात्मिकास्तोत्र, श्लोका: ३, शाक्तप्रमोदे ३५७, लक्ष्मीदायकम् ।
२०८. श्रीकमलात्मिकासहस्रनाम, श्लोका: १७६, शाक्तप्रमोदे ३७२, सर्वदम् ।
२०९. श्रीकमलात्मिकाहृदयम्, श्लोका: १०८, शाक्तप्रमोदे ३६०, सिद्धिदम् ।
२१०, श्रीकामाक्षी स्तोत्रम्, श्लोका: ३३, स्तोत्राणे वे० ६६३, पृ० भोगदम् ।
२११. श्रीकुमारी-कवचम्, श्लोका: ४३, शाक्तप्रमोदे ३९९, शान्तिदम् ।
२१२. श्रीकुमारी-स्तोत्रम् श्लोका: २५, शाक्तप्रमोदे ३९६, मुक्तिदम् ।
२१३. श्रीकुमारी-स्तोत्रम्, श्लोका: ९, शाक्तप्रमोदे ४०२, सर्वदम् ।
२१४. श्रीगन्धर्वसम्प्रार्थनाष्टकम्, श्लोका: ९। रूपगोस्वामिकृतम्, श्रीस्तव-कल्पद्रुमे ५८१ पृ०। देवी-कृपाकरम् ।
२१५. श्रीगुणरत्नकोशः (लक्ष्मीस्तोत्रम्) पराशरभट्ट कृतम् । श्लोका: ६१ । वा० वि० वि० पुस्तकालये प्र० सं० १६९० । लक्ष्मीदम् ।
२१६. श्रीतुरीयाषोडशी (श्री राजराजेश्वरी कवचम), श्लोका: ७१, स्तोत्रार्णवे ६७३ पृष्टे सर्वार्थदम् ।
२१७. श्रीधूमावती कवचम्, श्लोका: १०। शाक्तप्रमोदे २८९ । विद्याकरम् ।
२१८. श्रीधूमावतीशतनाम श्लोका: १८, शाक्तप्रमोदे २९२ सर्वसंकटनाशनम् ।
२१९. श्रीधूमावतीस्तोत्रम्, श्लोका: १३, शाक्तप्रमोदे २८७, सर्वशान्तिकरम् ।
२२०. श्रीधूमावती-सहस्रनामस्तोत्रम् श्लोका: १८८। शाक्तप्रमोदे, पृ० २९३ । सर्वार्थदम् ।
२२१. श्रीधूमावती-हृदयम्, श्लोका: ३५। शाक्तप्रमोदे, पृ० २८९ । मनोरथ-पूरकम् ।
२२२. श्रीनवाष्टकम्, श्लोका: ९। श्रीस्तवकल्पद्रुमे पृ० ५८३, राधा-प्रीतिकरम् ।
२२३. श्रीमीनाक्षीमणिमालाष्टकम्, श्लोका: ९, स्तोत्रार्णवे ६७८ पृष्टे, कवित्वकारकम् ।
२२४. श्रीराधाकृपाकटाक्षस्तवराजः श्लोका: २०। श्रीस्तवकल्पद्रुमे ६२५ । सर्वार्थसिद्धिकरम् । वाक्सामर्थ्यदम् ।
२२५. श्रीराधास्तोत्रम्, श्लोका: १०, ब्रह्माण्डीयम् श्रीस्तवकल्पद्रुमे ६०६, राधा-प्रीतिकरम् ।
२२६. श्रीराधास्तोत्रम्, श्लोका: ७ । सनत्कुमार-संहितातः श्रीस्तवकल्पद्रुमे पृ० ६०५ । कृष्णलोकदम् ।
२२७. श्रीराधास्तोत्रम्, श्लोका: ४। वनमालिदासरचितम्, हरि-प्रीतिकरम् ।

२२८. श्रीराधा-सप्तत्रिंशन्मात्र-स्तोत्रम्, श्लोकाः ६। नारदपांचरात्रतः श्रीस्तवकल्पद्रुमे। कोटिजन्मार्जित-पापनाशनम्।

२२९. श्रीराधिकानामावलिस्तोत्रम्, श्लोकाः २७ श्रीस्तवकल्पद्रुमे पृ० ६०८। कृष्णप्रीतिदम्।

२३०. श्रीराधिकाया-प्रेमपूजामिधास्तोत्रम् श्लोकाः ११। श्री रघुनाथ-गोस्वामिरचितम्। श्रीस्तवकल्पद्रुमे। राधाकृष्ण-प्रीतिकरम्।

२३१: श्रीराधिकाष्टकम्। श्लोकाः ६। श्रीमद्रूपगोस्वामिरचितम्। श्रीस्तव-कल्पद्रुमे। पृष्टे ५७१।

२३२. श्रीराधिकाष्टकम् श्लोकाः ६। श्रीमद्र्धुनाथगोस्वामिरचितम्। राधिका-कृपाप्राप्तिः। श्रीस्तवकल्पद्रुमे।

२३३. श्रीराधिकाष्टकम् श्लोकाः ६। बालकृष्णदास-कविराजरचितम्। श्रीस्तवकल्पद्रुमे ५७३। राधाकृष्ण-दर्शनदम्।

२३४. श्रीराधिकाष्टकम् श्लोकाः ६। श्रीमन्नरसिंहहरिसरकार-ठक्कुर-रचितम्। भीतिनिवारकम्।

२३५. श्रीराधिकाष्टकम् श्लोकाः ६। श्रीस्तवकल्पद्रुमे पृष्टे ५७८। श्रीयमुना-बल्लभशरणरचितम्। बाधाहरम्।

२३६. श्रीराधिकाष्टकम् श्लोकाः ८। श्रीराधिकानाथ-गोस्वामिरचितम् मोद-दायकम्।

२६७. श्रीराधिकाया आनन्दचन्द्रिकाख्यस्तोत्रम्। श्लोकाः ४। श्रीस्तवकल्पद्रुमे ५९२ पृष्टे। रूपगोस्वामिरचितम्-क्लेशनाशकम्।

२३८. श्रीराधिकाष्टोत्तरशतनामस्तोत्रम् श्लोकाः ४२। श्रीस्तवकल्पद्रुमे पृ० ५९३। प्रेमामृतदम्।

२३९. श्रीराधिकाष्टोत्तरशतनामस्तोत्रम् श्लोकाः ४७। श्रीस्तवकल्पद्रुमे ५९७। श्रीमद्रघुनाथ-गोस्वामिरचितम्। भक्तिदम्।

२४०. श्रीस्तोत्रम् श्लोकाः १७। अग्निपुराणे २३७।३-१९ वृहत्स्तोत्ररत्ना-करयोः। राज्यलक्ष्मी-स्थिरताकारकम्।

२४१. श्रीसरस्वती-दशश्लोकीस्तोत्रम् श्लोकाः ३५। आश्वलायनमुनि-प्रोक्तम्। स्तोत्रार्णवे ६८७ पृष्टे। वांछितदायकम्।

२४२. श्रीपार्वतीमानस-स्तोत्रम्। १६। स्तोत्रार्णवे पृ० ७०६। वांछित-दायकम्।

२४३. श्रेयस्करी-स्तोत्रम्। श्लोकाः ६। श्रीकृष्णानन्दसरस्वती-रचितम् बृहत्स्तोत्ररत्नाकरे। श्रेयस्करम्।

२४४. षोडशीकवचम्। श्लोकाः १७। सिद्धयामलतः शाक्तप्रमोदे षोडशीतन्त्रे पृ० १७८। स्वर्गदम्।

२४५. षोडशी-शतनाम-स्तोत्रम् श्लोकाः २० ब्रह्मयामलतः षोडशी-तन्त्रे शाक्त-प्रमोदे १८३। सर्वभोगदम्।

२४६. षोडशीस्तोत्रम्, श्लोकाः १५। ब्रह्मरचितं शाक्तप्रमोदे १७६। लक्ष्मीदम्।

२४७. षोडशीसहस्रनामस्तोत्रम् श्लोकाः १५०। बामकेश्वरतन्त्रतः शाक्तप्रमोदे पृष्टे १८४।

२४८. षोडशी-हृदयम् श्लोकाः का० १८। त्रिपुरसुन्दरीतः शाक्तप्रमोदे पृ० १७९। सुखदम्।

२४९. सरस्वती-कवचम् श्लोकाः ३१। ब्र० वै० २।४।६१-९१। विद्यादम्।

२५०. सरस्वतींकवचम् नीलसारस्वत-तन्त्रतः वा० वि० वि० पु० सं० १६९९। विद्याकरम्।

२५१. सरस्वतीकवचम्, श्लोकाः २७। दे० भाग० ९।४।७४-९०। वृहस्पति-समविद्यादायकम्।

२५२ सरस्वतीकवचम् श्लोकाः २८। देवी-भाग० ९।५।६-३३। वाग्मिता-कारकम्।

२५३. सरस्वती-स्तोत्रम् श्लोकाः १६। बृहत्स्तोत्ररत्नाकरे १४७ पृष्टे। ब्रह्मणारचितम्। वांछितदम्।

२५४. सरस्वती-स्तोत्रम् श्लोकाः १०। रुद्रयामले वृहस्पति-रचितम्। वा० वि० वि० १७०२। वृहत्स्तोत्ररत्नाकरयोः। स्तोत्रार्णवे च। विद्यादायकम्।

२५५. सरस्वती-स्तोत्रम्, श्लोकाः ९। वासुदेवानन्द-सरस्वती-रचितम्। वृहत्स्तोत्ररत्नाकरे पृ० ३०१। सरस्वती कृपाकरम्।

२५६. सरस्वती-स्तोत्रम् श्लोकाः ११। वृहत्स्तोत्ररत्नाकरे द्वितीये वासुदेवा-नन्दरचितम्। धीजाड्यनाशकम्।

२५७. सरस्वती-स्तोत्रम्, श्लोकाः ११। वृहत्स्तोत्ररत्नाकरे पृ० ३१०। वासु-देवानन्दसरस्वती-रचितम्। जाड्यनाशकम्।

२५८. सरस्वतीस्तोत्रम्, श्लोकाः २०। पाद्मे १।२२।३१०-३२९। विद्यादम्।

२५९. सरस्वतीस्तोत्रम्, श्लोकाः १८। पाद्मे १।२।१७८।१९५ जाड्यनाशकम्।

२६०. सरस्वतीस्तोत्रम् श्लोकाः १२। सनत्कुमार संहितातः वा० वि० वि० १७००। स्तोत्रार्णवे ६८७। विद्यादम्।

२६१. सारस्वतीस्तोत्रम्, श्लोकाः १९। वामनपुराणे ३२।५२३। विद्यादम्।

२६२. सारस्वतीस्तोत्रम्, श्लोकाः ५०। वामन पु० ८।६७-१२६। विद्यादम्।

२६३. सीताकवचम्, श्लोकाः ३४। आ० रामायणे ८।१४।१-३४। ईप्सितदम्।

२६४. सीता-कृत-पार्वतीस्तोत्रम्, श्लोकाः ब्रह्मवैवर्ते ४।२७।१७२-१८३। नारीहलोके मनसेप्सितम्प्राप्यान्ते कृष्णसन्निधियाति।

२६५. सीताष्टोत्तर-शतनामस्तोत्रम्, श्लोकाः ३०। आनन्द-रामायणे ८।१४।३७-६६। भुक्तिमुक्तिदम्।

२६६. सुमुखीपटलम्, श्लोकाः ४९। कुलार्णव-तन्त्रतः, वा० वि० पु० सं० १७०९। क्षेमकरम्।

२६७. सुवर्णमुखरीस्तवः श्लोकाः १३। स्कान्दे २।२३।११-२३ धनधान्यकरम् शक्तिवर्द्धकम्।

२६८. सौभाग्य-कवचम् श्लोकाः ८४। बामकेश्वरतन्त्रत उद्धृतम् स्तोत्रार्णवे पृ० ७०५। त्रैलोक्यवशकरम्।

२६९. सौभाग्य-रत्नमालास्तोत्रम् श्लोकाः ३२। त्रिपुरारहस्ये १-३२। ललिता-पंचकस्तोत्रे (मास्टर खे० ए० सन्स काशी), सकलेप्सितदम्।

२७०. सौभाग्याष्टोत्तरशतनामस्तोत्रम् श्लोकाः ३६। त्रिपुरारहस्यतः सर्व-बांछित-दायकम्।

२७१. स्वामी-वश्यशत्रुसंहारस्तोत्रम् श्लोकाः ६। शिवार्णवतः वा० वि वि० पु० सं० १७१०। नाम-सदृश-फलदम्।

२७२. संकष्टनामाष्टकम्, श्लोकाः १७। वृहत्स्तोत्ररत्नाकरयोः।

२७३. त्रिपुरसुन्दरी-स्तोत्रम्, श्लोकाः ८। आ० शं० कृतम् सकलार्थदम्।

२७४. त्रिपुरसुन्दरी वेदपादस्तोत्रम्, श्लोकाः ११०, आचार्यशंकर कृतम्, अतुल-सिद्धिदम्। शंकरग्रन्थावल्याम्।

२७५. त्रिपुरः सुन्दरी मानसपूजास्तोत्रम् श्लोकाः १२७, आचार्य-शंकर-कृतम्, पूजनफलदम्।

२७६. त्रिपुरा-प्रातर्भजनम्, श्लोकाः ६। स्तोत्रार्णवे ६७२ पृष्टे अणिमाद्यष्ट-सिद्धिदम्।

२७७. त्रैलोक्यमोहनकवचम् श्लोकाः ३४। रुद्रयामलतः वा० वि० पु० सं० १४७२। त्रिपुरसुन्दरी-कवचं महात्रिपुरस्तोत्रमिति च नामान्तरम्। मोहनकरम्।

२७८. त्रैमूर्ति-सूक्तम्। श्लोकाः ७७। रुद्रयामलस्यैकांशभूतात् देविशतकात्। वा० वि० वि पुस्तक संख्या १४६६। सर्वदम्।

२७९. त्रैयोक्यमंगलकवचम्। श्लोकाः ३०। वा० वि० पु० सं० १४६७। त्रैलोक्यविजयदम्।

२८०. त्रैलोक्य-मोहन-कवचम् श्लोकाः १६०। सर्वदम्। गरुड पुराणे।

२८१. त्रैलोक्य-विजयकवचम्, श्लोकाः ४५। रुद्रयामलतः वा० वि० पु० सं० १४७६। शत्रुनाशकरम्।

चतुर्थोऽध्यायः

# शिवस्तोत्राणि

## शिवः

१. शब्दार्थः

शिवस्य भगवतः स्तोत्र-चर्चा याम् शिव-शब्दार्थ एव विवच्यते यथा-क्रमम्। तन्मूलकत्वाच्चार्थानामन्येषाम्।

शीधातोः "सर्वनिधृष्वति" वन् प्रत्ययेननिपात्येतेऽयं शब्दः। शिवं कल्याणं विद्यतेऽस्य श्यति अशुभमिति वा शेरन्तेऽवतिष्ठन्तेऽणिमादयोष्टसिद्धयोऽस्मिन्।[1] सायणस्त्वस्य शब्दस्याक्रूरं सुखकरमितिचार्थमाह। तथा च—

शिवेन अक्रूरेण सुखकरेण शिवया कल्याण्या इष्टप्राप्ति-हेतु-भूतया।[2]

अन्याश्च व्युत्पत्तयः

(क) शिवुकल्याणे धातोर्निष्पादनेन कल्याण-करः शिवइत्यर्थः।

(ख) शेते सर्वमस्मिन्निति, व्युत्पत्त्या शीङ्धातेर्विनि कृते सर्वव्यापक इत्यर्थः।

(ग) निरुक्ते "शेव इति सुख-नाम शिष्यते वकारो नाम करणः अन्तः-स्थान्तरोपलिंगी विभाषितगुणः शिवमप्यस्य भवति।" शिष्यते सुखावहो भवतीति फलितार्थ इति।"[3]

(घ) "नित्यनैर्गुरायतया शुद्धत्वात्, शिवः स्वनाम-स्मृतिमात्रेण पावयन् शिव इति शंकराचार्यो विष्णु सहस्रनाम-भाष्ये।[4] शीङ्शुभार्थः शेते सुखावहो लभ्यतेऽनेन शिवः "शेतशेषासनेयः स शिवः"।"[5]

(ङ) शिवमस्यास्तीति शिवयतिवा शिवः तथा च महाभारते।

---

१. हलायुधकोशे, जोशी, उ० प्र० प्रकाशन, पृ० ६६२

२. अथर्ववेदे १।३३।४

३. निरुक्ते १०।१७

४. विष्णु सहस्रनाम्नि शंकरभाष्य-संहिते, गीता प्रेस गोरखपुर २०१६, श्लोक १७

५. रामानुजभाष्ये, तत्रैव, श्लोके

"मनुष्यान् शिवमन्विच्छन् तस्मादेव शिवः स्मृतः ।"[1]

(च) वष्टि अनवरतं कामयते लोकहितं यः सः शिवः अत्रव्युत्पत्तौ वशि-कान्तौ-धातोः सिंह इव वर्ण-विपर्ययेण शिव इति "यथा च पश्यकात् कश्यपः" ।[2]

(छ) श्वयति सर्वं जानाति सर्वं व्याप्नोतीति स शिवः,

(ज) शेते सर्वकारण-सहितं जगदस्मिन्निति शिवः सर्वाधारः स्वयं निराधारः ।"

(झ) शिष्यते प्रलयानन्तरमिति शिवः"[3] ऋग्भाष्ये । तथा चर्क्परिशिष्टे—

आदित्यवर्णं तपसाज्वलन्तं यत्पश्यामिगुहासु जायमानम्,
शिवरूपं शिवमुदितं, शिवालयं तन्मेमनः शिवसंकल्पमस्तु ।"[4]

एवं च पर्यालोचनेनोत्पत्ति-स्थिति-प्रलयकारी, नित्यनिरंजनः शुद्धबुद्धो-निष्कलः जगदधिकारी, सर्वाधारः शिवः । तत्प्रकृतिधातवश्च "शीङ्वश्, श्वि ।"

## २. प्रमुख-नाम्नामर्थाः

अथेदानीं स्तोत्रागतप्रमुखनाम्नामर्थाः विविच्यन्ते तत्रादौ रुद्रस्य विशेषतो विवादास्पदस्य । रोदयति सर्वमन्तकाल[5] इतिरुद्रः संहर्ता देवः, रुदिर् अश्रु विमोचने ण्यन्तात् "रौदेर्णिलुक्चेति णेर्लोपे[6] रकिप्रत्यये च सिद्ध्यति । अन्यत्रापि सायण-एतदाशयकं वक्ति । तथा च अथर्ववेदे "रुद्रलायभेषज" इति मन्त्रव्याख्यायां" रौतिशव्दायते तारकं ब्रह्मोपदिशतीति रुद्रः ।"[7]

"जन्तोः प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्मव्याचष्टे[8] । शव्दब्रह्मतन्नाम्ना रोरूयमाणो द्रवति सर्वप्राणि-हृदये वर्तते इति वा । अस्त्रेणछिन्नशिरसं, शोचन्तंप्रजापतिं अनुस्वयमपि शोकवशात् अरोदीदिति वा उत्पत्ति काले स्वयं अरुददितिवा रोदयतिसर्वमन्तकाले इति वारुद्रः ।"[9]

यास्कोऽप्याह "रुद्रो रौतीति सतो रोरूयमाणे द्रवतीति वारोदयतेर्वारुद्रः ।

---

१. महाभारते १६१।१०
२. अभियुक्तोक्तिः
३. ऋग्वेदे १०।१२६।२
४. ऋक्परिशिष्टे ३३।१५
५. अथर्ववेदे १।१६।३ मन्त्रस्य सायणभाष्ये
६. उणादिसूत्रम् २।२२
७. अथर्ववेदे २।२७।६
८. जावालोपनिषदि १
९. अथर्ववेदे सायणः १।१६।३

यदरुदत्तद् रुद्रस्य रुद्रत्वमितिकाठकम्।यदरोदीत्तद्रुद्रस्यरुद्रत्वं इति हारिद्राविकम् ।[१] यदरुदत्तद्रुद्रस्य रुद्रत्वमिति काठकानां प्रवचनम् ।[२] यदरोदीत्तद्रुद्रस्य रुद्रत्वमिति हारिद्राविकाणाम् ।[३] अन्यत्रापि नमो रुद्राय नमोस्तु तक्मने"[४] इति व्याख्यायां सायणोरुद्राय रोदयति उपतापेनाश्रूणि विमोचयतीति रुद्रः । वृहद् देवतायां च "यतोऽन्तरिक्षेविद्युत् वृष्टिं दहत् नरान् अरोदीत् अतोऽस्य रुद्रत्वम् । तथा च तत्रैव—

"अरोदीदन्तरिक्षेयत्, विद्युद्वृष्टिर्ददन्नृणाम् ।
चतुर्भिः ऋषिभिस्तेन रुद्र इत्यभिसंस्तुतः ।।१।।"[५]

बृहदारण्यकोपनिषदि—यतोऽस्मात् शरीरात् उत्क्रामन्ति रोदयन्ति अथ यद्रोदयन्ति तस्मादुद्रा इति तथा च—

"कतमे रुद्रा इति दशेमे पुरुषे प्राणा आत्मैकादशते ।
यदास्माच्छरीन्मर्त्यादुत्क्रामयन्त्यथारोदयन्ति तस्माद्रुद्राः ।।१।।"[६]

रुद्रोऽग्निरिति-अथर्ववेदे—तथा च—

"तस्मै रुद्राय नमो अस्त्वग्नये"[७] इति शतपथेऽप्याह "अग्निर्वै रुद्र"[८] इति ।

हलायुधकोशे च रुद्रशब्दार्थे पूर्वोक्तरीत्या विग्रहं कृत्वा शिवः महादेवः आद्यर्थाः लिखितास्तथा च—

"रोदयति रुद्+णिच्" रोदेर्णिलुक् चेति, रकिणेश्च लुकि शिवोमहादेवः शंकर उमापतिः ।[९]

महाभारते च "त्रिजूटश्चीरवासाश्चरुद्रः सेना-पतिर्विभुः ।"[१०]

कुमारसम्भवे च—"रुद्राणामतिमूर्धानः क्षतहुंकार-शंसिनः"[११]

वैदिकसाहित्ये रुद्रशब्दस्य व्युत्पत्तिर्विभिन्नरूपेणावलोक्यते । तत्रसायण-महीधरोब्बटादिव्याख्याकाराणामुद्धारणानिदीयन्ते ।

सायणः—

---

१. निरुक्त दैवत काण्डे, १०।१।१।६, पृ० ७१४
२. अथर्ववेदे २५।१
३. तु० तै० ११५।१।१
४. अथर्ववेदे ६।२०।२
५. वृद्देवतायांम् २।३४
६. अष्टाविंशत्युपनिषदि १९६५ काशी वृहदारण्यकोपनिषदि ३।९।४
७. अथर्ववेदे ७।८।३
८. शतपथे ३।१।३
९. हलायुधकोशे, १८७९, पृ० ६८
१०. महाभारते २३।१७।४६
११. कुमारसम्भवे २।२६

१. "रुद्रस्य कालात्मकपरमेश्वरस्य।"[१]

२. "रुद्राय क्रूराय अग्नये।"[२]

३. "रुत् दुःखं तद्, हेतुभूतं पापं वा तस्य द्रावयितारौ रुद्रौ संग्रामे भयंकरं शब्दयन्तौ।"[३]

४. "रुद्राणां...प्राणरूपेण वर्तमानानां मरुतां यद्वारोदयितॄणां प्राणानां। प्राणाहि शरीरान्निर्गता सन्तोबन्धुजनान् रोदयन्ति।"[४]

५. रुद्राणांरोदन-कारिणां[५] घाटीरूपोययोस्तौरुद्रवर्तनौ।"

६. "रोदयन्नि शत्रूनिति रुद्राः।"[६]

७. "रुद्रौ संग्रामे रुदन्तौ।"[७]

८. "हे रुद्रज्वरादिरोगस्य प्रेक्षणेन संहर्तर्देव।"[८]

९. "रुद्रियं सुखम्।"[९]

१०. रुद्रियं रुद्रसम्बन्धिभेषजमिति।[१०]

अथर्ववेदे—

१. रोदयति सर्वमन्तकाले इति रुद्रः संहर्ता देवः।[११]

२. रोतिशब्दायते तारकं ब्रह्म उपदिशतीतिरुद्रः।[१] तथा च जावालश्रुतिः "अत्र हि जन्तोः प्राणोषूत्कामत्सुरुद्रस्तारकं ब्रह्मव्याचष्टे।"[१२]

३. "तस्मैजगत्स्रष्टे सर्व जगदनुप्रविष्टाय रुद्राय।"[१३]

४. "रुत् दुःखं दुःखहेतुर्वा तस्यद्रावको देवः रुद्रः परमेश्वरः।"[१४]

५. "सर्वप्राणिनो मामनिष्ट्वाविनश्यन्ति इति स्वयं रौतिरुद्रः।"[१५]

६. "स्वसेवकानांदुःखस्यद्रावकत्वंरुद्रस्य।"[१६]

७. "महानुभावं रुद्रम्।"[१७]

८. "रुद्रस्य हिंसकस्य देवस्य।"[१८]

९. "रुद्रस्य ज्वराभिमानिदेवस्य।"[१९]

१०. "रुद्रः रोदयितोशूलाभिमानिदेवः।"[२०]

---

१. ऋग्वेदे ६।२८।७

२. ऋग्वेदे १।२७।१०

३. तत्रैव १।१५८।१

४. तत्रैव १।१०१।७

५-७ तत्रैव. १।३।३ तथा ३।३२।३ तथा ८।२६।५

८-१०. ऋग्वेदे १।१६९।१ तथा २।११।३ तथा १।४३।३

११. अथर्ववेदे १।१९।३

१२-१३. जावालोपनिषदि १, अथर्ववेदे २।२७।६

१४-१७. अथर्ववेदे ७।९।२।१, ११।२।३, १८।१।४०, १८।१।४०, १८।१।४०

१८-२०. तत्रैव ६।५९।३, ४।२१।७, ६।९४।१

११. "रोदयति उपतापेनाश्रूणि मोचयतीति रुद्रोज्वराभिमानिदेवः।"[१]

१२. "रोदयिताशत्रूनितिरुद्रः"[२]

१३. "रुद्रा रोदकाः।"[३]

१४. "रुद्राः रोदयितारः अन्तरिक्षस्थानीयाः देवाः।"[४]

१५. "रुद्रः पशूनामभियन्तापीडाकरोदेवः।"[५]

उब्वटाचार्यस्य भाष्यम्—

१. "रुद्रैः स्तोतृभिः।"[६]

२. "रुद्रवर्तनी रुग्णवर्तनी।"[७]

३. "रुद्रौ शत्रूणां रोदयितारौ।"[८]

४. "रुद्रैः धीरैः।"[९]

महीधराचार्यः—

१. "रुद्रस्य शिवस्य।"[१०]

२. "रुद्राय शंकराय।"[११]

३. "रुत् दुःखं द्रावयतीतिरुद्रः रवणंरुत् ज्ञानं राति ददाति नॄन् दुःखभोगेनरोदयति।"[१२]

४. "रुद्रस्य क्रूरदेवस्य।"[१३]

५. "रुत् दुःखं द्रावयति नाशयति।"[१४]

६. "रुद्रो दुःख-नाशकः।"[१५]

७. "रोदयति विरोधिनां शतम्।"[१६]

---

१. अथर्ववेदे ६।२०।२
२. तत्रैव ७।९२।१
३. तत्रैव ५।६।१०
४. तत्रैव १९।११।४०
५. अथर्ववेदे ६।१४।१
६. यजुर्वेदभाष्ये ३८।१६
७. तत्रैव १९।८२
८. तत्रैव २०।८१
९. तत्रैव ११।५५
१०. वा० यजुर्वेदे १६।५०
११. तत्रैव १६।४८
१२. तत्रैव १६।१
१३. तत्रैव ११।१५
१४. तत्रैव १६।२८
१५. तत्रैव १६।३९
१६. तत्रैव ३।५७

८. "रुद्रौ शत्रूणां रोदयितारौ ।"[१]

९. "रुद्रः धीरैर्बुद्धिमद्भिः ।"[२]

१०. "रुद्रैः स्तोतृभिः ।"[३]

११. "रुद्रै-वर्तनी रुग्ण-वर्तनी भिषजौ अश्विनौ"[४]

१२. "कदन्नभक्षणे चौर्ये वा प्रवर्त्य रोगमुत्पाद्य जनान्,
घ्नन्ति तेभ्यः पृथ्वीस्थेभ्यः अन्नायुधेभ्यो रुद्रेभ्यः ।"[५]

यजुर्वेदे षोडशाध्याये रुद्रवाचका अनेके शब्दाः । येषांसंख्या २४० तोऽपिप्रचुरा० । तथा च—

विश्वरूप, विद्युत्, वायुः, वृक्षः, गृत्सः, मन्त्री, भिषक् सभा सभापतिः, स्थपतिः, सेनानी, सेना, इषुकृतः रथी, वणिक्, किरिकः, तक्षन्, परिचरः स्तेन, प्रतरण, श्वन्आदयः ।

## विमर्शः

उल्लिखितोद्धरणानां विवचनेनायाति यद्रुद्रशब्दे रुद् धातुः प्रकृतित्वेनाभिसम्बद्धः रोदयतीतिरुद्रस्तत्कर्मत्वे कल्पना प्रधाना । सन्दर्भविशेषोवा कारणम् । यथा रोदयति शत्रून् वीर-रूपेण, रोदयति, दुष्टान् न्यायाधीश-रूपेण, इत्थं च रोदयितृत्वमेव रुद्रत्व मित्यायाति । रुत् ज्ञानं तद्ददातीति व्युत्पत्या ज्ञानदोरुद्रः । ज्ञानदातृत्वं रुद्रत्वं । रुत् दुःखमित्यर्थे द्रावयतीति क्रियया-संयोगे दुःख नाशकः ।

एवं च प्रतीयते यदेक एव रुद्रोनाना-रूपेण यथायोग्यं यथाकर्म च जनेभ्यः फलानिवितरन् परमेश्वर एव यथैकस्यैवेश्वरस्यांशाः सर्वत्र तथैवैक एव रुद्रः । तस्याशां इमे । स च रुद्रःसदसद्रूपेण सर्वत्रास्ति । यथाभगवान् श्रीकृष्णः गीतायां दशमेऽध्याये स्वविभूतिं सदसद्योनिषु द्यूतकारिषु कलहिषु च कृतवानेवमेव भगवान्रुद्रः सर्वत्रव्यापकः । तथा च—गीतायाम्—

रुद्राणां शंकरश्चास्मि वित्तेशो यक्षरक्षसाम्,
वसूनां पावकश्चास्मि, मेरुःशिखरिणामहम् ॥१॥

यज्ञानां जपयज्ञोऽस्मि, स्थावराणांहिमालयः ।
मृगाणां च मृगेन्द्रोऽहं वैनतेयश्च पक्षिणाम् ॥२॥

---

१. तत्रैव २०।२१
२. तत्रैव ३८।१६
३. वा० यजुर्वेदे ३८।१६
४. तत्रैव १९।८२
५. तत्रैव १६।६५

द्यूतं छलयतामस्मि तेजस्तेजस्विनामहम्।
वृष्णीनां वासुदेवोऽस्मि, पाण्डवानां धनंजयः ॥३॥[1]
अथवा बहुनैतेन किं ज्ञातेन तवार्जुन,
विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥१॥[2]

ईदृगेव रुद्रः चौरादि-रूपं धत्ते तथा च रुद्राध्याये महीधर-भाष्ये—

"रुद्रो लीलया चौरादि-रूपं धत्ते, यद्वा रुद्रस्य जगदात्मकत्वात् चौरादयो रुद्रा एव ज्ञेयाः। यद्वास्तेनादिशरीरे जीवेश्वर-रूपेण रुद्रो द्विधा तिष्ठति, तत्र जीव-रूपं स्तेनादि-पदवाच्यं तदीश्वरो रुद्ररुपं लक्षयति । यथा शाखाग्रं चन्द्रस्य लक्षकम् । किम्बहुनालक्ष्यार्थविवक्षया मन्त्रेषु लौकिकाः शब्दाः प्रयुक्ताः।"[3]

सायणोऽपि कारावयजुः १७ तमेऽध्याये भाष्य एतदेववक्ति "रुद्राणां शंकरश्चास्मि" अत्र रुद्र-शब्देनानन्त-जीवा इतरेरुद्राः। शंकरशब्देनैकोरुद्रः परमेश्वर-बोधक-इति ।

पशुपतिः—

पशूनां पतिरिति षष्ठी-तत्पुरुषः । पशवः केऽत्र विचारः । हलायुधकोशे पशूनामिति विग्रहं कृत्वा स्थावर-जंगमानां प्राणिमात्रस्य वा पतिः स्वामी प्रभुरिति[4] "लिखितः पशुशब्दार्थे च" संसारिणामात्मेत्युल्लेखः[5] ।

पशुपति-शब्दार्थ प्रकरणे "ब्रह्माद्याः स्थावरान्ताश्च पशवः परिकीर्तितास्तेषां पतिर्महादेवः स्मृतः पशुपतिः श्रुतौ इतिचिन्तामणिः। नेपाले पशुपति र्महादेवः केदारे परमेश्वर इति महालिंगेश्वर-तन्त्रस्योद्धरणं तत्रास्ति। पशु-शब्दश्च अविशेषेण सर्वं पश्यतीतिव्युत्पत्याद‍ृशिर् प्रेक्षणे धातोः "अर्जिदृशि कम्यमिवसीति" 'कुःपश्यादेशश्चेति' सिद्ध्यति । यद्वापश्यन्ति पार्श्वहस्ताभ्यां हिताहितमिति । जावालाद्युपनिषदपि स्फुटोऽयमर्थः । तथा च—

"पशुपतिरहंकाराविष्टः संसारी जीवः स एव पशुः सर्वज्ञः पंचकृत्यसम्पन्नः सर्वेश्वर ईशः पशुपतिः। के पशवः पुनः स उवाच जीवाः पशव उक्ताः तत्पतित्वात् पशुपतिः स पुनस्तं होवाच, कथं तत्पतिरिति स तमुवाच यथा तृणाशिनो विवेकहीना परप्रेष्याः कृष्यादि-कर्मसु नियुक्ता सकलदुःखसहा स्वस्वामिबध्य-

---

१. श्रीमद्भगवद्गीतायाम् १०।२३, २५, ३२
२. तत्रैव १०।४०
३. महीधर भाष्ये, यजुर्वेदे अ० १६।२०
४. हलायुधकोशे, ४२२
५. तत्रैव

माना: गवादय: पशव: यथा तत्स्वामिनइव सर्वज्ञ ईश: पशुपति ।"[1]

शिवपुराणे पशु-पाश शब्दयोरर्थ: अज्ञानप्रभवंदु:खं जडचेतनक्षर-रूपेण कथितस्तत्रापि अयमेवार्थ: समायाति । तथा च—

"पशुपाश-पति-ज्ञानं यल्लब्धव्यं तु मयापुरा ।
तत्रनिष्ठा परा कार्या, पुरुषेण सुखार्थिना ।।१।।
अज्ञानप्रभवं दु:खं ज्ञानेनैव निवर्तते ।
ज्ञानेवस्तु-परिच्छेदो वस्तु च द्विविधं स्मृतम् ।।२।।
अजडं च जडं चैव नियन्तृ च तयोरपि ।
पशु:पाश: पतिश्चेति कथ्यते तत्त्रयं क्रमात् ।।३।।[2]
अक्षरं च क्षर चैव क्षराक्षर-पदं तथा ।
तदेत्त्रितयं भूम्ना कथ्यते तत्त्व-वेदिभि: ।।१।।
अक्षरं पशुरित्युक्त: क्षर: पाश उदाहृत: ।
क्षराक्षरपरं यत्तत्पतिरित्यभिधीयते ।।२।।
प्रकृति: क्षरमित्युक्तं पुरुषोऽक्षर उच्यते ।
ताविमौ प्रेरयत्यन्य:, स पर: परमेश्वर: ।।३।।
अस्ति कश्चिदपर्यन्त-रमणीय-गुणाश्रय: ।
पतिर्विश्वस्य निर्माता, पशुपाश-विमोचन: ।।४।।
अभावे तस्यविश्वस्य, सृष्टिरेषा कथं भवेत् ।
अचेतनत्वादज्ञानादनयो: पशुपाशयो: ।।५।।[3]

एवं पशु-शब्देनाज्ञानिनोजीवा: तत्पतिश्च परमेश्वरो रुद्र इत्यर्थ: । विश्वेश्वरो विश्वम्भरश्च—

योविश्वमीष्टे स विश्वेश्वर: । विश्वस्य जगत ईश्वरोवा । यश्च विश्वं-विभर्ति स विश्वम्भर: । यद्वा योविश्वम् विभर्ति धरति पुष्णाति वास विश्वम्भर: जगदीश्वरस्तथा च मैत्र्युपनिषदि—

"विश्वेश्वर नमस्तुभ्यं विश्वात्मा विश्वक्रीडारति: प्रभु: ।"[4]

अथर्ववेदे—

"विश्वम्भर विश्वेनमाभरसा पाहिस्वाहा ।"[5]

**शंकर:—**

शम्पूर्वकडुकृञ् धातोरचि प्रत्यये निष्पाद्यतेऽय: शं कल्याणं करोति स

१. अष्टाविंशत्युपनिषदि, पृ० ६६
२. शिवपुराणवायवीय संहितायाम् पण्डित पुस्तकालय, काशी, ७।५।१०-१२
३. शिवपुराणवायवीयसंहितायाम् ७।५।१३-१६ तथा ७।६।२-३
४. मैत्र्युपनिषदि ५।१४
५. अथर्ववेदे २।१६।५

शंकरः।"[१]

शंकानां समूहः शंकम् तस्य प्रदाहकः सर्वसंशय-प्रदाहक इत्यर्थः।

महादेवः—

(क) महांश्चासौ देवः। देवेषु महानित्यर्थः।
(ख) महतांदेवः ब्रह्मादि-देवानां देवः।
(ग) सर्वज्ञानं परित्यज्य आत्मज्ञानयोगैश्वर्ये महति महीयते तस्मादुच्यते महादेवः।"[२]
(घ) अत्रैव रंगनाथः तैः क्रीडनकैः कन्दुकादिभिरेव क्रीडतीति महादेवः।
(ङ) महद्भिर्दीव्यतीति महादेवः।
(छ) "देवानां समूहानांच, यच्चास्य विषयो महान्।
यच्चविश्वं मह दस्ति, महादेवस्ततः स्मृतः।।१।।"[३]
(ज) "सर्वान्देवानृषींश्चैव, समेतानसुरैः सह।
अप्येति तेजसादेवः, महादेवस्ततः स्मृतः।।१।।"[४]
(झ) चिज्जडानां तु योद्रष्टा सोऽच्युतो ज्ञान-विग्रहः।
स एवहि महादेवः, स एव हि महान्हरिः।।१।।[५]

वृहदारण्यके च—

"नान्यतोऽस्ति द्रष्टा।"

श्वेताश्वतरोपनिषदि "साक्षी चेता केवलो निर्गुणश्च।"[६]

एवंचास्यान्यदेवापेक्षया महत्त्वं तच्चात्र विभिन्नविरुद्ध-धर्माणां समन्वयः अशिवरूपेऽपि शिवता श्मशानावस्थायामपि प्रसाददातृता। सुखदुःख-द्वन्द्वादिहीनत्वम्। विरुद्ध-धर्माणामेकमात्राश्रयत्वम्। (सर्पमयूर-वृषभसिंह-गंगा-पार्वती-मूषकादीनाम्) शुद्ध-बुद्धनिरंजनत्वम्।।

भवः—

भवतीति भवः तथा चाथर्व वेदे सायणः—

"भवति उत्पद्यतेऽस्मात्सर्व जगत्।।"[७]

---

१. सत्यार्थप्रकाशे, पृ० सं० १२।
२. विष्णु सहस्रनाम शंकरभाष्ये ६५ श्लोके गीता प्रेस गोरखपुर
३. महाभारते अनुशासन, पृ० १६१।८
४. वायुपुराणे १०।६
५. वृहदारण्यकोपनिषदि ३।७।२३
६. श्वेताश्वतरोपनिषदि ६।११
७. अथर्ववेदे ४।२८।१

**शर्वः**—शृणातीति शर्वः तथा च विष्णु-सहस्र-नाम्नाम् शांकरभाष्ये—
"शृणाति संहार-समये संहरति संहारयति सकलाः प्रजा इति।"[1]

**सर्वः**—यतोऽयं असतः सतश्च प्रभवोऽप्ययश्चातः सर्वः तथा च—

"असतश्च सतश्चैव, सर्वप्रभवाप्ययात्।
सर्वस्य सर्वदाज्ञानात्, सर्वमेनं प्रचक्षते ।।१।।[2]

एवंचैभिः प्रमुख-नामभिरपि विशेष-रूपेण स्तोत्रा-गतैर्भगवान् शिवः सर्वज्ञः परात्परो निष्कलः सृष्टिपालनप्रलयहेतुः योगीश्वरः गुणानामाधारः सर्वाधारः निराधारः सच्चिदानन्द इति।

## ३. माहात्म्यम्

महिम्नः पारं ते परम विदुषो यद्यसदृशी।
स्तुतिर्ब्रह्मादीनामपि तदवसन्नास्त्वयिगिरः ।
अथावाच्यः सर्वः स्वमतिपरिणामावधिगृणन् ।
ममाप्येषः स्तोत्रे हर निरपवादः परिकरः ।।

भगवतः शिवस्य महिमानं प्रतिपादयितुं गन्धर्वराजोऽप्यसमर्थ आसीत् माहात्म्यविषये इदं कथनं नासत्यपदवीमवगाहते। जगति यत्किंचिदपि भवति तत्सर्वं तदिच्छयैव भवति। तथा च श्रीमद्भागवते—

"ब्रह्मादयो यत्कृत-सेतुपालाः, यत्कारणं विश्वमिदं च माया।
आज्ञाकरी तस्य पिशाच-चर्या, अहोविभूम्नश्चरितं विडम्बनम् ।।"[3]

देवानां प्रथमोऽयं जनान्शुभकर्मणा संयुनक्ति। विश्वाधिपोमहर्षिश्च तथा महानारायणोपनिषदि—

यो देवानां प्रथमं पुरस्तात्, विश्वाधिपोरुद्रोमहर्षिः।
हिरण्य-गर्भंपश्यत जायमानः, सनोदेवः शुभयास्मृत्यासंयुनक्तु ।।[4]

तत्र तत्र स्तोत्रे दिग्रक्षणेऽस्य रक्षार्थमभ्यर्थना दृश्यते। तथा च शिवकवचे—

कुठारवेदांकुशपाशशूलकपाल-ढक्काक्षगुणान्दधानः।
चतुर्मुखः नीलमुखस्त्रिनेत्रः, पायादघोरो दिशिदक्षिणस्याम् ।।[5]

अग्निपुराणेशिव-रात्रिव्रतप्रसंगे नरकार्णवतारकः प्राणादिदायकश्च कथित-

---

१. विष्णु सहस्रनाम शंकर भाष्ये, १७ श्लोके
२. महाभारते, उ० पर्व ७०।११
३. श्रीमद्भागवतमहापुराणे (मूलमात्रम्) २०१६, गीता प्रेस गोरखपुर, ३।१४।२८
४. महानारायणोपनिषदि (विमलानन्द मैसूर), पृ० १६१
५. शिवकवचस्तोत्रे, १२

स्तथा च—

माघफाल्गुनयोर्मध्ये कृष्णा यातु चतुर्दशी ।
कामयुक्ता तु सोपोष्या कुर्वन्जागरणं व्रती ॥१॥
आवाहयाम्यहं शम्भुं भुक्ति-मुक्तिप्रदायकम् ।
नरकार्णवोत्तारनावं शिवनमोऽस्तुते ॥२॥[1]

भगवान्शिवः सर्वशक्त्यैकनिदानभूतोऽतस्तदारधनयासर्वसम्प्रत्प्राप्तिः तथा च ब्रह्म-पुराणे—

सर्वशक्त्यैकदमनं निधानं सर्व-सम्पदाम् ।
स तु कर्ता महादेवः संहर्ता समहेश्वरः ॥१॥[2]

ब्रह्मवैवर्ते भगवान्विष्णुः सुरानुपदिदेश यन्महेश्वरात्प्रियः नान्योऽस्ति ये च महेश्वर मवमन्यन्ते ते काल-सूत्रेनरके पच्यन्ते । सकृदपि शिवाराधनया नर आकल्पान्तं ज्ञानी मुक्तवांश्च भवति । तथा च—

मत्सेवां कुरु सर्वेश सर्व-सर्वविदांवरः ।
अद्यप्रभृतिज्ञानेन तेजसा वयसा शिवः ॥१॥
त्वत्परोनास्तिमेप्रेयास्त्वं मदीयात्मनः परः ।
येत्वांनिन्दन्ति, पापिष्ठाः, ज्ञानहीना विचेतसः ॥२॥
पच्यन्तिकाल-सूत्रेण, यावच्चन्द्रदिवाकरौ ।
कृत्वालिंगं सकृत्पूज्य, वसेत्कल्पायुतं दिवि ॥३॥
ज्ञानवान्मुक्तवान्साधुः शिवलिंगार्चनाद् भवेत् ।
शिवलिंगार्चनादन्यत्, न तीर्थं तीर्थमेव तत् ॥४॥[3]

लिंगे च शिव-भक्ति वैशिष्ट्यमाह—

अन्यभक्तसहस्रेभ्यो, विष्णु-भक्तो विशिष्यते ।
विष्णुभक्तसहस्रेभ्यो, रुद्र-भक्तो विशिष्यते ॥१॥
रुद्रभक्तात्परतरो, नास्तिलोके न संशयः ।
सर्वावस्थां गतो वापि, युक्तोऽपि सर्व-पातकैः ॥२॥
शिव-ध्यानान्नसन्देहः, यथारुद्रस्तथा स्वयम् ।
हत्वा भीत्वाचभूतानि, भुक्त्वा चान्यतोऽपि वा ॥३॥
शिवमेकंसकृत्स्मृत्वा, सर्वपापैः प्रमुच्यते ।[4]

सौरपुराणेऽपि लिंगार्चनादधिकं पुरायं नकिंचिद्भुवनत्रये उक्तम् सर्व-तीर्थानां यानि पुरायानि च शिवलिंगार्चनसाम्यं नार्हन्ति ।

---

१. अग्निपुराणे १६३।१,२,३, मनसुखराय मोर, ५ क्लाइव रोड कलकत्ता, २०१४
२. ब्रह्मपुराणे १२२।३०
३. ब्रह्मवैवर्ते १।६।२६, २९, ३२, ४६
४. लिंगपुराणे २।४।२०, २१ तथा ५४ अध्याये ३४, ३५

अग्निपुराणेऽपि लिंगार्चनस्य भुक्ति-मुक्ति-दायकत्वमुक्तम् । तथा च—

यदों नमः शिवायेति, एतावत्परमं पदम् ।
अनेन पूजयेल्लिंगं, लिंगं यस्मिन्स्थितः शिवः ।।१।।
लिंगार्चनाद्भुक्तिमुक्ती, यावज्जीवमतोत्यजेत् ।
वरंप्राणपरित्यागो, भुंजीतापूज्य नैव तम् ।।२।।
सर्वयज्ञतपोदानतीर्थ-वेदेषु यत्फलम् ।
तत्फलं कोटि-गुणितं स्थाप्यलिंगं लभेन्नरः ।।३।।
त्रिसन्ध्यं योर्चयेल्लिंगं कृत्वाबिल्वेनपत्रितम् ।
शतैकादधिकं यावत्, कुलमुद्धृत्य नाकभाक् ।।४।।[१]

गरुडपुराणेऽपि शान्त्यर्थं रुद्रस्य पूजोक्ताऽत्रसप्तमाध्याये द्रष्टव्यः नीलमतपुराणेऽपि भगवान् शिवः सर्वज्ञः सर्वद्रष्टा चेति प्रतिपाद्याऽस्यैवेच्छया जगदिदं विवर्तीति । तथा चोक्तम्—

एष सर्वेश्वरः शक्रः एष कारण-कारणम् ।
एष चाचिन्त्यमहिम एष ब्रह्म सनातनः ।।१।।
स एष सर्व-कर्ता च सर्वज्ञश्च महेश्वरः ।
यदिच्छया जगदिदं वर्वति सचराचरम् ।।२।।[२]

ब्रह्मपुराणे रामेश्वर-तीर्थ-प्रसंगेऽयं सर्व-काम-फलप्रद उक्तः । तथा च तत्रैव--

आस्ते यत्र महादेवः तीरे नदनदी-पतेः ।
रामेश्वर इतिख्यातः, सर्वकामफलप्रदः ।।१।।
राजसूय-फलं सम्यक्, वाजिमेघफलं तथा ।
प्राप्नुवन्ति महात्मानः संसिद्धिपरमां तथा ।।२।।
शांकरं योगमास्थाय, ततोमोक्षं व्रजन्ति ते ।
आत्मतीर्थमिदंख्यातं, भुक्तिमुक्ति-प्रदंनृणाम् ।।३।।
तस्य प्रभावं वक्ष्यामि, यत्र ज्ञानेश्वरः शिवः ।
नास्ति लिंगार्चनात्पुरायमधिकंभुवन-त्रये ।।४।।[३]

अन्यत्र च—

नास्ति लिंगार्चनात् पुरायं अधिकं भुवनत्रये ।
लिंगेऽर्चितेऽखिलं विश्वमर्चितं स्यान्न संशयः ।।१।।
मायया मोहितात्मानो न जानन्ति महेश्वरम् ।
पृथिव्यां यानि तीर्थानि, पुरायान्यायतनानि च ।।२।।

---

१. अग्निपुराणे ३२७।१०, १२, १४, १५, मनसुखराय मोर, क्लाइव रोड, कलकत्ता
२. नीलमतपुराणे ४।१३, ४४, ४५
३. ब्रह्मपुराणे २८।५६, ५६, ६८ तथा ११६।१

शिव-लिंगे वसन्त्येव, तानि सर्वाणि नारद।
शिवभक्तान्वर्जयित्वा सर्वेषां शासको यमः ।।३।।[1]

भगवन्तं शिवमेव ज्ञात्वा नरोमृत्युं तरति नान्यथा। तथा च श्वेताश्वतरोपनिषदि—

वेदाहमेतम्पुरुषं महान्तमादित्यवर्णंतमसः परस्तात्।
तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय ।।१।।[2]

भगवान् शिवोऽशिववेषेणापि शिवः। तस्य वैषम्यपूर्णं वेषं दृष्ट्वा जनाः विस्मयमधिगच्छन्ति। स्वयमकिंचनोऽपि सम्पदां प्रभवः श्मशानवास्यपि त्रिलोकनाथः। भीमोऽपि शिव इतिकथ्यते तथा च कुमार-सम्भवे—

अकिंचनः सन्प्रभवः स सम्पदां, त्रिलोकनाथः पितृसद्मगोचरः।
सभीमरूप शिव इत्युदीर्यते, न सन्ति याथार्थ्य-विदः कपालिनः ।।[3]

एवं च भगवान् भुक्ति-मुक्तिदायकोऽस्याराधनया नरोरोगशोक-मोहादिमुक्तः परमामैहिकीं पारलौकिकीं च श्रियं विन्दति। अस्य गुणान्विमातुं न कोऽपि प्रभुः। तथा च महाभारते—

अशक्तोऽहंगुणान्वक्तुं महादेवस्य धीमतः।
योहिसर्वगतोदेवः न च सर्वत्रदृश्यते ।।१।।
नास्ति शर्वसमो देवो नास्ति शक्ति-समागतिः।[4]
एवं च स्पष्टमेव सिद्धं यत् शिव-समोनास्ति।

अनुष्ठान-परायणा ऋग्वेदीय-मृत्युंजय-जपं कृत्वाऽस्याध्यान् रोगान् अवरोद्धुं विनाशितुं च पारयन्ति। तच् च मन्त्र—

त्र्यम्बकं यजामहे, सुगन्धिं पुष्टि-वर्धनम्।
उर्वारुकमिव बन्धनान्मृत्योमुक्षीय मामृतात् ।।१।।[5]

भगवान् शिव एक एव जगतः सर्गस्थिति-प्रत्यवहारादिकाः क्रियाः विधत्ते तथा च भागवते—

ददृशुः शिवमासीनंत्यक्तामर्ष-मिवान्तकम्।
त्वमेव भगवन्नेतत् शिवशक्त्योः स्वरूपयोः।
विश्वं सृजसि पास्यत्सि, क्रीडन्नूर्ण-पटो यथा।।२।।[6]

सर्गादि कार्याण्येवास्याम्बकानि शिव एव त्र्यम्बकोनान्यः तथा च

---

१. सोर पुराणे ६४।३०, ३१, ३४
२. श्वेताश्वतरोपनिषदि ३।८
३. कुमारसम्भवे ५।७७। पं० पुस्तकालय काशी १९५९, सम्पूर्ण हिन्दी टीका
४. महाभारते अनु०, प० १४।३ तथा ४६।११
५. ऋग्वेदे (संहिता) ७।५।३।१४
६. श्रीमद्भागवतेमूलमात्रे ४।६।३३ तथा ४३, गीता प्रेस, गोरखपुर २०१८

कालिदासः—

हरिर्यथैकः पुरुषोत्तमः स्मृतः, महेश्वरस्त्र्यम्बक एव नापरः ।
तथा विदुर्मां मुनयः शत-क्रतुं । द्वितीय-गामी नहि शब्द एषनः ।।१।।[1]

परम-कारुणिक एव दुःखत्रयाभिघाते समर्थः ऐहिकामुष्मिकश्रेयोऽवाप्तयेऽस्यार्चाक्रियते । तत्रापिविद्यार्थप्राप्तये तु विशेषेण, महर्षिणा पाणिनिनाऽपि शिवादेवज्ञानमवाप्तम् । सनकादयश्च योगज्ञानमवापुः । तथा च—

नृत्यावसाने नटराज-राजो ननाद ढक्काः नव पंचवारम् ।
उद्धर्तु-कामः सनकादि सिद्धानेतद्विमर्शे शिवसूत्रजालम् ।।१।।[2]

भागवते चास्य विद्या-प्रदत्वमुक्तम् । तथा च—

'देवीं मायां श्रीकामः तेजस्कामो विभावसुम् ।
वसुकामो वसून्रुद्रान् वीर्य-कामोऽथवीर्यवान् ।।१।।
यज्ञं यजेद्यशस्कामः कोश-कामः प्रचेतसम् ।
विद्या-कामस्तु गिरीशं, दाम्पत्यार्थं उमां सतीम् ।।२।।[3]

महानारायणे—"ईशानः सर्वविद्यानामीश्वरः सर्वभूतानामिति ।"[4]

## ४. वैदिक-स्वरूपम्

निरुक्ते अथातो मध्यस्थानादेवताः इति प्रकारणे रुद्रो मध्य-स्थानीय-देवत्वेन-निर्दिष्टः ।[5] तत्र नाम्नो निर्वचने स रुद्रः प्रजापतिः स्वपितरं वाण-विद्धमनुशोचन्नरुदीदिति तस्य रुद्रत्वम् । तथा च—

"सकिल स्वपितरं प्रजापतिमिषुणा विध्यन्तमशोचन् अरुदत् तद्रुद्रस्य रुद्रत्यम् । यदरोदीत्तत्तस्य रुद्रत्वम् ।"[6]

श्वेताश्वतरोपनिषदि रुद्र एक एव जनान्सृजति पाति च तथा च तत्रैव—

"एकोहिरुद्रो नद्वितीयाय तस्थुर्य इमांल्लोकान् ईशत ईशनीमिः प्रत्यङ्-जनांस्तिष्ठति संचुकोचान्तकाले, संसृज्य विश्वा भुवनानि गोप्ता ।"[7]

महानारायणोपनिषदि च—

"यो देवानां प्रथमं पुरस्तात, विश्वाधिपोरुद्रोमहर्षिः हिरण्यगर्भोऽपश्यत् जायमानः, सनो देवः शुभया स्मृत्या संयुनक्तु ।"[8]

---

१. रघुवंशे ३।४९
२. नन्दिकेश्वर काशिकायाम्, १
३. श्रीमद्भागवते, मूलमात्रम् २।३।३ तथा ७
४. महानारायणोपनिषदि १८।१।२।३।३ तथा ७
५. निरुक्तेदैवतकाण्डे १०।१।१
६. तत्रैव १०।१।६
७. श्वेताश्वतरोषनिदि ३।२
८. महानारायणोपनिषदि १२।१२

यजुर्वेदे च रुद्रा असंख्याता उक्तास्तथा च—

असंख्याताः सहस्राणि ये रुद्रा अधिभूम्याम् ।[1]

एकत्ववहुत्वयोः परिहारस्तु, निरुक्त इत्थं कृतः ।

'तासांमहाभाग्यादेकैकस्या अपिबहूनिनाम-धेयानि भवन्ति तथा…

तत्र संस्थानैकत्वम् संभोगैकत्वं चोपेक्षितव्यम् ।"[2]

एवं चात्र संख्यायाः विभिन्नत्वेऽपि स्थानैकत्वेन रुद्र एक एव तथा च निरुक्तभाष्येऽपि—

"एक एव रुद्रोऽवतस्थे न द्वितीयो रणे निघ्नन् पृतनासु शत्रून् संसृज्यविश्वा-भुवनानि गोप्ता…।"[3]

अथर्ववेदेऽपि रुद्र एक एव धातृ-विधातृ-वरुणादि-रूपेण कार्यं करोति । तथा च—

स धाता स विधाता स वायुर्नभ उच्छ्रितम्…सोर्यमा स वरुणः सरुद्रः स महादेवः । तमिदं निगतं-सहः स एष एक एव एकवृदेक एवं ए तस्तिन्देवा एक वृतोभवन्ति ।[4]

एक एव रुद्रः सर्वव्यापकस्तथा च तत्रैव "यो अग्नोरुद्रोयोऽप्सु योऽप्स्वन्तर्य ओषधीर्वीरुध आविवेश य इमा विश्वाभुवनानि चक्लृपेतस्मैरुद्राय नमोऽस्त्व-ग्नये ।"[5]

अनेन मन्त्रेण रुद्रस्य सर्व-व्यापकत्वं सिद्ध्यति । अत्र रुद्रस्यैक-वचनान्ते-नैव निदेशेस्तथा च तत्रैव—

तव चतस्रः प्रदिशस्तव द्यौस्तव पृथिवी तवैवेदमुर्वन्तरिक्षम् । तवेदं सर्वमात्मन्वद् यत्प्राणत पृथिवीमनु ।[6]

महानारायणोपनिषदि च—सर्वतः सर्व-रूपेण रुद्रस्तिष्ठति ।

सर्वतः सर्व-शर्व-सर्वेभ्यः नमस्ते अस्तु रुद्ररूपेभ्यः ।
रुद्राय नमः कालाय नमः कालविकरणाय नम इति ॥१॥
सर्वो वैरुद्रस्तस्मै रुद्राय नमो नमः पुरुषो वैरुद्रः ।
सन्महो नमो नमः विश्वंभूतं भुवनं चित्रंबहुधा वातं
जायमानं च यत् । सर्वोह्येष रुद्राय नमोऽस्तु ।[7]

---

१. यजुर्वेदे १६।५४
२. यजुर्वेदे, दैवतकाण्डे, ७।२।५
३. तत्रैव १।१४
४. अथर्ववेदे १३।४।१।३-४,१२ तथा १३।४।२
५. तत्रैव ७।९२।१
६. अथर्ववेदे ११।२।१०
७. महानारायणोपनिषदि ८।१। पृ० २०३ । तथा २०७ तथा २१५

स च रुद्रः जगत्पिता तथा चाथर्ववेदे ।

भुवनस्य पितरं गीभिराभी रुद्र दिवावर्धयारुद्रमामौ वृहन्तमृष्वमजरं सुषुम्नमृध्यग्घुवेव कवि-नैषितासः[१] अन्यच्च—

स्थिरेभिरुग्रेपुरुरूप उग्रोबभ्रुः शुक्रेभिः पिपिशेहिरण्यो

ईशानादस्यविश्वस्य मूर्तिर्नः वो उपोषदुदु-सूर्यम् ।[२]

अयं दृढैरंगैर्युक्तः प्रवलस्तेजस्वी रुद्रः शुद्धतेजोभिः शोभते । अयमस्या सृष्टेः स्वामी । अस्य शक्तिर्दिव्या "भुवनस्य ईशानात् रुद्रात् असूर्य न पौषदिति" अनेनतस्य मूलरूपस्य ज्ञानं भवति । "भुवनस्य पितारुद्रः भुवनस्येशान रुद्रः ।"[३] महानारायणोपनिषदि—

कदुद्राय प्रचेतसे मीढुसष्टमायत व्यसेवोचङ्शतम् हृदे सर्वो ह्येषरुद्रस्तस्मैरुद्राय नमोऽस्तु ।[४]

प्रचेतसे प्रकृष्टज्ञानाय मीढुष्टमाय लोक-जनकाय तव्यसे बहु-शक्तियुक्तया

मायातमकमिदं जगत्प्रकृतिः महेश्वरश्चतदध्यक्षः तदवयवभूतैरिदं जगत् व्याप्तम् । तथा चोपनिषदि ।

मायां तु प्रकृतिं विद्यात्, मायिनं तु महेश्वरम् ।
तस्यावयव-संभूतैः व्याप्तं सर्वमिदं जगत् ।।[५]

जगत्पिता चायमेव—

तमीश्वराणां परमं महेश्वरं, तंदेवतानां परमं च दैवतम् ।
पतिं पतीनां परमं परस्तात्, विदाम देवं भुवनेशमीड्यम् ।।[६]

अग्निरपिरुद्रस्तथा चर्क् संहितायां, 'अग्निरेव रुद्रः'[७] जगत् पितृत्वं चास्य

भुवनस्यपितरं गीर्भिराभिरुद्रं दिवावर्धयारुद्रभवतौ वहन्तं ऋष्वमजरं सुषुम्नम्हमृव ह्युवेमकविनेषितासः ।।[८]

अनेकरुद्रेषु व्यापको रुद्र एक एव—तथा च—

(क) "रुद्रं रुद्रेषु रुद्रियं हवामहे ।"[९]

(ख) "शंनो रुद्रो रुद्रेभिर्जलाषिः ।"[१०]

---

१. ऋग्वेदे ६।४६।१०
२. तत्रैव २।३३।६
३. तत्रैव ६।४६।१०
४. महानारायणोपनिषदि, २५।१पृ० २१७ ऋग्वेदेचार्यं १।४३।१
५. श्वेताश्वतरोपनिषदि ४।१०
६. तत्रैव, ६।७
७. ऋक्संहितायाम् १।२७।१०
८. तत्रैव ६।४६।१०
९. तत्रैव १०।६४।८
१०. तत्रैव ७।३५।६

(ग) "शंनो रुद्रेभिः देवो मृडयातिनः ।।[1]

(घ) "रुद्रेभिराहवावहन्तम् ।।"[2]

अनेकलघुरुद्रानेकोमहान् रुद्रः प्रेरयति । सनातन स्थानेषु चेतयते । यत्र विज्ञानिनः स्वमनांसि विशिष्ट रूपेणधारयन्ति । तथा चर्कसंहितायाम्—

तद्रुद्रस्य चेतसि यह्वै पत्नेषु धामसु ।
मनोयत्र वितद्दधुर्विचेतसः ।[3]

भगवतः शिवस्यैव निश्श्वसिताः वेदास्तथा च तत्रैव सायणः—

यस्य निश्श्वसितं वेदाः यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे, विद्यांतीर्थं महेश्वरम् ।।१।।[4]

जाबाल्युपनिषदि रुद्रः पशुपतित्वेनारव्यातः । तत्र संसारी जीवः पशुस्तत्पतिश्च शिवः—पशुपति-शब्दार्थे कथितः ।

पशुपतिरहंकाराविष्टो संसारीजीवः
...ईशः पशुपतिः कथ्यते ।[5]

शुक्ल यजुर्वेदे चायं हरितं धनुर्विभर्ति तत् च पिनाकम् तथा च—

धनुर्विभर्षि हरितं सहस्रघ्नं शतवृघम् शिखण्डिनम् पिनाकौऽस्य धनुः ।[6]

यावदादित्यस्तपति यावदस्तं गच्छति तावता चतुर्दिक्षु अस्य राज्यम् । तथा च छान्दोग्ये—

"स यावदादित्यः पुरस्तादु देतापश्चादस्तमेता द्विस्तावद्दक्षिणव उदेतौत्तरतोऽस्तमेता रुद्राणामेतावदाधिपत्यं स्वाराज्यं पर्येतेति ।"[7]

शतपथे चास्य नामतु शर्व-भवादयः शब्दा उदीरिताः ।
अग्निर्वै स देवः तस्यै-तानि नामानि शर्व इति ।
यथा प्राच्याआचक्षते, भव इति बाहीकाः, पशूनांपती—
रुद्रोग्निरिति तान्यस्य शान्तान्येचेतराणि नामानीति ।[8]

कैवल्योपनिषद्ययमुमासहायः त्रिलोचनो नीलकण्ठः चिदानन्दरूपो विभुश्चोक्तः ।

---

१. तत्रैव १०।६६।३
२. तत्रैव ७।१०।४
३. ऋग्वेदे ६।६६।३
४. तत्रैव, प्रथम मन्त्रे सायणः
५. अष्टाविंशत्युपनिषदि, श्री द्वारिकादास शास्त्री १९६५, पृ० ३६५
६. शुक्ल यजुर्वेदे १।२।१२ तथा १६।५१
७. अष्टाविंशत्युपनिषदि, पृ० ६४, छान्दोग्ये ३।७।४
८. शतपथे १।६।३८

अचिन्त्यमव्यक्तमनन्तरूपं शिवं प्रशान्तममृतं ब्रह्मयोनिं—
तमादिमध्यान्त-विहीनमेकं, विभुं चिदानन्दमरुपमद्भुतम् ।।१।।
उमा-सहायं परमेश्वरं विभुं, त्रिलोचनं नील-कण्ठं प्रशान्तम्,
ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षि-तमसः परस्तात् ।[१]

इत्थं चर्क्-यजुः-सामाथर्ववेदेषु शतपथादिब्राह्मणग्रन्थेषु जाबालिकैवल्य श्वेताश्वतर-बृहदारण्यक-छान्दोग्यादिषूपनिषत्सुरुद्रस्य निर्देशः। तेनानेक-ज्ञातव्य-विषयाः परिचीयन्ते ऋग्वेदे सूक्तत्रयं, प्रथम मण्डलस्य ११४शं, द्वितीयस्य ३३तम् सप्तमस्य ४६ तमम् रुद्रविषयकाणि । अन्यदेवैस्सहाऽस्यनामानि प्रायः पंचाशद्-वारम् । यजुर्वेदस्यैकोऽध्यायः पूर्णस्तैत्तरीयसंहितायाः षोडश, अथर्वण एकादशमम् ऋक्संहितायामयं हस्तवान् शरीरमस्य बलिष्ठ मोष्ठे रमणीये (सुशिप्रः) शिरसि जटाजूटः । कपर्दीति च कथ्यते ।[२]

इमा रुद्रायतवसेकपर्दिने क्षयद्वीराय प्रभरामहेमतीः
यथा शमसा द्विपदे, चतुष्पदे विश्वं पुष्टं ग्रामेऽस्मिन्ननातुरमिति ।[३]

वर्णेनबभ्रुराकृत्या दीप्तः पुरुरूपांगानि दृढानिस्वर्णभूषणभूषितः रथी । यजुर्वेदस्यरुद्राध्यायेऽथर्ववेदस्य रुद्र-सूक्ते च वर्णनम् तत्र रुद्रस्य मुखं चक्षुःत्वगुद-रादीनामुल्लेखः ।४ अयं सहस्राक्षो शितिकण्ठो जटाजूटधारी व्युप्तकेशः हरितकेश उष्णीषीबभ्रुशश्च ।

तथा च—

नमः शर्वाय च पशुपतये च नमो नीलग्रीवाय च शितिकण्ठाय च
नमः कपर्दिने च व्युप्तकेशाय च, नमो नीलग्रीवाय सहस्राक्षाय च ।
नमोगिरीशाय शिपि-विष्टाय च, नमोमीढुष्टभाय चेषुमते च ।।[५]

रुद्राध्यायानुसारमयं बलवान् योद्धाथर्वणेऽस्य धनुः सहस्रघ्नम् शतशः शैरस्सज्जितम् । तथा च—

धनुर्विभर्तिहरितं हिरण्यं सहस्रघ्निशतवधं शिखण्डिनम् ।[६]

इषुधिं विभर्ति, हस्तेऽसिम् निगंषं च धारयति । अस्य वज्रं सृक्, शरी-रस्य रक्षायै साधनान्यनेकानिसन्ति शिरस्त्राणं च धारयति तथा च—

तस्कराणां पतये नमोनमः सृकाविभ्योजिघांसद्भ्योमुष्णतां पतये नमः ।
नमोऽसिमद्भ्यो नक्तंचरद्भ्यो विकृन्तानां पतय नमो नमः ।।

---

१. अष्टाविंशत्युपनिषदि ४६६ पृष्टे कैवल्योपनिषदि ६।१।६-७
२. ऋग्वेदे २।३३।३
३. तत्रैव १।११४।१
४. अथर्ववेदे ११।२।५-६
५. यजुर्वेदे शतरुद्रीये १६।२६ तथा तत्रैव १८ तथा २२
६. तत्रैव १६।५१ अथर्ववेदे १।२।१२

नमो विल्विने च कवचिने च नमोवर्मिणे च वरुथिनेनमः।
श्रुताय च श्रुत-सेनाय च नमो दुन्दुभाय चाहनन्याय च।
विज्यं धनुकपर्दिने विशल्योवाणवान् उत्।
अन्ने शन्नस्य या इषव, आभुरस्य निषंगधिः॥[1]

ऋक्संहितायामपि वलवान् क्रूरश्चायमरुषोवराहः
दिवोवराहमरुषं कर्पदिनेत्वेषंरूपं नमसानिह्वयामहे।
हस्तेविभ्रद्भेषजावार्याणि शर्मवर्मर्छदिरस्मभ्यंसंयतम्॥[2]

अयंवृषभस्तरुणः शूराणामधिपतिः स्वसामर्थ्येन पर्वतेषु रुद्धाः नदीः प्रवाहयति शत्रून् शरैः च्छिन्नत्ति। अयमुप-कारी।अतएव शिवपदेनाभिधीयते। मरुतां पिता तथा च —

इदं पित्रे मरुतामुच्यते वचः स्वादो स्वादीयो रुद्राय वर्धनम्—
रास्वाचनो अमृतमर्तभोजर्नतमने तोकायतनयाय मृड।[3]

रुद्राध्याये-भवशर्व-पशुपति-भीमोग्र-शब्दानां प्रयोगोऽस्मै जातः विश्वस्मिन्नास्ति तत्स्थानं यत्रायं नास्ति। समग्रपदार्थानांस्वामी पशुपतेरर्थस्तु प्रागेव लिखितः।

भवोशर्वोमृतं माभियातं भूतपतीपशुपती नमो वाम्।
प्रतिहितामायतां माविस्रष्टं मा नोहिंसिष्ट द्विपदो मा चतुष्पदः,[4]
योऽग्नौरुद्रोऽथ अप्स्वन्तः, य औषधीर्वीरुध आविवेश।
य इमा विश्वा-भुवनानि, चाक्लृपेतस्मैरुद्राय नमो अस्त्वग्नये॥[5]

ब्राह्मणकालेऽस्य महत्त्वमधिकमवर्धत। एतरेयब्राह्मणे प्रजापते र्दुहितुः सहगमनप्रसंगे रुद्रोत्पत्तौ "एषदेवो भवेत्।"[6] इतिवाक्ये सम्माननीय शब्द-प्रयोगोऽभवत्।

उपनिषत्सुछान्दोग्ये ३।७।४ वृहदारण्यके ३।९।४ मैत्र्यां ६।५ महानारायणोपनिषदि अनेकधानृसिहंतापिन्यां १।२ श्वेताश्वतरोपनिषदि ३।२।४ प्रकरणेऽस्य वैभवोवर्णितः।

पाश्चात्य-वेदानुशालिनः कीथ-बेवरश्रोदर-प्रभृतयो मनीषिणः रुद्रं मृतात्म प्रधानव्यक्तित्वेन स्वीकुर्वन्ति। परंत्वत्र कल्पनाया एक विशेषरूपेणोपयोगः।

वस्तुतस्तु रुद्रोऽग्नेः प्रतीकः। अग्निरुध्वशिखोऽत एव रुद्रस्योर्ध्वलिंग-

---

१. यजुर्वेदे १६।२१।३५ तथा १०
२. ऋग्वेदे १।११४।५
३. ऋग्वेदे १।११४।६
४. अथर्ववेदे संस्कृति संस्थान बरेली, १९६२, पृ० ५७२, का०११।२।१
५. तत्रैव ७।८३
६. शतपथे ३।१३।९

तोक्ता । अग्निर्वेद्यांज्वलति शिवलिंगोऽपि जलधारायाम् स्थाप्यते । अग्नौघृता-हुतयोदीयन्ते शिवे जलधाराभिषेकः क्रियते तथा चऋंसंहितायां "त्वमग्ने रुद्रो[१] ऽथर्ववेदे च" "तस्मैरुद्राय नमोऽस्त्वग्नेय"[२] शतपथे च—

अग्निर्वैरुद्रः[३] अग्निर्वैस देव···शान्ततमम् ।[४]

पूर्व निर्दिष्टोमन्त्रः—

शुक्ल-यजुर्वेदे एकस्याएव देवतायाः पृथक् पृथक् नामरूपेणाग्निरशनिः पशुपतिः भवः शर्वः ईशानोमहादेव उग्रा आदयः शब्दा प्रयुक्ताः । शतपथेऽशने रर्थे विद्युत् । एवं च पृथ्वीतलेऽग्निरूपेण योरुद्रः स एवाकाशे मेघान्तर्द्योतमाना विद्युत् । अथर्वसंहितायां रुद्रस्य जगत् लेलिहानस्य जिह्वाया वर्णनम् ।

अग्निः हृदयेनाशर्नि हृदयाग्रेण पशु-पर्ति
कृत्स्नहृदयेनभवं यवनाशर्वं मतस्नाभ्यामीशानं
मन्युना महादेवमन्त पर्शव्येनोग्रं देवं वनिष्ठुना,
वसिष्ठहनुः शिगीनि कोश्याभ्याम् ।[५]

सहस्राक्षमतिपरुषं पुरस्तात् रुद्रमस्यन्तं बहुधाविपश्चितम् जिह्वयेध मानम् ।[६]

तथा च रुद्रस्य पूर्ववर्णितप्रसंगतोऽस्य च मेलनेन भयानकोऽपि सः भवतानां त्राता भिषक्तमः । रूपेण वैद्यः जलाषः शक्तिदायी जलाषभेषजश्चास्ति ।

क्व स्यतेरुद्र मृडयाकुर्हस्ते, यो अस्ति भेषजो जलाषः ।।[७]

अधुनापरमेकं प्रसंगमुद्धृत्य समाप्यत एष प्रसंगः ।

परिवो हेतीरुद्रस्य, वृज्याः, परित्वेषस्य दुर्मतिर्महीगात्
अवस्थिरा मघवद्भ्यस्तनुष्वमीष्वस्तोकायतनयोय मृड ।।[८]

पौराणिकम् (स्तोत्रप्रोक्तम्)

वेदमूलकत्वादार्य-धर्माणाम् वेदानां प्राचीनत्वात् च वेदेषु शिवस्य स्वरूप-मभिधायेदानीं स्तोत्र-साहित्ये विशेषेण सामान्यतश्च लोकिकसाहित्ये तत्स्वरूपं निरुप्यते—लौकिकसाहित्येऽपि शिवस्य वर्णश्रूति-मूलकमेव स्फुटीक्रियते—क्वचिद-भदोऽपि—

---

१. ऋक्संहितायाम् २।१।६
२. अथर्ववेदे ७।८३
३. शतपथे ३।१।३
४. तत्रैव १।७।३।८
५. शुक्ल यजुर्वेदे सातवलेकरसम्पादित मूलमात्रे १९८४। अध्याय ३९,८
६. अथर्ववेदे ११.२।१७
७. ऋग्वेदे २।३३।७
८. तत्रैव २।३३।१४

एषते रुद्रभागः सहस्वस्राम्बिकयातेजुषस्वस्वाहा,
एषते रुद्रभाग आखुस्ते पशुः ।[1]

अत्राम्बिका भगिनी रूपेण कथिता । एवमेवाखुर्गणपतेः पशुः । रुद्रस्य भगवतः शर्वभवेशानमहेश्वरादीनि नामानिसन्ति । भगवतः शिवस्य रूपद्वयम् प्रलय काले संहार-कर्तृ रूपं रुद्र-शब्देनाभिधीयते । सर्गादि परं रूपं च शिव-शब्देन । तथा च वायु-पुराणे—

लोकधात्रीत्वियंभूमिः पादौ सज्जन-सेविनौ ।
सर्वेषां सिद्धयोगानामधिष्ठानं तवोदरम् ।।१।।
मध्येऽन्तरिक्षंविस्तीर्णं तारागण-विभूषितम् ।
तारापथ इवाभाति, श्रीमान्हारस्तवोरसि ।।२।।
दिशोदशभुजास्तेवैकेयूरांगद-भूषिताः ।
विस्तीर्णपरिणाहाश्च, नीलाम्बुद-चयोपमः ।।३।।[2]

इयं भूमिर्भगवतः शिवस्य पदद्वयं सिद्धयोगानामाश्रय-भूतमन्तरिक्षंतस्य हृदयं तारपथश्च हार इव दश दिशस्ते (शिवस्य) दशभुजाः ।

भगवान् शिवः परब्रह्मरूपः स्वशक्त्या सर्गादिसर्वाः क्रियाः विधत्ते तथा च भागवते प्रजापति-कृत-शिवस्तोत्रे ।

त्वं ब्रह्म परमं गुह्यं सदसद्भावभावनः ।
नाना-शक्तिभिराभातस्त्वमात्मा जगदीश्वरः ।।१।।
गुणमय्यास्वशवत्यास्य, सर्ग-स्थित्यप्ययान्विभो ।
धत्से यथा स्वदृग्भूमन् ब्रह्म-विष्णु-शिवाभिधाम् ।।२।।[3]

साकारनिराकारविश्व-रूपेणतत्रैवाग्रे-शिव-विषये—

यतच्छिवाख्यं परमार्थ तत्त्वं देवःस्वयं ज्योतिरवस्थितिस्ते ।[4]

अस्य महिमानंवक्तुमवगन्तुं वा ब्रह्मादयोऽप्यसमर्थाः ।

न ते गिरित्राखिललोकपाल, विरंचि-वैकुण्ठ-सुरेन्द्र-वन्दितम् ।
ज्योतिः परं यत्र रज-स्तमश्च, सत्त्वं न यद्ब्रह्मनिरस्तभेदम् ।।१।।[5]

महाभारते स्वयं भगवान् श्री कृष्णः शिवस्तोत्रे—

त्वं वै ब्रह्मा च रुद्रश्च, वरुणोग्निर्मनुर्भवः ।
धाता त्वष्टा विधाता च त्वंप्रभुः सर्वतोमुखः ।।१।।

---

१. शुक्लयजुर्वेदे ३।५७
२. वायुपुराणे २४।१५१-१५७, आनन्दाश्रम पूना, १८२७
३. श्रीमद्भागवते ८।७।२४ तथा २३ प्रजापति-कृतस्तोत्रे ।
४. तत्रैव ८।७।२९
५, तत्रैव १८।७।३१

त्वत्तो जातानि भूतानि स्थावराणि चराणि च ।
सर्वतः पाणिपादश्च, सर्वतोऽक्षिशिरोमुखः ।।२।।
सर्वतः श्रुतिमल्लोके, सर्वमावृत्य तिष्ठति ।[1]

महाभारतेऽन्यत्रद्रोणपर्वणि पाशुपतास्त्र-प्रसंगे श्रीकृष्णेन सहगतोऽर्जुनस्तं शिवं तुष्टावतत्राप्ययमेवार्थः ।

नमोविश्वस्य पतये महतां पतये नमः ।
नमः सहस्र-शिरसे, सहस्रभुजमृत्यवे ।।१।।
सहस्रनेत्रपादाय नमोऽसंख्येय-कर्मणे ।
भक्तानुकम्पिने नित्यं, सिद्ध्यतां नापरः प्रभो ।।२।।[2]

ब्रह्मवैवर्ते च भगवांच्छिवो विश्वेश्वरेशो विश्वकारणं विश्वरक्षा करः कथितस्तथा च—

विश्वं विश्वेश्वरेशं च, विश्वेशं विश्व-कारणम् ।
विश्वाधारं च विश्वस्तं विश्व-कारण-कारणम् ।।१।।
विश्वरक्षा-कारणं च, विश्वघ्नं विश्वजं परम् ।
फलबीजं फलाधारं फलं च तत्फल-प्रदम् ।।२।।[3]

शिवपुराणे च शिव एक एवापरः कश्चिन्नास्ति स एव द्यावाभूमी जनयति सर्व-देवानां प्रभवादयोऽनेनैव भवन्ति । स चादित्यवर्णः, अस्मात्परं किंचिन्नास्ति । अणुभ्योऽपि अणीयान् महतश्च महीयान् । त्रिकालातीतः सर्वेशः त्रिगुणाधीशश्च । तत्र चन्द्र-सूर्य-विद्युदादयो न भान्ति । तस्यभासा चेदं सर्वं विभाति । तथा च तत्रत्य-स्तोत्रे—

एक एव तदारुद्रो न द्वितीयोऽस्ति कश्चन ।
संसृज्य विश्वभुवनं गोप्तान्ते संचुकोच च ।।१।।
विश्वतश्चक्षुरेवायमुतायं विश्वतो मुखः ।
तथैव विश्वतोबाहुर्विश्वतः पादसंयुतः ।।२।।
द्यावाभूमी च जनयन्देव एकोमहेश्वरः ।
स एव सवदेवानां प्रभवश्चोद्भवस्तथा ।।३।।
हिरण्यगर्भो देवानां प्रथमं जनयेदयम् ।
विस्वस्मादधिको रुद्रो, महर्षिरिति हि श्रुतिः ।।४।।
वेदाहमेतम्पुरुषं महान्तमृतं ध्रुवं संस्थितं प्रभु ।
आदित्य-वर्णं तमसः परस्तात् संस्थितं प्रभुम् ।।५।।

---

१. महाभारते अनु० ४५।३६६, ६७. ४०७
२. तत्रैव द्रोणपर्वणि ८०।६१-६४
३. ब्रह्मवैवर्ते १।३।२५-२६

अस्मान्नास्ति परं किंचित् अपरं परमात्मनः।
नाणीयोऽस्ति न च ज्यायान्, तेनपूर्णमिदं जगत् ।।६।।
परस्मिन्कालादकलं, स एव परमेश्वरः।
सर्ववित्त्रिगुणाधीशो, ब्रह्म साक्षात्परात्परः ।।७।।[1]

महेश्वर-पद वाच्यं शिव ब्रह्मादयो देवाः समुपासन्ते । शिवश्च गुणातीतः चतुर्व्यूहः ब्रह्मविष्ण्वादीनां कारणरूपः । लीलयाऽखिलं । ब्रह्माण्डं सृजति । निष्कलः परमेश्वरोऽखण्डोऽचिन्त्यश्च प्रकृति-पुरुषरूप । तथा च शिवपुराणीय-स्तोत्रे—

देवोगुणमयातीतश्चतुर्व्यूहोमहेश्वरः।
सकलः सकलाधार, शक्तेरुत्पत्ति-कारणम् ।।१।।
सोऽयमात्मात्रयस्यास्य, प्रकृतेः पुरुषस्य च।
लीलाकृत जगत्सृष्टि रीश्वरत्वे व्यवस्थितः ।।२।।
यः सर्वस्मात्परोनित्यः, निष्कलः परमेश्वरः।
स एव च तदाधारस्तदात्मा तदधिष्ठितः ।।३।।
तस्मान्महेश्वरश्चैव, प्रकृतिः पुरुषस्तथा।
सदाशिवोभवोविष्णुर्ब्रह्मा-सर्व-शिवात्मकः ।।४।।[2]

स्वयं शिवोऽमुमर्थं विष्णुं प्राह, यत्स निर्विकारः । सच्चिदानन्दलक्षणो विश्वस्य सर्गादिहेतुः । विभिन्नरूपधारी तथा च—

प्रलयस्थिति-सर्गाणां कर्ताहं स गुणो गुणः।
परब्रह्मनिर्विकारः सच्चिदानन्द-लक्षणः ।।१।।
त्रिधाभिन्नोह्यहं विष्णो, ब्रह्मविष्णु-हराख्यया।
सर्गरक्षालयगुणैः निष्कलोऽहंसदा हरे ।।२।।[3]

शिवः सर्वान्तर्यामी जगदादिरनन्तबाहूदरचरणः । त्रिनेत्रः पंचवक्त्रः दशभुजस्तथा च शिवस्तवराजे—

सर्वान्तरस्थं जगदादि-हेतुं कालज्ञमात्मानमनन्तपादम् ।
अनन्तबाहूदरमस्तकाक्षं, ललाट नेत्रं भजचन्द्रमौलिम् ।।[4]

शिवरक्षास्तोत्रे—

गौरी-विनायकोपेतम्, पंचवक्त्रं त्रिलोचनम् ।
शिवं ध्यात्वा दशभुजं, शिवरक्षांपठेन्नरः ।।२।।[5]

---

१. शिवपुराणे वायवीय सं० पूर्वखण्डे ६।१४-१६ तथा ४।६
२. तत्रैव, १०।६-१२
३. तत्रैव, रुद्र सं० सृष्टिखण्डे ६।२७-२८
४. शिवस्तवराजस्तोत्रे, ४२
५. शिवरक्षास्तोत्रे, २

अन्यत्रापि शिवः पंचवक्त्रः त्रिनेत्रः वेदाभयवरांकुश-पाश टंक-कपाल-ढक्काक्षशूलपाणिरुक्तस्तथा च शिव-कवच-स्तोत्रे—

वेदाभयेष्टांकुश-पाश-टंक्ककपाल ढक्काक्षशूल पाणिः ।
सितद्युतिः पंचमुखोऽवतान्मामीशानमूर्ध्वंपरमप्रकाशः ।।१।।[१]

क्वचित् चतुर्मुख उक्तः । तत्रापि कुठार-वेदां-कुशादिधारी । तथा तत्रैव—

कुठार-वेदांकुश-पाश-शूल-कपाल-ढक्काक्षगुणान्दधानः ।
चतुर्मुखोनीलरुचिः, त्रिनेत्रः पायादधोरोदिशिदक्षिणस्याम् ।।[२]

शिवस्य पंचमुखानां संज्ञाः सद्योजातवामदेवाघोरतत्पुरुषेशानाः । द्वयोर्मुखयोध्यानिश्लोकावुक्तौ ।

प्रदीप्तविद्युत्कनकावभासः, विद्या-वराभीति-कुठार-पाणिः,
चतुर्मुखस्तत्पुरुषस्त्रिनेत्रः प्राच्यां स्थितं रक्षुतुमामजस्रम् ।।१।।
कुन्देन्दुशंखस्फटिकावभासो, वेदाक्षमाला-वरदाभयांकः ।
त्र्यक्षश्चतुर्वक्त्र उरु-प्रभावः सद्योधिजातोऽक्तु मां प्रतीच्यां ।।२।।
वराक्षमालामयटंकहस्तः, सरोज-किंजल्क समानवर्णः ।
त्रिलोचनश्चारुचतुर्मुखो मां पायादुदिच्यांदिशि वामदेवः ।।३।।[३]

अस्य रथः पृथ्वी सारथिर्ब्रह्माधनुर्हिमालयः रथचक्रे चन्द्र-सूर्यौ । विष्णुः शर इति तथा च शिवमहिम्न स्तोत्रे—

रशः क्षोणीयन्ता शतधृतिरगेन्द्रो धनुरथे,
रथांगे चन्द्राकौं रथचरण-पाणी शर इति ।
दिधिक्षोस्ते कोऽयं त्रिपुरतृणमाडम्बरविधौ,
जगद्रक्षायै त्वं नटसि ननुवामैव विभुता ।।१।।[४]

## फलितार्थः

भगवांछिवो यस्य वाचकः प्रणवः सकलतत्त्वरूपः सकललोक-कर्ता सर्वेषामभयकरोऽद्वयो निरामयोऽसंगो निर्मल-सर्वाधारौ निराधारौ नित्यं शुद्धबुद्ध-चेतनो महारौद्र आर्तदुःखदवाग्निः कपालमाला-खड्गचर्म-पाशांकुशडमरु-शूलचाप-शरगदा-शक्ति-तोमरादिधारी सहस्रमुखो विकटाट्टहासः सर्वोपद्रव-डाकिनी-शाकिनी-भूत-प्रेत-पिशाच-कुष्माड-वेताल-राक्षसादि-भय-विदारकः त्र्यम्बकोवृष (धर्म) वाहनोविश्वतोमुखश्चास्ति । तथा चामोघशिव कवचे—

"ओम् नमोभगवते सदा शिवाय सकल-तत्त्वात्मकाय सकल-तत्त्व-

---

१. शिवकवचेस्तोत्रे १५
२. तत्रैव १२
३. तत्रैव ११-१३, १४
४. शिवमहिम्नस्तोत्रे, १८

विहाराय सकल-लोकैककर्त्रे सकल लोकैक भर्त्रे सकललोकैकहर्त्रे सकल लोकैकगुरवे सकललोकैक-साक्षिणे सकल-निगम-गुह्याय-सकल-दुरितार्तिभंजनाय सकल-जगदभयंकरसकल लोकैकशंकराय शशांक-शेखराय शाश्वत् निजाभासाय निर्गुणाय निरुपमाय निराभासाय निरामयाय निष्प्रपंचाय निष्कलंकाय निरसंगाय निर्मलाय निर्गमाय नित्य-रूप-विभवाय निरुपम-विभवाय निराधाराय नित्यशुद्ध-बुद्ध-परिपूर्णसच्चिदानन्दा द्वयाय परमशान्तप्रकाशतेजो-रुपाय जयजय महारौद्र-भद्रावतार-दु:ख-दावदारुण-महाभैरव-काल-भैरव कल्पान्त-भैरवकपाल मालाधर-खट्वांग-चर्म-पाशांकुशडमरुशूल - चापवाण-गदा-शक्ति-भिन्दिपाल - तोमर-मुसल-मुद्गर परशु-परिध भुशुण्डी-शतघ्नी-चक्रायुध-भीषणकरसहस्त्रमुखद्रष्टाकराल-विकटाट्हास-विस्फारित-ब्रह्माण्ड-मण्डल-नागेन्द्र-कुण्डल-नागेन्द्रहार नागेन्द्र-वलय सदाशिवनमस्ते ।"[१]

अस्य शक्तिरुमा हैमवती जगज्जननी । पुत्रौ हेरम्बषडाननौ यो च सर्वज्ञौ शिवज्ञानासृताशनौ ब्रह्मादिदेव-सत्कृतौ सर्वलोकरक्षाकरण-तत्परौ । तथा च शिव-पुराणे—

सदाशिवांकमारूढा शक्तिरिच्छा शिवाह्वया ।
जननीसर्वलोकानां प्रयच्छतु मनोरथम् ।।१।।
शिवयोर्दयितौ पुत्रौ देवौ हेरम्वषण्मुखौ ।
शिवानुभावौ सर्वज्ञौ शिवज्ञानामृताशिनौ ।।२।।
तृप्तौ परस्परं स्निग्धौ, शिवाभ्यां नित्यसत्कृतौ ।
सत्कृतौ च सदा देवौ ब्रह्माद्यैस्त्रिदशैः सह ।।३।।
सर्बलोक-परिमाणं कर्तुमभ्युदितौ सदा ।
स्वेच्छावतारं कुर्वन्तो, सर्वांशिभेदैरनेकश: ।।४।।[२]

शिवस्याष्ट—मूर्तयस्ततपत्न्यश्च—

वामोज्येष्ठस्तथा रुद्रः कालोविकरणस्तथा ।
वलोविकरणश्चैव बल: प्रमथनः परः ।।१।।
सर्वभूतस्य दमनस्तादृशाश्चाष्टशक्तय: ।।[३]

भवशर्व-रुद्रादीनां तत्त्वप्रतीकत्वं तु महानिर्वाण-तन्त्रे—

शर्वः क्षितिः समुद्दिष्टा भवो, जलमुदाहृत: ।
रुद्राऽग्निरुग्रो वायुः स्याद्भीम आकाशशब्दित: ।। १'।

---

१. स्कन्दपुराणे तृतीये ब्रह्मोत्तरखण्डे सीमन्तिनी-माहात्म्ये द्वादशे अध्याये—मनसुखराय मोर, क्लाइव रोड, कलकत्ता

२. शिवपुराण वायवीय संहितायाम् ३१।२२-२५

३. तत्रैव ४७।४८

शुकरचितम् सौख्य-प्राप्तिकरम् ।

१३१. श्रीमहादेवाष्टकम् श्लोकाः ६ । स्तोत्रार्णवे ५१२ । भक्तिदम् ।

१३२. श्रीमार्कण्डेयेश्वरस्तवः । श्लोकाः ११ । स्तोत्रार्णवे १०१ पृ० सर्वभोगदम् ।

१३३. श्रीरामलिंगाष्टकम्, श्लोकाः ८, स्तोत्रार्णवे १६१ पृ०, शिवलोकदम्ः ।

१३४. श्री शिवाष्टोत्तरशतनामस्तोत्रम्, श्लोकाः १८, शाक्त-प्रमोदे ४८५ । विपत्तिनाशनम् ।

१३५. श्रीषड्वर्ण-मन्त्राष्टकम्, श्लोकाः ६ स्तोत्रर्णवे ६१ पृ० समस्त-भोगदम् ।

१३६. श्रीषड्वर्णमन्त्राष्टकम्, श्लोकाः ६, स्तोत्रार्णवे पृ० ५१० । समस्तभोगदम् ।

१३७. श्रीहरिहरस्तोत्रम् । श्लोकाः १४ । बृहत्स्तोत्ररत्नाकरे, मुम्बई संस्करणे, पृ० २८४, इष्ट-प्रपूरकम् ।

१३८. सदाशिवस्तोत्रम्, श्लोकाः १४ । देवीरहस्ये २२तमे पटले ।

१३९. संध्याकृत-शिवस्तोत्रम्, श्लोकाः २१ । शिवमहापुराणे सती-खण्डे ६।११-३१ । सर्वकामप्राप्तिकरम् ।

१४०. सुरकृत-शिवस्तोत्रम्, श्लोकाः २८ । सौ० पुराणे ६१।३३-६० । पाप-निवारकम् ।

१४१. हनुमत्कवचम्, श्लोकाः ४० । आनन्द रामायणे ८।१३।१-४० । सर्वभीतिनिवारकम् ।

१४२. हनुमत्कवचम्, श्लोकाः १८ । अगस्त्यसार-संहितातः वा० वि० १७१२ । भीतिनिवारकम् ।

१४३. हनुमत्कवचम्, श्लोकाः ५२ । नारदपु० ५।७८।१-५२ । असाध्यसाधकम् ।

१४४. हनुमत्कवचम्, श्लोकाः २२ । बृहत्स्तोत्ररत्नाकरे । ब्रह्माण्ड-पुराणेऽगस्त्य-संहितातः रक्षाकरम् ।

१४५. हनुमदष्टकम् । श्लोकाः ६ । बृहत्स्तोत्ररत्नाकरे २२८ पृ० शत्रुनाशकम् । पृथगपिमुद्रितम् ।

१४६. हनुमद्वडवानलस्तोत्रम् । विभीषण-कृतं शत्रुनाशक वा० वि० पु० सं० १७१३ । आगरातोऽपिप्रकाशितम् ।

१४७. हनुमत्पंचरत्नस्तोत्रम्, श्लोकाः ५ । आचार्यशंकर-कृतम्, अखिलभोगदम् ।

१४८. हनुमल्लांगूलस्तोत्रम् । श्लोकाः २३, बृहत्स्तोत्ररत्नाकरे, २२८ पृ० शत्रुनाशकम्, पृथगपिमुद्रितम् ।

१४९. हनुमत्-शत्रुंजयस्तोत्रम्, श्लोकाः २६ । आगरातः प्रकाशितम् २०१५ । सं० लक्ष्मीदत्त शास्त्री, शत्रुनाशकम् ।

१५०. हनुमत्सहस्रनाम, श्लोकाः १२८, गीता प्रेस गोरखपुर, २०१८ । सर्व-कामदम् ।

१५१. हरस्तोत्रम्, श्लोकाः १६ । स्कान्दे ३।२२।६९-८७ । सर्वदुःखहरम् ।

## पञ्चमोऽध्यायः

# विष्णु-स्तोत्राणि

## विष्णुः

### १. विष्णु-शब्दार्थः

वेवेष्टि व्याप्नोति विश्वं यः स विष्णुः "विष्लृ व्याप्तो धातो विषे-किच्चेति नुप्रत्यये सिद्ध्यति । वेष्टतिसिंचति आप्यायते विश्वमिति वा । विष्णाति वियुनक्ति भक्तान् मायापसारेण संसारादितिवा । विशति सर्वभूतानि योविशन्तिसर्वभूतानीति वा ।"[१]

विष्णु-पुराणेऽप्ययमर्थ उक्तः । तथा च—

यस्माद् विश्वमिदं, सर्वं तस्य शक्त्या महात्मनः ।
तस्मादेवोच्यते विष्णुर्विश्धातोः प्रवेशनात् ।।१।।[२]

शब्दकल्पद्रुमे चायमर्थोविशद-रूपेणोक्तः[३] अयं द्वादशादित्यानामन्यतम-स्तथा च महाभारते—

एकादशस्तथा त्वष्टा, द्वादशोविष्णुरुच्यते ।
जघन्यजस्तु सर्वेषामादित्यानांगुणाधिकः ।।१।।[४]

तत्रैव बृहत्वाद् विष्णुरित्यपि । "बृहत्वाद्विष्णुरुच्यते"[५] पद्मपुराणे च "स भगवान्विष्णुः प्रकृत्या प्रविवेशह ।[६] अन्यत्र च "तस्मात्वं वै स्मृतोविष्णु-र्विशधातोः प्रवेशनात ।"[७] निरुक्ते च—"विष्णुर्विशतेर्वाव्यश्नोतेर्वा" अत्र अशू व्याप्तौ धातुः-स्वादि-पठितः ।"[८]

यतोऽयं कल्पकोटिशतैरपि न क्षीयते नापिक्षरति तत्स्माद् विष्णुरुच्यते । तथा च मात्स्ये—

---

१. हलायुधकोशे, पृ० ६२६
२. विष्णुपुराणे ३।१।४६
३. शब्दकल्पद्रुमे, राजाराधाकान्त, चतुर्थ भाग ४५२
४. महाभारते १।६५।१६
५. तत्रैव ५।७१।३६
६. पद्मपुराणे ६।२२६।६५
७. वायुपुराणे ६६।१३८
८. निरुक्ते १२।३६

न क्षीयसे नक्षरसि, कल्प-कोटि-शतैरपि ।
तस्मात्वमक्षयत्वाच्च, विष्णुरित्यभिधीयसे ।।१।।
विष्टब्धं च त्वया, सर्वं जगत्स्थावर-जंगमम् ।
जगद्विष्टम्मनाच्चैव, विष्णुर्वेति प्रकीर्त्यते ।।२।।[१]
विष्टभ्य तिष्ठसे, नित्यं त्रैलोक्यं सचराचरम् ।
यज्ञगन्धर्वनगरं, सुमहद्‌भूत-पन्नगम् ।।१।।
तस्माद्विष्णुरितिप्रोक्तः, स्वयमेव स्वयम्भुवा ।।[२]

**निष्कर्ष:**

१. विष्णुर्व्यापकः ।[३]
२. वृहच्छरीरत्वाद्विष्णुरिति ऋग्वेदे ।[४]
३. विष्णुर्जगत्पालकः तथा च "विष्णुर्नरन्धियः"[५] यजुर्वेदे रध्‌हिंसायां रन्ध्यति हिनस्ति इति रन्धिष हन्ता न रन्धिषः अरन्धिष जगत्पालकः इति तत्रैव महीधरः ।
४. विष्णुः समन्तात्प्रीणयिता भक्तरक्षकस्तथा च "विष्णुरापीतपाः" आसमन्तात्प्रीणाति स्वस्मिन् प्रीतिमतोभक्तान् पातिरक्षतीति "आप्रीतपाः तद्‌गुण-विशिष्ट इति महीधरः ।"[६]
५. विष्णुर्जगद्रक्षकस्तथा च शुक्ल-यजुर्वेदे । "विष्णवे विभूयपाय स्वाहा ।"[७] नितरां भूत्वा मत्स्याद्यवतारं कृत्वा पातीति निभूयपा तस्मै "इतिमहीधरः ।
६. विष्णु-र्मीढ्वान् ।[८]
७. इच्छा-प्रपूरकः ।[९]
८. विष्णुर्वृष्णः ।[१०] महानारायणोपनिषद्यपि विष्णुर्व्यापक उक्तः ।
९. वृहद्‌देवतायम् च—

---

१. मत्स्यपुराणे २४७।३८-३९
२. तत्रैव २४७।४१-४२
३. शुक्ल यजुर्वेदे १।९। व्याख्यायाम्
४. ऋक्संहितायाम् १।१५५।६
५. शुक्ल यजुर्वेदे ८।५५
६. तत्रैव ८।५७
७. तत्रैव २२।२०
८. ऋक्संहितायाम् ७।१००।१
९. ऋक्संहितायाम् ७।१००।१
१०. तत्रैव ७।१५७।४

विष्णाते विशतेर्वास्यात् वेवेष्टेर्व्याप्तिकर्मणः ।
विष्णुर्निरुच्यते सूर्यः सर्वः सर्वान्तरश्च यः ॥३॥[1]

१०. सृष्ट्यादाग्रपः सृष्ट्वा तासु बीजमवासृजत् तदण्डमयुतवर्षैः सूर्य-समंबभूव तत्र प्रवेशनात् व्याप्त्या च भगवान्विष्णुरित्यभिधीयते । तथा च मत्स्य-पुराणे ।

प्राविश्यान्तर्महातेजाः स्वयमेवात्म-सम्भवः ।
प्रभावादपितद्व्याप्त्या, विष्णुत्वमगमत्पुनः ॥१॥[2]

शांकरभाष्ये च—

"वेवेष्टि व्याप्नोतीति विष्णुः" विषेर्व्याप्त्यभिधायिनो कुक्प्रत्ययान्तस्य रूपमिति । देश-काल-परिच्छेदशून्य इत्यर्थः ।"[3]

११. महाभारते स्वयमेवाहभगवान् यद्यतो रोदसी व्याप्य स्थीयते मम विस्तारश्चाधिकोऽत एव विष्णुरिति संज्ञा तथा च—

व्याप्ते मेरोदसी वार्थकान्तिश्चाभ्यधिका स्थिता ।
क्रमणाच्चाप्यहं पार्थ, विष्णुरित्यभिसंज्ञितः ॥[4]

जगति यत्किंचिद्दृश्यते तत्सर्वं व्याप्यतिष्ठति ततो विष्णुस्तथा च बृहन्नारायणोपनिषदि ।

यत्किंचिज्जगत्सर्व, दृश्यते श्रूयतेऽपि वा ।
अन्तर्बहिश्च तत्सर्वं, व्याप्य नारायणः स्थितः ॥१॥[5]

एवं च विष्णु-शब्दार्थे तत्स्वरूप-शक्तयोऽपि सन्निहिता । व्याप्तिः प्रवेश-श्चार्थोऽत्र प्रकृतिरूपेण सन्निविष्टः । सर्वत्र प्रवेशोऽपि व्याप्तिरेव । व्याप्तिश्च प्रवेशंविना न सम्भाव्यते । अतोविष्णुमयं जगत् ।

१२. निरुक्ते व्युपसर्गकषिञ् बन्धने धातोरपि निष्पाद्यते सर्वं जगत् नियमयतीति भावः तथा च—

"अथ यद्विषितोभवति तद् विष्णुरिति विषिणोतिविषिणाति वाविष्णुः"[6] विविधैः कर्मभिः तत्फलैश्च सिनोति जीवानिति विष्णुः ।

१३. श्रीमध्वाचार्यः वी-गति व्याप्ति प्रजननकान्त्यसनखादनेषु विष्लृव्याप्तौ वश् कान्तौ विश् प्रवेशने चेतिस्वीकरोति । अत्र प्रकृतिरूपत्वेन । निम्नरीत्याऽपि निर्वचनं दृश्यते ।

---

१. बृहद्देवतायाम् २।६९
२. मत्स्यपुराणे २।३०
३. विष्णुसहस्रनाम्नि १४ श्लोक-शांकरभाष्ये (गीता प्रेस गोरखपुर)
४. महाभारते शान्तिपर्वणि ४१।४२-४३
५. बृहन्नारायणोपनिषदि १३।१।२
६. निरुक्ते १२।१८

१४. विश्वं नियमयतीति विष्णुः।

१५. विशेषेण नूयते जनैरिति विष्णुः। तथा च "तद् विष्णोः परमं पदं सदा पश्यन्ति सूरयः दिवीव चक्षुराततम्।"[१]

भागवते च—

त एतदधिगच्छन्ति विष्णोर्यत्परमंपदम्।
अहं ममेति दौर्जन्यं न येषां देहगेजम्॥१॥[२]

एवं च समस्त-व्युत्पत्तिचर्चालोचनया विष्णुरित्यत्र प्रकृतित्वेन पंचधातवः। विष्लृ व्याप्तौ, विश-प्रवेशने, अशू व्याप्तौ, षिञ् बन्धने, व्युपसर्गक णुस्तुतौ चेति। धात्वर्थश्च सामान्यतोऽत्र विष्णु शब्दे सन्निविष्टा सर्वत्र व्याप्तिः, सर्वत्र प्रवेशः सर्वस्य नियामकः। वीगतौधातोः सर्वत्र गमनशीलश्चेति। प्रकृतित्त्वादेव विष्णोः सर्वश्रेष्ठ्यमायाति।

## २. प्रमुख-नाम्नामर्थाः

विष्णु-स्तोत्रेषु विशेषेण सामान्यतोलौकिकसाहित्ये समागतानां विष्णु-नाम्नामर्थाः निर्दिश्यन्ते यथा स्तोत्रावबोधः सुकरः स्यात्।

**अच्युतः**—यतो भगवान् स्वस्थानात्, कर्तव्यात्, उद्देश्याच्च न च्यवतेऽतोऽच्युत इत्युदीर्य्यते। तथा च मात्स्ये—

यस्मान्नच्यवतेस्थानात् तस्मातसंकीर्त्यसेऽच्युतः।[३]

**हरिः**—हरतिभक्तिजनदुःखानिति हरिः। यतोऽयं ब्रह्मेन्द्र-रुद्र-यमादीन् निगृह्य हरतीत्यतोहरिरुच्यते। तथा च—मात्स्ये—

ब्रह्माणमिन्द्रं च यमं, रुद्रं वरुणमेव च।
निगृह्य हरसे यस्मा, त्तस्माद्धरिरिहोच्यते॥१॥[४]

**त्रिविक्रमः**—यस्तेजसा त्रिभिः पदक्रमैर्जगन्मातिस्म तथा च बृहद्देवतायाम्—

त्रीणिमान्ति रजाँस्यस्य, यत्पदानि तु तेजसा।
तेनमेधातिथिः प्राह, विष्णुमेनं त्रिविक्रमम्॥१॥[५]

**वासुदेवः**—यतः सर्वाणि भूतानि भगवति वसन्ति भगवाँश्च सर्व-भूतेषु वसति, वासुदेवस्तत उच्यते तथा च—

---

१. ऋक्संहितायाम् ७।२२।२०
२. भागवते १२।६।३३
३. मत्स्यपुराणे २४७।३५
४. तत्रैव २४७।३६
५. बृहद्देवतायाम् २।६४

सर्वाणि तत्र भूतानि वसन्ति परमात्मनि ।
भूतेषु च सर्वात्मा वासुदेवस्ततः स्मृतः ॥१॥[1]

मात्स्येऽपि—वसन्तित्वयिभूतानि ब्रह्मादीनि युगक्षये ।
त्वं वा वाससिभूतेषु वासुदेवस्तथोच्यसे ॥१॥[2]

संकर्षणवासुदेव-प्रद्युम्नानिरुद्धाश्चेति चतुर्व्यूहाः । षड्भिर्गुणैः परिपूर्ण-मूर्तिःसूक्ष्मानिगद्यते । इयमेव मूर्तिः वासुदेवशब्देनाभिधीयते ।

यश्च वासुदेवोऽन्तर्यामी जीवेषुस्थितः जीवानां प्रेरकश्च । यश्चात्मनि वेदान्तवाक्यैर्निरुप्यते । स च—सत्त्वं विशुद्धं मनस्तत्र यः प्रकाशते स वासुदेव इति—तथा च सर्वदर्शनसंग्रहे—

संकर्षणोवासुदेवः, प्रद्युम्नश्चानिरुद्धकः ।
व्यूहश्चतुर्विधो ज्ञेयः, सूक्ष्मं सम्पूर्णषट्गुणकम् ॥१॥
तदैव वासुदेवाख्यं, परं ब्रह्म निगद्यते ।
अन्तर्यामी जीवसंस्थो, जीव-प्रेरक ईरिता ॥२॥
य आत्मनीति वेदान्त, वाक्यजालैर्निरूपितः ।
अर्चोपासनया लिप्ते, कल्मषेऽधिकृतोभवेत् ॥३॥[3]

सगुणनिर्गुणश्च भगवान् सर्वव्याप्याधितिष्ठति । चतुर्षुरूपेषु स्थितो यत्रान्यज्ज्ञानंनास्ति । सामूर्तिः ज्वालमालापरिवृताशुक्ला परिदृश्यते । इयमेव वासुदेवशब्देनाभिधीयते तथा च ब्रह्मपुराणे—

स देवोभगवान्सर्वं, व्याप्य नारायणो विभुः ।
चतुर्धासंस्थितो ब्रह्म, सगुणो निर्गुणस्तथा ॥१॥
एकामूर्तिरनुद्देश्या, शुक्लां पश्यन्ति तां बुधाः ।
ज्वालमालानवद्यांगी, निष्ठा सा योगिनांपरा ॥२॥
दूरस्था चान्तिकस्था च, विज्ञेया सागुणातिगा ।
वासुदेवाभिधानाऽसौ, निममत्वेन दृश्यते ॥३॥[4]

अनन्तः—न विद्यतेऽन्तं यस्य सोऽनन्तः । यस्यान्तं देवासुर-मनुष्याः नाधिगच्छन्ति । सर्वत्रव्यापकत्वाद् घटत इदम् । तथा च—

यस्माद्ब्रह्मादयोदेवाः, मुनयश्चाग्रतेजसः ।
नतेऽन्तं त्वधिगच्छन्ति, तेनानन्तस्त्वमुच्यसे ॥१॥[5]

---

१. विष्णुपुराणे ६।५।८०
२. मत्स्यपुराणे २४७।४५-४६
३. सर्वदर्शनसंग्रहे, पृ० २२६, श्री माधवाचार्य कृत प्रो० उमाशंकर कृत भाष्योपेत, चा प्र० वाराणसी, १९६४
४. ब्रह्मपुराणे आनन्दाश्रम पूना, पृ० १८० । १७-१९
५. मत्स्यपुराणे २४७।३७-३८

**सनातनः**—यो यशसा लक्ष्म्या शरीरेण च भूतानि सम्मानयति यश्च सदा तिष्ठति । तथा च—

सम्मानयसिभूतानि, वपुषा यशसा श्रिया ।
परेण वपुषादेव, तस्माच्चासि सनातनः ।।१।।[1]

**नारायणः**—

१. नारा अयनं यस्य सः । अतः सृष्ट्यादौ भगवान् जलमवासृजत् । तत्र च बीजाधानात् जगत्सर्वमभूत् । तथा च मात्स्ये—

नारा इत्युच्चते ह्यापः, ऋषिभिस्तत्वदर्शिभिः
अयनं तस्य ताःपूर्वं, तेन नारायणः स्मृतः ।।१।।[2]

कूर्मे च—नाराणामयनत्वात् नारायणस्तथा च—

२. अनुपादानात् चानुपूर्व्यात्, स्वयंभूरिति स्मृतः ।
नाराणामयनं यस्मात्, तस्मान्नारायणः स्मृतः ।।१।।[3]

३. नर आत्मा ततो जातान्याकाशादीनि कार्याणि तानि अयं कारणात्मना व्याप्नोति । अतश्च तान्ययनमस्येति, शांकरभाष्ये ।[4] नारायणोपनिषदि च—

४. यच्च किंचित् जगत् सर्वं दृश्यतेश्रूयतेऽथवा,
अन्तर्बहिश्च तत्सर्वं, व्याप्य नारायणः स्थितः ।।१।।[5]

५. प्रलये नराणाम् जीवानामयनत्वान् नारायणः
तथा च—तैत्तरीये—
तत्प्रयन्त्यभिसम्बिशन्ति ।[6]

६. नरः स्वरूपप्रवाह-नित्यवस्तूनि तेषांसमूहो नारा ते अयनं आश्रयः यस्य सः ।

७. नारा अनश्वरविभूतिमुक्तात्मानस्तेषामयनं नारायणः ।
लिंगमशिष्यंलोकाश्रयत्वाल्लिंगस्य ।[7]

८. आरा दोषा तद्विरुद्धाः गुणा नारास्तेषामयनं दोषविरुद्धगुणानामाश्रय इति यावत् ।

९. आराणां दोषाणां अयनं न भवति, दोषाश्रयोन भवतीति यावत् ।

---

१. तत्रैव, २४७।३६
२. तत्रैव २४७।४२
३. कूर्मपुराणे ४।६० मनसुखराय मोर क्लाइव रोड कलकत्ता, २०१८
४. विष्णुसहस्रनाम्नि, ३९ श्लोके शंकरभाष्ये
५. नारायणोपनिषदि, १३
६. तैत्तरीयोपनिषदि ३।१
७. उकालोऽज्झस्वदीर्घप्लुत इतिसूत्रेमनोरमायाम्

१०. दोषरहितवेदाः नारा प्रतिपाद्यतया तदयनत्वान्नारायणः ।
११. "न यज्जातानि तत्त्वानि नारायणीति ततो विदुः ।
तेषामयनभूतोयः स नारायण इति स्मृतः ।।१।।[1]
१२. नरस्य सम्बन्धिनारं अज्ञानं तद्यति गच्छतीति न यः स नारायणः ।
१३. नारैः अहिंसकैः ईयते प्राप्यते अय्यतेवानारायणः ।
१४. आरा कष्टानि नारा सुखानि तदयनत्वात् नारायणः ।

उरुक्रमः

१. उरुर्नाममहान्क्रमः पराक्रमः यस्य सः ।[2]
२. उरुर्महान् क्रमः क्रान्तिर्यस्य सः तथा च—
"तद्धावतौऽन्यानत्येति" ।[3]
३. उरुर्महान्क्रमः पादविक्षेपो यस्य सः । पादः पद्यतेः ।[4]
४. ईश्वरार्थकोऽयं शब्दस्तथा च—
तदस्य प्रियमभिपाथो, अश्यां नरो यत्र देवयवो मदन्ति ।
उरुक्रमस्य सहिबन्धु, रित्थाविष्णोः पदे परमे मध्वः ।।[5]

पुरुषः

१. पुरुषु भूरिषु उत्कर्षशालिमत्वेषुसीदतीत पुरुषस्तथा च शांकर-भाष्ये[6] गीतायां च—
यत् यत् विभूतिमतसत्वं श्रीमदूर्जितमेव वा
तत्तदेवावगच्छ त्वं ममतेजोऽशं-सम्भवम् ।।१।।[7]
२. पुरूणिफलानि सनोतीति ददातीत्यर्थः ।
३. पुरूणिभुवनानि संहारकाले, स्यति अन्तंकरोति ।
४. पूरणात् सादनाद्वा पुरुषस्तथा च—
पूरणात्सादनाच्चैव ततोऽसौपुरुषः स्मृतः ।[8]

तथा च—

---

१. मार्धवाचार्य ।
२. सत्यार्थप्रकाशे, प्रथम सं०, पृ० ८
३. ईशोपनिषदि ४
४. निरुक्ते २।७
५. ऋक्संहितायाम् १।१५५।५
६. विष्णुसहस्रनाम्नि १५ श्लो० शां० भाष्ये
७. गीतायाम् १०।४७
८. महाभारते, उद्योगपर्व ११

"स यत्पूर्वोऽस्मात् सर्वस्मात् सर्वान्पाप्मन औषत् तस्मात् पुरुषः।"[1]

५. "पुरंप्रभू तंमोक्षरूपं आनन्दं सनोतीति पुरुषः" तथाचर्क् संहितायाम्—

उतामृतत्वस्येशानः, यदन्नेनाति-रोहति।
एतावानस्य महिमा, ततो ज्यायांश्च पुरुषः॥[2]

६. परं विषहते यस्मात्तस्मात्पुरुष उच्यते।[3]

७. पुरं शरीरं तस्मिन् शेत इतिपुरुषस्तथा च—
नवद्वारं पुरं पुरायमेतैर्भावैः समन्वितम्।
व्याप्य शेते महात्मा यः तस्मात्पुरुष उच्यते॥१॥[4]

८. अस्तेर्व्यस्ताक्षर-योगात् आसीत्पुरा पूर्व-मिति विग्रहं कृत्वा व्युत्पादितः पुरुषः।[5]

## ३. हिरण्य-गर्भः

१. हिरण्यंतेजसो नाम हिरण्यानि सूर्यादीनि तेजांसि गर्भे यस्य सः। अथवा हिरण्यादीनां तेजसांगर्भः।[6]

२. "ज्योतिर्वैहिरण्यम्"[7] तद्गर्भे यस्य सः।

३. तेजोहिरण्यं तद्गर्भे यस्य सः।[8]

४. यो हिरण्यानां तेजसो गर्भः उत्पत्ति-निमित्तं अधिकरणं स हिरण्यगर्भः

५. अथवाद्विधातुजंरूपं हिनोतेः रमतेश्च धातुद्वयात्। समुदितात् कन्यन्प्रत्यये बाहुलकात्रूपसिद्धिः हितं चतत् आपदि दुर्भिक्षादौ रमयति स सर्वदा।[9]

६. हिरण्यगर्भे हिरण्मयोगर्भोऽस्येति हिरण्यं गर्भः। गृणातिगिरत्यर्थमितिवा।[10]

७. हिरण्यमण्डमद्वीर्यं संभूतं तदस्यगर्भं इति।

८. हिरण्मयाण्डान्तर्वर्तित्वात् हिरण्यगर्भो ब्रह्म विरंचिस्तदात्मा तथा

---

१. बृहद्देवतायाम् १।४।१
२. ऋक्संहितायाम् १०।९०।२
३. महाभारत उ० पर्वणि १३३।३५
४. तत्रैव २१०।३२
५. विष्णुसहस्रनाम्नि १५, शं० भाष्ये
६. सत्यार्थप्रकाशे प्र० सं०, पृ० ५
७. शतपथ ब्राह्मणे ६।७।१।२
८. तैत्तरीयब्राह्मणे १।८।९।१
९. निघण्टौ १०।२३, देवराज
१०. निरुक्ते १०।२३

च—"हिरण्यगर्भः समवर्तताग्रे।"[1]

९. निर्दोषं निरवद्यं इत्यपरम्, सत्त्वात्मक-द्रव्य-विशेषस्य हिरण्मय-सास्यात् हिरण्यं परमं धाम तस्य गर्भभूतः तत्र नित्यं वासात् ॥"[2]

१०. हर्षते स्वप्रभयासदीप्यते इति हिरण्यम् एतेषाम् हिरण्यानांगर्भः उपदाता हिरण्यगर्भः परमेश्वरः।

हृषीकेष :

१. हृषीकाणामन्द्रियाणामीशः हृषीकेषः। तथा च मात्स्ये "हृषीकाणीन्द्रियारायाहुस्तत्त्वज्ञान-विशारदाः। ईशिता च त्वमेतेषां, हृषीकेशस्तदोच्यसे ॥[3]

२. हृषीकेशः क्षेत्रज्ञरूपभाक्यस्य वा सूर्यरूपस्य चन्द्ररूपस्य जगत्प्रीतिकराहृष्टा केशारश्मयो यस्य सः हृषीकेशः तथा च महाभारते।

"सूर्याचन्द्रमसौ शश्वदंशुभिः केश-संज्ञितैः।
बोधयन्स्वापयंश्चैव, जगदुत्तिष्ठते पृथक् ॥१॥
बोधनात्स्वापनाच्चैव जगतो हर्षणं भवेत्।
अग्निषोमकृतैरेवं कर्मभिः पाण्डुनन्दन ॥२॥
हृषीकेशो महेशानो वरदो लोकभावनः[4] ॥

केशवः—अभिरूपाः केशा यस्य स इत्यर्थे "केशाद्वोऽन्यतरस्यामिति[5] प्रशस्तेऽर्थेवः।

यद्वा—

"कश्च अश्च ईशश्च त्रिमूर्तयः केशास्ते यद्वशे वर्तन्ते स केशवः। केशिबधाद्वा, तथा च विष्णु-पुराणे।

यस्मात्त्वयैष दुष्टात्मा हतः केशी जनार्दनः।
तस्मात्केशवनाम्ना त्वं, लोके ख्यातोभविष्यसि ॥१॥[6]

**गोबिन्द**—गाःविन्दतीति गोबिन्दः यतोह्ययं युगे युगे गांवाणीं गां धेनुं गां पृथ्वीं विन्दतीत्यतो गोविन्द उच्यते। तथा च। मत्स्यपुराणे—

---

१. ऋग्वेदे १०।१२१।१
२. भगवद्गुणदर्पणभाष्ये, रंगनाथः
३. मत्स्यपुराणे २४७।४५
४. महाभारते शान्तिपर्वणि ३२४।६६-६७
५. विष्णुसहस्रनाम्नि १६ शां भाष्ये अष्टाध्यायी ५।२।१०९
६. विष्णुपुराणे ५।१६।२३

"युगे युगे प्रणष्टां गां, विष्णो विन्दसि तत्त्वतः ।
गोविन्देति ततो नाम्ना, प्रोच्यसे ऋषिभिस्तथा ।।१।।[1]

**संकर्षणः**—यतो भगवान् युगे युगे प्रलये च भूतानि कर्षयति अतः संकर्षणस्तथा च तत्रैव—

"संकर्षयसि भूतानि, कल्पे कल्पे पुनः पुनः
ततः संकर्षणः प्रोक्तः, तत्त्वज्ञान-विशारदैः ।।१।।[2]

**प्रद्युम्नः**—"प्रतिव्यूहेन तिष्ठन्ति, सदेवासुरराक्षसाः ।
प्रबिद्यु सर्वधर्माणां, प्रद्युम्नस्तेन चोच्यते ।।१।।[3]

**अनिरुद्धः**—निरुद्धोविद्यते यस्मान्न, ते भूतेषु कश्चन ।
अनिरुद्धस्ततः प्रोक्तः, पूर्वमेव महर्षिभिः ।।[4]

**माधवः**

१. मायाः लक्ष्म्या धवः पतिर्माधवो विष्णुः ।
२. मायाः विद्यायाः धवः ईशः माधवः ।
तथा च हरिवंशे—

मा विद्याच हरेः प्रोक्ता तस्या ईशो यतोभवान् ।
तस्मान्माधवनामासि, धवः स्वामीतिशब्दितः ।।१।।[5]

**माहात्म्यम्**—विष्णोर्नुकं वीर्याणि प्रावोचं यः पार्थिवानि विममे रजांसि,
योअस्कभायदुत्तरं सधस्थं विचक्रमाणस्त्रेधोरुगायः ।।[6]

विष्णोर्नुवीर्यगणनां कतमोर्हतीह, यः पार्थिवान्यपि कविर्विममे रजांसि ।
चस्कम्भयः स्वरहसा स्खलतात्रिपृष्ठं, यस्मात्त्रिसाम्य-सदनादुरु-कम्पमानम् ।।[7]

विष्णोर्भगवतः पराक्रमः-वर्णने कः समर्थोऽस्ति योविष्णुः पृथिव्यामन्तरिक्षे च पराक्रमं दर्शितवान् । कदाचिद् भौमान् रेणून् गणयितुं समर्थो भवतु नरो न पुनर्विष्णुगुणगणनायाम् । श्रुतिस्मृति-पुराणदिभि र्बहुधाऽस्य माहात्म्यमुद्घोष्यते । तथा च "यज्ञोवैविष्णुः"[8] अत्रोब्बटः सर्वत्रसृष्टौ पालने संहारे च ब्रह्मविष्णु-

---

१. मत्स्यपुराणे २४७।४३
२. तत्रैव, २४७। ४६
३. तत्रैव, २४७।४७
४. मत्स्यपुराणे २४७।४८
५. हरिवंशे ३।८८।४९
६. ऋक्संहितायाम् १।१५४।१
७. श्रीमद्भागवते २।७।४०
८. शुक्ल यजुर्वेदे, पृ० ८

महेश्वरा अभिमानिन्यो देवता:, एकमेव शुक्ल यजुर्वेदे विष्णुं भगवन्तं श्रेष्ठमाह।[1] असारभूतेऽत्र विष्णोः समाराधनमेव श्रेष्ठम् । तथा च गारुडे--

असारभूते संसारे, सारमेकं विनिर्दिशेत् ।
असाराशेष-लोकस्य, सारमाराधनं हरेः ॥१॥[2]

यश्चैनं मातृवत्परिरक्षन्तं विस्मरति स ब्रह्मघाती तस्मिन्नरकस्थे यमस्तं भूयोभूयः पृच्छति "किं त्वया विष्णुर्नार्चितः" द्रव्यहीनेन जलहीनेन वापि विष्णोरर्चा कार्या । शास्त्राणामिदमेव मतम् । तथा च गारुडे—

मातृवत्परिरक्षन्तं, सृष्टिसंहारकारणम् ।
यो न पूजयते विष्णुं, तंविद्याद ब्रह्मघातकम् ॥१॥
नरके पच्यते यस्तु, यमेन परिभाषितः ।
किन्त्वया नार्चितो देवः, केशवः केशिनाशनः ॥२॥
उदकेनाप्यभावेन, द्रव्याणामर्चितः प्रभुः ।
यो ददाति स्वकं लोकं, स त्वयाकिन्नयाचितः ॥३॥[3]
आलोक्य सर्व-शास्त्राणि, विचार्य च पुनः पुनः ।
इदमेव सुनिष्पन्नं, ध्येयो नारायणः सदा ॥[4]

सर्वयज्ञतपोदानादिकाक्रियाः तीर्थसेवा च भगवतोविष्णोः प्रणामेनापि समतां न यान्ति । भगवत्स्मरणं सर्वविपद्विभोक्षणम्—

किन्तस्य दानैः किं तीर्थैः, किं तपोभिः क्रिमध्वरैः ।
योनित्यं ध्यायते देवं, नारायणमनन्यधीः ॥१॥
षष्ठितीर्थे सहस्राणि, षष्ठितोयशतानि च ।
नारायण-प्रणामस्य, कलां नार्हन्ति षोडशीम् ॥२॥
कृते पापानुतापो वै, यस्य पुंसः प्रजायते ।
प्रायश्चित्तं तु तस्यैकं, हरिसंस्मरणं परम् ॥३॥
गंगा-स्नान-सहस्रेण, पुष्कर-स्नान कोटिषु ।
यत्पापं विलयंयाति, स्मृते नश्यति तद्धरौ ॥४॥[5]

यः सदा निष्काम-भावेन भगवन्तं विष्णुं सेवते स इह यथावत्सुखं भुत्वाऽन्तेवैकुण्ठं याति मुक्तिं च लभते ॥ तथा च ब्रह्मवैवर्ते—

---

१. तत्रैव ४६।१ भाष्ये
२. गरुडपुराणे, २३३ अ०
३. तत्रैव
४. तत्रैव, २३४
५. गरुडपुराणे, २३४

कर्मभोगः सकामः, निष्कामो निरुपद्रवः।
स याति देहंत्यत्वा च, पदं विष्णोर्निरामयम् ॥१॥
पुनरागमने नास्ति, तेषां निष्कर्मिणां गतिः।
ये सेवन्ते चद्विविधं, कृष्णमात्मानमेव च ॥२॥
ये च नारायणं भक्त्या, सेवन्ते च चतुर्विधम्।
वैकुण्ठं यान्ति ते सर्वे, दिव्यरूप-विधारिणः ॥३॥[1]

अखिल-ब्रह्माण्डे निखिलं कार्यजातम् विष्णुनैव चाल्यते भूतोयाग्निसूर्य-चन्द्रतारा वायुवादयोऽनेनैव प्रेरिताः स्व-स्व-कार्यं सम्पादयन्ति। भगवतश्चरितं-श्रोतृणामघमोचनम् ॥

उरुक्रमस्य चरितं, श्रोतृणामघमोचनम्।
पारं महिम्न उरुविक्रमतो, गृणानो पार्थिवानपि
विममे स रजांसि मर्त्यः।[2]

तैत्तरीयोपनिषदि च—

भीषास्माद्वातःपवते, भीषोदेति सूर्यः।
भीषास्मादग्निश्चेन्द्रश्च, मृत्युर्धावतिपंचमम् ॥१॥[3]

भागवतेऽपि—

मद्भयात् वातिवातोऽयं, सूर्यस्तपतिमद्भयात्।
मद्भयात् वर्षते देवो, भगणोभातिमद्भयात् ॥१॥
यद् वनस्पतयोभीताः, लताश्चौषधिभिः सह।
स्वे स्वे कालेऽभिगृह्णन्ति, पुष्पाणि च फलानि च ॥२॥
स्रवन्ति सरितोभीताः नोत्सर्पत्युदधिर्यतः।
अग्निरिन्धेसगिरिभिः, भूर्न्यमज्जतियद्भयात् ॥३॥
सोऽनन्तोऽनन्तकरो, कालोऽनादिरादिकृदव्ययः।
जनं जनेन जनयन्, मारयन्मृत्युनान्तकम् ॥४॥[4]

मनुष्याणांपरमोधर्मः एकेन मनसाभगवतः स्मरणम्। तच्चाहैतुकम्। यज्ञतपः शास्त्र-वेदादयो भगवत्परा एव स्वधर्मस्यपालनस्यैकमात्रमुद्देश्यं भगवत-स्तोषणम् ॥ निष्काम-कर्मयोगेनम नरस्तथा न शुद्ध्यति यथा भगवते-विष्णुनामोच्चारणेन। अज्ञानादपि भगवन्नामोच्चारणंनिखिलाधमोचनम्। यमोदूतान्सम्बोध्य वदति यत्त एवात्रनेयाः ये मनोवाक्कर्मभिर्भगवन्नामोच्चारणं न कुर्वन्ति। महतामपिपापानाम् प्रायश्चित्तं भगवन्नामोच्चारणम्। तथा च—

---

१. ब्रह्मवैवर्ते प्रकृतिखण्डे २४।११-१३
२. भागवते ८।२३।२८-२९
३. तैत्तरीयोपनिषदि २।८, नृसिंहपूर्वतपिन्युपनिषदिच, १०
४. श्रीमद्भागवते ३।२९।४०-४२ तथा ४५

स वैपुंसां परो धर्मः, यतो भक्तिरधोक्षजे ।
अहैतुक्यव्यवहिता, ययात्मा सम्प्रसीदति ।।१।।
स्वनुष्ठितस्य धर्मस्य, संसिद्धिर्हरितोषणम् ।
धर्मः स्वनुष्ठितः पुसां, विष्वक्सेन-कथासु यः ।।२।।
नोत्पादयेद् यदिरतिंश्रममएव हि केवलम् ।।३।।[1]
तस्मादेकेनमनसा, भगवान्सात्वतां पतिः ।
श्रोतव्यः कीर्तितव्यश्च, ध्येयः पूज्यश्चनित्यदा ।।१।।
ऋग्वेदेऽपि—तमुस्तोतारः पूर्व्यं यथोवित्,
ऋतस्यगर्भं जनुषापिपर्तन ।
अस्यजनयन्तोनाम नामचित् विविक्तन, महस्तेविष्णो सुमतिंयजामहे ।[2]

यथामति विश्वस्य कारणं विष्णुं स्तुहि स हि वेदान्तप्रतिपाद्यः । तस्य स्तुत्याजीवनमरणरहिताःभवत ।

प्राचीनतमायापि नित्यनूतनाय स्रष्ट्रे स्वयम्भुवे लक्ष्म्याः पत्ये विष्णवे य आत्मानमर्पयति स यथावद्भोगान्भुक्त्वा अन्ते च परमं पदमधिगच्छति । तथा चर्क्संहितायाम् ।

यः पूर्व्याय वेधसे नवीयसे, समु जानये विष्णवे ददासति ।
यो जातमस्य महतो महिब्रवत्, सदुश्रवोऽभिर्युज्यं चिदभ्यसत ।।[3]

परात्परं भगवन्तं विष्णुं दृष्ट्वा हृदयग्रन्थयोभिद्यन्ते संशयाश्चछिद्यन्ते तथा च मुण्डकोपनिषदि ।

भिद्यते हृदयग्रन्थिः, छिद्यन्ते सर्वसंशयाः ।
छीयन्ते चास्य कर्माणि, तस्मिन्दृष्टे परात्परे ।।१।।[4]

कृते ध्यायन् त्रेतायां यज्ञैः द्वापरेचार्चनैः यत्फलमवाप्नोति नरस्तत्कलौ कीर्तनादेव । तथा च विष्णु-पुराणे ।

ध्यायन्कृते यजन् यज्ञैस्त्रेतायां द्वापरेऽर्चयन् ।
यदाप्नोति तदाप्नोति कलौ संकीर्त्यकेशवम् ।।१।।[5]
गारुडे च—चिन्त्यमानः समस्तानां क्लेशानां हानिदोहि सः ।
समुत्सृजाखिलं चिन्त्यं, सोऽच्युतः किं न चिन्त्यते ।।२।।

---

१. श्रीमद्भागवते १।२।६, १३, ८
२. ऋग्वेदे १। १५६।३, १९८८, पं० रामगोविन्द हिन्दी टीका युते, भागलपुर
३. तत्रैव, १।१५६।२
४. मुण्डकोपनिषदि २।२।८
५. विष्णुपुराणे ६।२।१७

ध्यायन्नारायणं देवं, स्नानादिषु च कर्मसु।
प्रायश्चित्तं हि सर्वस्य, दुष्कृतस्येति वै श्रुतिः ।।३।।[1]

**लिंगपुराणेऽपि**—अतिपातकयुक्तोऽपि, ध्यायन्निमिषमच्युतं ।
भूयस्तपस्वीभवति, पंक्तिपावनपावनः ।।४।।[2]

**हरिवंशे च**—हरिरेव सदा ध्येयः, भवद्भिः सत्वसंस्थितैः ।
ओमित्येवंसदा विप्राः, पठत ध्यातकेशवम् ।।[3]

**वृहन्मारदे च**—हरिर्हरति पापानि, दुष्टचित्तैरपि स्मृतः ।
अनिच्छयापि संस्पृष्टो, दहत्येव हि पावकः ।।१।।[4]

भगवतो विष्णोः स्तवनेन नरः विधूतपाप्मा भवति यस्य हृदिभगवतो मावोवर्तते तस्यामांगल्यं नश्यति तथा च स्कान्दे ।

श्रुत्वा विष्णुं वासुदेवं, विपापो जायते नरः ।
विष्णोः सम्पूजनान्नित्यं, सर्वपापं प्रणश्यति ।।१।।
सर्वदा सर्वकार्येषु, नास्ति तेषाममंगलम् ।
येषां हृदयस्थो भगवान्मंगलायतनो हरिः ।।२।।[5]

**महाभारते च**—एकोऽपि कृष्णस्य कृतः प्रणामः, दशाश्वमेधावभृथे न तुल्यः ।
दशाश्वमेधी पुनरेति जन्म, कृष्णप्रणामीन पुनर्भवाय ।।[6]

किमधिकंजगनि यत्किंचिदस्ति यच्चासीत् यच्चस्थास्यति तत्सर्वं हरिरेव ।
**तथा च तत्रैब**—

यदासीत्वर्तते यच्च, यच्च भावि जगत्पते ।
सर्वत्वमेवदेवेश, विना किंचित्त्वया नहि ।।१।।[7]

**गीतायामपि**—अथवाबहुनेतेन, किं ज्ञातेन तवार्जुन ।
विष्टभ्याहमिदं कृत्स्न, मेकांशेन स्थितो जगत् ।।१।।[8]

**श्रीगोविन्दः**—सर्वस्याधिपतिस्तथा च—विष्णुपुराणे—

सर्वभूतामके तात, जगन्नाथे जगन्मये ।
परमात्मनि गोविन्दे, मित्रामित्र-कथा कुतः ।।१।।[9]

---

१. गरुडपुराणे १।२२०।२८
२. लिंगपुराणे २।७।११
३. हरिवंशे पुराणे ३।८६।६
४. वृहन्नारदे १।११।१००
५. स्कन्दपुराणे ५।३।१५७।७
६. महाभारते शां० प० ४७।६७
७. हरिवंशे पुराणे ३।८८।६४
८. गीतायाम् (श्रीमद्भगवत्) १०।४२
९. विष्णुपुराणे १।१८।१७

**पाद्मे च**—सकृदुच्चरितं येन, हरिरित्यक्षर-द्वयम् ।
बद्धः परिकरस्तेन, मोक्षाय गमनं प्रति ।।१।।[1]

**महाभारते च**—व्याप्ते मे रोदसी पार्थ, कान्तिश्चाभ्यधिकास्थिता ।
क्रमणाच्चाप्यहं पार्थ, विष्णुरित्यभिसंज्ञितः ।।१।।[2]

एवं चाध्यात्मिकाधिभौतिकाधिदैविकानि सर्वाणि कार्याणि भगवत्प्रभावतः सिद्ध्यन्ति ।

## ४. स्वरूपं (वैदिकम्)

वैदिकदेवेषु विष्णोः महत्त्वपूर्णस्थानमस्ति । तथा च निरुक्ते—

अथयद्विषितोभवतितद्विष्णुर्भवति विष्णुर्विशते वा व्यश्नोतेर्वा ।[3]

वैदिक-संहितासु बिष्णु-विषये सर्वाधिकंमहत्वपूर्ण कार्यमस्यवर्णनं पदत्रयेण निखिल-जगतो मापनमस्ति । तथा च—

प्रदद्विष्णुः स्तवतेवीर्येण मृगो न भीमोकुचरोगिरिष्ठाः ।
यस्यौरुषुत्रिषु विक्रमणेष्वधिक्षियन्ति भुबनानिविश्वा ।।१।।[4]

अर्थोऽयम्बहुधानेक सूक्तेषु प्रतिपादितस्तथा च—

इदं विष्णुर्विचक्रमे त्रेधा निदधे, पदम् समूढमस्य पासुरे ।[5]

अतएवायमुरुगायो विस्तीर्ण-गतिकोऽभिधीयते । बहवआचार्यश्चास्य पद-त्रयस्यसम्बन्ध लोकत्रयेण स्थापयन्ति । और्णनाभस्तु पदत्रयस्य सम्बन्धः सूर्यस्य दैनन्दिन-परिभ्रमेण मनुते । तृतीयः क्रम उच्चतमस्तथा चर्क् वेदे—

परमं पदमवभातिसूरः ।[6]

अयमेवास्य प्रसिद्धोलोको यत्कामाः साधकाः साधनांकुर्वन्ति । तथा च "तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः, दिवीवचक्षुराततम्"[7] विष्णुर्वेदेषु निखिल-देवतारूपेण चित्रितः इतिकथनं निरर्थकं यतोविष्णुः पृथिव्युपरिविद्यमान-लोकानसृजत् । आकाशं चस्कम्भ । पदैस्त्रिभिर्जगदमिमीत तथा च—

विष्णोर्नुकं वीर्याणि प्रावोचं, यः पार्थिवानि विममे रजांसि
यो अस्कभायदुत्तरं सधस्थं, विचक्रमाणस्त्रेधोरुगायः ।।८

---

१. पद्मपुराणे ६।८०।१६१
२. महाभारते शान्त प० ३४१।४२
३. निरुक्ते १२।१६
४. ऋग्वेदे १।१५।२
५. तत्रैव १।२२।१७
६. तत्रैव १।५४।६
७. तत्रैव १।२२।२०
८. तत्रैव १।१५०।१

विष्णोरुच्यतमेलोके भूरिश्रृंगाणां गवाम् वसतिर्या अयास: सन्ति तथा च—

तावांवास्तून्युश्यसि गमध्ये, यत्र गाव: भूरिश्रृंगाअयास: ।[१]

विष्णु: परमेश्वर: पृथिव्या: प्रदेशान् विविधपादै: क्रमणंचकार। इत्युक्त्वात्रिविक्रमस्याप्यवतारस्य संकेत: । तथा च—"अतोदेवा अयन्तु नो यतो विष्णुर्विचक्रमे पृथिव्या: सप्तधामभि: ।"[१] व्याख्यायां विष्णु: परमेश्वर: सप्त-धामभि: सप्तभि: गायत्र्यादिभि: छन्दोभि:साधनभूतैर्यत: पृथिव्या: यस्मात्प्रदेशात् विविधपदक्रमणं कृतवान् स विष्णुर्व्यापकस्तथा च महानारायणोपनिषदि।

"शं नो विष्णुरुरुक्रम: ।"[२]

सर्वेषाम्देवानां मुख्यतमो विष्णुस्तथा च तत्रैव—

विष्णुमुखा: वै छन्दोभिरिमान् लोकान् यजय्यम्-
अभ्यजयन् महाइन्द्रोवज्रवाहु: षोडशी शर्मयच्छतु ।।[३]

वृहद्देवतायामपि विष्णोर्निर्देशोमहद्भिर्देवै: सहकृतोऽस्ति ।।

इन्द्रेण मरुद्भिश्च, सोमेन वरुणेन च ।
पर्जन्येनर्तुभिश्चैव, विष्णुना चास्य संश्रय: ।।[४]

तैत्तरीयोपनिषद्यपि ["नारायणायविद्महे...विष्णु: प्रचोदयात् ।"[५] भगवान्विष्णु: परात्पर: सहस्र-शिरस्कोविश्व: परब्रह्म-स्वरूप: सर्वे देवास्तमनुयान्ति। देवेषु चायं श्रेष्ठस्तथा च—

सहस्रशीर्षं देवं विश्वाक्षं विश्व-शम्भुवम् ।
विश्वं नारायणं देवं, अक्षरं परमं प्रभुम् ।।१।।
विश्वत: परमं नित्यं, विश्वं नारायणं हरिम् ।
विश्वमेवेदं पुरुष, स्तस्माद्विश्वमुपजीवति ।।२।।
पतिर्विश्वस्यात्मेश्वरं शाश्वतं शिवमच्युतम् ।
नारायणं महाज्ञेयं, विश्वात्मानं परायणम् ।।३।।[६]

वृहद्देवतायामपि वामनावतारस्य निर्देश: कृतस्तथा च—

---

१. ऋग्वेदे १।१५४।६
२. ऋक्संहितायाम् १।२२।१६
३. महानारायणोपनिषदि, २४
४. तत्रैव १।४८
५. बृहद्देवतायाम् १।११७
६. तैत्तरीये, १० प्रपाठके
७, महानारायणोपनिषदि १३।१-३

त्रीणिभान्ति रजांस्यस्य, यत्पदानि तु तेजसा ।
तेनमेधातिथि:प्राह, विष्णुमेनं त्रिविक्रमम् ।।१।।[1]

ब्रह्माणयुगे विष्णोर्महत्त्वमत्यधिकमवर्द्धत । ऋत्विजांवर्गेऽयं सर्वाधिकः । ऐतरेय-ब्राह्मणेऽग्निरवमः कथितो विष्णुश्च श्रेष्ठः तथा च—

अग्निर्वैदेवानामवमः विष्णुः, परमः तदन्तरेण सर्वा अन्य देवताः ।[2]

अत्र विष्णोः पदत्रयस्य सम्बन्धः स्पष्टतः पृथिव्यन्तरिक्षाकाशैः सह-स्थापितः । विष्णुर्महीमसुरेभ्योऽपहृत्येन्द्रायार्पयत् । एकदालोकविभाजने इन्द्रविष्णू असुरैः सहायुध्यताम् । तदासुराः प्रोचुर्यावन्तीं पृथिवीं विष्णुः स्वत्रिभिः पद-क्रमैर्मातुं शक्नोति तावतीन्द्राय देया । तदा विष्णुस्त्रिभिः पदैः सर्वं जगत्स्वायत्तं-चकार । तथा च—"इन्द्रश्चविष्णुश्चासुरैर्युयुधातेऽत्राह जित्वोचतुः कल्यावहे ते हतथेत्यसुरा उचुः सोऽब्रवीदिन्द्रो यावदेवायं विष्णुः त्रिविक्रमतेतावता वदस्माकं युष्माकमितरतः इति स इमान् लोकान् विचक्रमेऽथोदेवान् अथोवाचम् ।"[3] वामनावतारातिरिक्तं वाराहाद्यवताराणामपि तत्रैव निर्देशः । शतपथब्राह्मणे १४।१।२।११। तैत्तरीये ७।१।५।१। ऋग्वेदे च—

विश्वेतता विष्णुरामरादुरुक्रमस्त्वेषितः ।
शतंमहिषान् क्षीरणार्कमोदनं वराहमिन्द्र एषाम् ।।१।।[4]

जगति यत्किंचित्तत्सर्वमीशावास्यम् तथा चेशोपनिषदि—

ईशावास्यमिदं सर्वं, यत्किंच जगत्यां जगत् ।
तेनत्यक्तेन भुंजीथाः, मागृधः कस्यस्विद् धनम् ।।१।।[5]

तत्रैव प्रकारान्तरेण कृष्णवतारस्यपि संकेतः । तथा चर्क्संहितायाम्—

अयं वा कृष्णो अश्विन्नाहवते वाजिनी वसू ।
तथा श्रृणुत जमितुर्हवं, कृष्णस्य स्तुवतो नरः ।।१।।[6]

छान्दोग्ये च—तद्वैतत् घोर आंगिरस कृष्णाय वासुदेवाय
देवकीपुत्राय चोक्त्वा ।।[7]

गीतायामपि भगवान्कृष्णः स्वविभूतिवर्णने ।

"आदित्यानामहंविष्णुरित्यवोचत्"[8] विष्णोरेवभयात् पृथ्व्यपतेजो

---

१. बृहद्देवतायाम् २।६४
२. ऐतरेय ब्राह्मणे १।१
३. तत्रैव ३।१५
४. ऋग्वेदे ८।७७।१०
५. ईशावस्योपनिषदि १।१
६. ऋक्संहितायाम् ८।८५।३
७. छान्दोग्योपनिषदि ३।१७।६, अष्टाविंत्युपनिषदि १९६५, वाराणसी, पृ० १०१
८. गीतायाम् १०।२१

वायवादय: स्वस्वकार्याणि सम्पादयन्ति तथा च तैत्तरीये—

भीषास्माद्वातः, पवतेभीषोदेति सूर्यः ।
भीषास्मादग्निश्चेन्द्रश्चमृत्युर्धावति पंचमः ।।१।।[1]

नृसिंहपूर्वतापिन्यामुपनिषद्यपि मन्त्रोऽयंतथैव धृतः ।[2] ऋक्संहितायाम् स्पष्टरूपेणास्य जगतः कारणरूपो विष्णुः यथाशक्ति स्तोतव्य इत्युक्तः । स च वेदान्त-वाक्य-प्रतिपाद्यः तस्य स्तोत्रेण जन्म-मरण-रहितो भवति नरः । स्तोत्रेऽशक्तश्चेत् विष्णुनाम्न एव कथनं कार्यम् वयं विष्णोस्तेजांसि गुणातीतं रूपं च ध्यायामहे । तथा च—

तमुस्तोतारः पूर्व्यं यथा विद्, ऋतस्यगर्भं जनुषापिपर्तन ।
अस्यजानन्तोनाम चित् विविक्तन, महस्ते विष्णो सुमतिं यजावहे ।।१।।[3]

विष्णुश्च प्राचीनतमोऽपि नित्यनूतनः जगतः स्रष्टा स्वयम्भूः लक्ष्म्याः पतिर्योऽन्यान्मत्तान्करोति । तस्मै विष्णवे स्वद्रव्याणि समर्पणीयानि ।

योमहनीयस्य विष्णोर्जन्मादि कथयति स लक्ष्मीं कीर्तिविन्दति अन्नैः परिपूर्णश्च भवति । तथा चर्क् संहितायाम्—

यः पूर्व्याय वेधसे नवीयसे, सुमज्जानयेविष्णवे ददाशति यो जातमस्य महतो महीब्रवत् सदोश्रवोभिर्युज्यं चिदभ्यसत् ।[4]

मुण्डकोपनिषद्यप्ययं वरिष्ठः कथितस्तथा च—

ब्रह्मैवेदं विश्वमिदं वरिष्ठम् ।।[5]

तैत्तरीये च स एव जगत्सृष्ट्वा तत्र प्राविशत् तथा च—

विशतीति विश्वं ब्रह्म तत्सृष्ट्वा तदेवानुप्राविशत् ।[6]

विशालेऽस्मिजगति विष्णोर्माहात्म्यावगत्यै प्रभावादि-परिचयाय च स्वरूप-समीक्षाकार्या । भुवनेऽत्र पोषकशोषक इतिनाम्ना शक्तिद्वयं । शब्दान्तरेण धनात्मिकर्णात्मिके च अनयोरेव प्रभावोजगद्रूपेण दृश्यतेऽत्रैकापोषिकाऽन्या च शोषिकेति । अग्निषोमात्मकोऽयं लोकस्तत्र रुद्रोऽग्नेः प्रतीको विष्णुश्च सोमस्य । रुद्रोऽग्नेः प्रतिनिधिरत्रानेकप्रमाणनि तथा चर्क् सहितायाम्—

त्वमग्ने रुद्रो सुरोमहोदिवस्त्वं शर्धोमारुतं वृक्ष ईशिषे ।
त्वं वातैरेव रूपैर्यासि शंगतयस्त्वं पूषाविधतः पासिव्रतमना ।।[7]

---

१. तैत्तरीये २।८।१
२. नृसिंह पूर्वतापिन्युपनिषदि, २१०
३. ऋक्संहितायाम् १।१५६।३
४. तत्रैव १।१५६।२
५. मुण्डकोपनिषदि २।६
६. तैत्तरीयोपनिषदि, २।६
७. भागवतसम्प्रदाये, ऋग्वेदत उद्धृतम्, बलदेव उपाध्याय

**शतपथे च—**

अग्निर्वैसदेवः तस्यैतानि नामानि शर्व इति यथा प्राच्या आचक्षते भव इति यथा वाहीकाः, पशूनांपतिः रुद्रोऽग्निरिति तान्यस्याशान्तानि, एवेतराणि नामानि । अग्निरित्येव ।[1]

यथा रुद्रोऽग्नेः प्रतिनिधिरेवमेवविष्णुः सोमस्य प्रतिनिधिः सोमश्च जगत्‌ः पोषकतत्त्वं । अयमेव चन्द्रः । औषधीनामधिपः सोमरसोऽग्नौ हूयते । जना अस्यैव सोमस्य रसं पीत्वा परमानन्दमविन्दन् ।

अपमा सोममृता अभूमागन्मज्योतिरविदामदेवान् ।
किं नूनमस्मान् कृणवदरातिः, किं धूर्तिरमृत मर्त्यस्य ॥[2]

सोम एव स्वसुधारश्मिभिरौषधीः पुष्णाति । वैदिकर्षयस्तं प्रार्थयन्ते यथा पिता-पुत्रे दयालुस्तथा स दयालुर्भवेत् ।

शम्भो भवहृदय आपीत इन्द्रो, पितेव सोमसूनवे सुशेवः ।
सुखेव सख्य उरुशंसधीरः, प्राण आयुर्जीवसे सोमतारी ॥१॥[3]

विश्वस्मिन्पोषकतत्त्वरूपः सोमोभगवान् विष्णुश्च तस्य प्रतिनिधिः । पोषकतत्त्वं स्वल्पमपिवर्द्धमानं शरीरंव्यापृणोति, इदमेव वामनरूपं । सोमस्य सम्बन्धः सूर्येण । सौर-प्रकाशेनैव स प्रकाशते चन्द्रः । अतस्तत्प्रतीकस्य विष्णोरपि सूर्येणैक्यं जानन्ति जनाः । तथा च कालिदासः—विक्रमोर्वशीये—

रविमावसते सतां क्रियायै, सुधात्मा तर्पयतेसुरान्पितॄंश्च ।
तमसां निशिमूर्च्छितानि हन्त्रे, हरचूडानिहितातमने नमस्ते ॥१॥[4]

भारतीय-संस्कृतौपरमार्थत एकत्वेऽप्यनेकत्वम् अनेकत्वे चैकत्वं सर्वत्र दृश्यते । तथा च विष्णु-सूर्ययोरैक्यं पार्थक्यं च घटते । त्रिविक्रमः त्रिपदक्रमणादिशब्दाः सूर्येसंगच्छन्ते तथैवविष्णोर्व्यापकत्वे नातिदुर्घटा इति । गीतायामपि—

आदित्यानामहंविष्णुः, ज्योतिषां रविशुंमान् ।[5]

एवं चास्य सूर्यात्पार्थक्यं वैदिकं स्वरूपं च स्फुटम् ।

## पौराणिकं स्वरूपम्—(स्तोत्रात्मकम्)

पुराण-कालमागत्यविष्णुरधिकांमान्यतां प्राप । अष्टादश-पुराणेषु प्रायोऽर्द्धं विष्णु-परम् । मत्स्यकूर्मविष्णु-वाराहादीनि तु तन्नाम्नैवाख्यातानि । भगवतोविष्णोः सगुणनिर्गुणभेदेन रूपद्वयम् । त्रिविधगुण-साहचर्येणैक एव विष्णुर्ब्रह्मादि

१. शतपथे १।७।३।८
२. ऋक्संहितायाम् ८।४८।३
३. तत्रैव ८।४८।४
४. विक्रमोर्वशीये ३।७
५. भगवद्गीतायाम् १०।२१

संज्ञाः भजते । तथा च विष्णु-पुराणे—

सृष्टिस्थित्यन्तकालेषु, त्रिधैवसम्प्रवर्तते ।
गुणप्रवृत्यापरमं, पदं तस्यागुणं महत् ।।१।।[1]

परमात्मन इदं रूपं-ज्ञानमयं स्वसम्वेद्यं स्वप्रकाशात्मकं चास्ति । अन्यच्च रूपंमूर्तं तथा च गीतायाम्—

द्वाविमौपुरुषौ लोके, क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि, कूटस्थोऽक्षर उच्यते ।।१।।[2]

विष्णुरेवब्रह्मणस्तस्य अस्वरूपमयो मूर्तस्वरूपमयश्चास्ति ।[3] समस्तमिदं दृश्यमानं भौतिकं प्रपंचं विष्णुनैवोतप्रोतम् । विष्णौ चौतप्रोतम् । तथा च विष्णु पुराणे—

तत्र सर्वमिदं प्रोतमोतं, चाखिलं जगत् ।
ततो जगत् जगत् तस्मिन्, स जगच्चाखिलंमुने ।।[4]

समेषां समीक्षकाणाम् दर्शनानाम् त्रय्याश्च मतेऽत्र भगवदतिरिक्तं किंचिन्नास्ति । स एव सर्वत्र किन्तु माया-जवनिका-छन्नैर्नदृश्यते तथा च विष्णु-पुराणे—

अहं हरिः सर्वमिदं जनार्दनो, नान्यत्ततः कारण-कार्य जातम् ।
इदृङ्मनोयस्य न तस्य भूयो, भवोद्भवाःद्वन्द्वगताःभवन्ति ।।१।।[5]

तात्त्विक-दृष्ट्यैक विष्णुरेव सृष्टेः प्राक्ब्रह्मरूपेण अबातिष्ठत् । तदा कार्यकारण-भावोनासीत् । ततः प्रपंचात्मकं जगत् जातम् । तथा च श्रीमद्-भागवते—

अहमेवासमग्रं नान्यद् यत्सदसतःपरम् ।
पश्चादहं यदेतच्च, योऽवशिष्येत्सोऽस्म्यहम् ।।[6]

भगवतोविष्णोः पदमपरिच्छिन्नं कालातीतमनिर्वचनीयं तत्र श्रुतयोऽपि नेति नेतीति प्रणिगदन्त्योऽवतिष्ठन्ते । दौरात्म्यं विसृज्यैव केचित्जना अनन्येन-मैत्र्येण चक्षुषा तत्पश्यन्ति । तथा च भागवते—

परं पदं वैष्णवमामनन्ति, यत् यन्नेति नेतीत्यतदुत्सिसृक्षवः ।
विसृज्यदौरात्म्यमनन्यसौहृदाः, हृदोपगुह्यार्हपदं पदे पदे ।।१।।[7]

---

१. विष्णुपुराणे १।२२।४१
२. गीतायाम् १५।१६
३. विष्णुपुराणे १।२२।५५-५६
४. तत्रैव १।२२।६४
५. तत्रैव १।२२।८७
६. श्रीमद्भागवते २।६।१३
७. तत्रैव २।२।१८

तत्रैव च स्वयम्भगवन्तंदेवकी ग्राह तथा च—

रूपं यत्तत्प्राहुरव्यक्तमाद्यं, ब्रह्मज्योतिर्निर्गुणंनिर्विकारं।
सत्तामात्रंनिर्विशेषंनिरीहंस त्वं, साक्षात्‌विष्णुरध्यात्मदीपः ।।[1]

कूर्मे च— रजोगुणमयंचान्यरूपं, तस्यैव धीमतः।
चतुर्मुखः स भगवान्, जगत्सृष्टौ प्रवर्तते ।।१।।
सृष्टश्चपातिसकलं, विश्वात्मा विश्वतोमुखः।
सत्त्वंगुणमुपाश्रित्य, विष्णुर्विश्वेश्वरः स्वयम् ।।२।।
तमोगुणं समाश्रित्य, रुद्रः संहरते जगत्।
एकोऽपि सन्महादेव, स्त्रिधासौ परिकीर्तितः ।।३।।[2]

विष्णुपुराणे च—

ज्योतीषि विष्णूर्भुवनानिविष्णुः, वनानिविष्णुर्गिरयोदिशश्च।
नद्यःसमुद्राश्च सएव सर्वं, यदस्ति यन्नास्ति च विप्रवर्य ।।२।।[1]

तान्येवतेऽभिरूपाणि, रूपाणि भगवंस्तव।
यानि यानि च रोचन्ते, स्वजनानामरूपिणः ।।[2]

भक्तवत्सलोभगवान्भक्तेच्छया रूपंविदधाति। येन रूपेण द्रष्टुमीहते भक्तिमाग्जनस्तदेवास्य रूपं तथा च भागवते।

त्वं भावयोगपरिभावित-हृत्सरोजः, ग्रास्से श्रुतेक्षितपथो ननु नाथपुंसाम्।
यद्यद्धियात उरगायविभावयन्ति, तद् तद् बपुः प्रणयसे सदनुग्रहाय ।।१।।[3]

श्रीमद्भागवतस्यानुशीलनेन प्रतीयते यद्भगवतो रूपत्रयी एकं स्वयं रूपं द्वितीयं तदेकात्मरूपं तृतीयमावेशरूपं तत्रस्वयंरूपं मुख्यरूपंमिदं चानपेक्षितम्। सच्चिदानन्दविग्रहं परमसौन्दर्य-निकेतनं नयनाभिरामं स्वयंरूपम्। तथा च भागवते—

गोप्यस्तपः किमचरन् यदमुष्यरूपं, लावण्यसारभसमोर्ध्वमनन्यसिद्धम्।
दृग्भिःपिबन्त्यतुसवाभिनवंदुरापम्, एकान्तधाम यशसः श्रियऐश्वरस्य ।।१।।[4]

लघुभागवतामृते— ग्रनेकमप्रकटता, रूपस्यैकस्यैकत्वम्।
सर्वथा तत्स्वरूपेच सप्रकाशइतीर्यते ।।१।।[5]

तद्देकात्मरूपंच—

---

१. श्रीमद्भागवते १०।३।२४
२. कूर्मपुराणे ४।५०-५३
३. विष्णुपुराणे २।१२-३८
४. भागवते ३।२४।३१
५. तत्रैव ३।६।११
६. तत्रैव १०।४४।१४
७. लघुभागवामृते, पृ० १३

इदं रूपं तस्मादभिन्नत्वेऽपिभिन्नमिव प्रतीयते द्विधा चेदं विलासात्मकं स्वांशरूपं चेति । विलासेशक्ते र्न्यूनता स्वांशे च न, स्वयं रूपे ६४ गुणाः । आवेशरूपं—

ज्ञानशक्त्यादीनां विभागं, कृत्वाभगवान्येन रूपेण ।
जीवेषु आविष्टो भवति, यथा वैकुण्ठे नारदसनत्कुमाराद्यैः ।।[1]

भगवान्विष्णुरेव भूतात्मेन्द्रियात्मा प्रधानात्मा परमात्माचेयि पंच रूपेष्वस्थितः । स एवाक्षरोक्षरश्च । ब्रह्मविष्णु-शिवादिकल्पनास्थितः । कृष्णाच्युतानन्त-नामभिरेक एव सम्पूज्यते । समस्तं जगत्स एव । विभिन्न-शक्तिभिस्स एव विश्वस्य रक्षां करोति । तथा च विष्णु पुराणीयस्तोत्रे—

भूतात्मा-चेन्द्रियात्मा च, प्रधानात्मा तथा भवान् ।
आत्मा च परमात्मा च, त्वमेकः पंचधास्थितः ।।१।।
प्रसीद सर्व सर्वात्मन्, क्षराक्षरमयेश्वर
ब्रह्म-विष्णु-शिवाद्याभिः, कल्पनाभिरुदीरितः ।।२।।
अनाख्येय-स्वरूपात्मन्, अनाख्येय - प्रयोजन ।
अनाख्येयाभिधानं त्वां, नतोऽस्मि परमेश्वर ।।३।।
न यत्र नाथ विद्यन्ते, नाम-जात्यादि-कल्पना ।
तद्ब्रह्म परमं नित्य, मविकारि भवानजः ।।४।।
नकल्पनामृतेऽर्थस्य, सर्वस्याघिगमोयतः ।
ततः कृष्णाच्युतानन्त, विष्णु-संज्ञाभिरीड्यते ।।५।।
सर्वार्थस्त्वमजविकल्पनाभिरेवतत्,
देवाद्यंजगदखिलं त्वमेवविश्वम् ।
विश्वात्मंस्त्वमसि विकार-भावहीनः
सर्वस्मिन्नसि भवतोऽस्ति न किंचिदन्यत् ।।६।।
त्वं ब्रह्मा पशुपतिरर्यमा विधाता,
धातात्वं त्रिदशपतिः समीरणोऽग्निः ।
तोयेशो-धनपतिरन्तकस्त्वमेको,
भिन्नार्थैर्जगदपि पासि शक्ति-भेदैः ।।७।।[2]

घनश्यामोभुजगशायी कमलनयनो लक्ष्मीपतिश्च—

शान्ताकारं भुजगशयमं पद्म-नाभं सुरेशम्,
विश्वाधारं गगनसदृशं मेघवर्णं शुभांगम् ।

---

१. महामहोपाध्याय पं० गोपीनाथ कविराजस्य लेखकः, कल्याण भाग १६, अंके ४ तथा ८
२. विष्णुपुराणे (स्तोत्रे), श्रीधरानन्द कलकत्ता, ५।६।५०-५६ तथा वायुपुराणे ५०-५४

लक्ष्मी-कान्तं कमलनयनं योगिभिर्ध्यानगम्यम्
वन्देविष्णुं भवभयहरं सर्वलोकैनाथम् ।।१।।[1]

अस्य विविधामूर्तयः सगुणनिर्गुणादयः। धीमद्भिः ज्वालावृत्ताशुक्ला मूर्तिः दृश्यते। सा दूरस्था निकटस्थाचानासक्तैर्द्रष्टुमर्हा। नाम-रूपादिभिर्भिन्ना कल्पनामात्रैकगम्या। शुद्धा तथा च ब्रह्म-पुराणे—

स देवो भगवान्सर्वं, व्याप्य नारायणोविभुः।
चतुर्धा संस्थितो ब्रह्मा, सगुणोनिर्गुणस्तथा ।।१।।

एकामूर्तिरनुद्देश्या, शुक्लां पश्यन्तितांबुधाः।
ज्वाला-मालानवद्यांगी, निष्ठा सा योगिनांपरा ।।२।।

दूरस्था चान्तिकस्था च, विज्ञेया सा गुणातिगा।
वासुदेवाभिधानासौ, निर्ममत्वेन दृश्यते ।।३।।

रूपभावादयस्तस्या, न भावकल्पनामयाः।
आस्ते च सा सदाशुद्धा, सुप्रतिष्ठैकरूपिणी ।।४।।

द्वितीयापृथिवीमूर्ध्ना, शेषाख्या धारयत्यधः।
तामसी सा समाख्याता, तिर्यक्त्वं समुपागता ।।५।।

तृतीया कर्म कुरुते प्रजा-पालन-तत्परा।
सत्वोद्रिक्ता च साज्ञेया, धर्म-संस्थान-कारिणी ।।६।।

चतुर्थी जलमध्यस्था, शेते पन्नगतल्पगा।
रजस्तस्या गुणः सर्ग, सा करोति सदैवहि ।।७।।

या तृतीया हरे मूर्तिः, प्रजापालनतत्परा।
सा तु धर्मव्यवस्थानं, करोति नियतं भुवि ।।८।।

प्रोद्धतानसुरान्हन्ति, धर्मव्युच्छित्तिकारिणः।
पातिदेवान्सगन्धर्वान्, धर्मरक्षा-परायणान् ।।९।।[2]

भगवतोऽस्त्राणि शंख-चक्र-गदा-पद्मानि तथाचामरकोशे—

शंखो लक्ष्मीपतेः पांचजन्यं चक्रं सुदर्शनम्।
कौमौदकीगदाखड्गोनन्दकः कौस्तुभोमणिः ।।१।।[3]

गरुड-पुराणे च—

गरुडोम्बुजसंकाशो, गदा चैवामिताकृतिः।
पुष्टिः शिरीषपुष्पाभा, लक्ष्मीः कांचनसन्निभा ।।१।।

---

१. प्रसिद्धः श्लोकः ध्यानात्मकः

१. ब्रह्मपुराणे, आनन्दाश्रम पूना, अं० १८०।१७-२६

२. अमरकोशे, गुरु प्रसाद शास्त्री १९५०, १।१।२८

चक्रं सूर्यसहस्राभं, श्रीवत्सः कुन्दसन्निभः ।
विद्युद्रूपाणि चास्त्राणि, यानिचोक्तानिवर्णता ।।२।।[1]

भागवते च—सुदर्शनं च पांचजन्यं, गदासीषुधनुर्हलान् ।
मुसलंकौस्तुभं मालां, श्रीवत्संचानुपूजयेत् ।।३।।[2]

भगवान्विष्णुश्चतुर्भुजः कथ्यतेऽस्य बाहवश्चतुर्दिशः प्रतीकरूपाः । शंखो-वाचाम्, पद्म-ब्रह्मणश्चक्रं रक्षाशक्तेः गदा संहार-शक्तेश्च ।

चेतनायाः विस्तारेस्यन्दनस्थानं नाभिर्विन्दुर्यतः सृष्टिपद्मनालमुद्भवति । ब्रह्माचातएवोद्भवति तथा च योगशास्त्रे स

सिसृक्षया ततोनाभेस्तस्य, पद्म विनिर्ययौ ।
तन्नालं हेमनलिनं, ब्रह्मणोलोकमद्भुतम् ।।१।।
तत्त्वानिपूर्वरूपाणि, कारणानि परस्परम् ।
समवायप्रयोगाच्च, विभिन्नानि पृथक्-पृथक् ।।२।।
चिच्छवत्य-पूज्यमानोऽथ, भगवानादि-पुरुषः ।
योजयन्मायया देवी, योगनिद्रामकल्पयत् ।।३।।
योजयित्वा तथा चैव, प्रविवेश स्वयं गुहाम् ।
गुहां प्रविष्टे तस्मिंस्तु, जीवात्मा प्रतिबुद्ध्यते ।।४।।
स नित्यो नित्यसम्वद्धः, प्रकृतिश्च परैव सा ।
एवंसर्वातमसम्बन्धे, नान्यं पद्म हरेरभूत् ।।५।।
तत्र ब्रह्माभवद्भूयः, चतुर्वेदश्चतुर्मुखः ।[3]

सिसृक्षोर्विष्णो नाभेः पद्माभूत् तस्य नाले स्वर्ण कमलमुद्भूतम् । अयं ब्रह्मलोकः । समवाय-प्रयोगाद् भिन्नः ।

भगवानादि-पुरुषः चिच्छवत्या मायामाश्रित्य योग-निद्रामकल्पयत् । तदाश्रित्य गुहां च प्रविष्टस्तदात्मा जीवात्मोद्बुद्धः परा प्रकृति-रूपा । हरेर्नाभितः पद्माभवत् । चत्वार्य्यस्त्राणि त्रिगुणात्मक-शक्तीनां प्रतीकानि । तथा च स्कन्द-पुराणे—

ज्ञानाहंकारैश्वर्य शब्दब्रह्मासिकेशव ।
चन्द्रपद्मगदाशंख-परिणामानिधारयन् ।।१।।[4]

उपनिषत्स्वायुध-तत्त्वानां वर्णनानीत्थम् ।

श्रीवत्सस्य स्वरूपं तु, वर्तते लांछनैः सह ।
श्रीवत्सलक्षणं तस्मात्कथ्यते, ब्रह्म-वादिभिः ।।१।।

---

१. गरुडपुराणे ११।४१।४२, पण्डित पुस्तकालय काशी, १९६३
२. भागवते ११।२७।२७
३. योगशास्त्रे ब्रह्म-संहितायां (वसुमती, प्र० सं० कलकत्ता, बंगाल), पृ० ३११, श्लो० १८-२०
४. स्कन्दपुराणे विष्णुखण्डे १०।३२

येन सूर्याग्निवाक्चन्द्र, तेजसास्वस्वरूपिणा ।
वर्ततेकौस्तुभाख्यमणिं वदन्तीशममायिनः ॥२॥
सत्वं रजस्तम इति, अहंकारश्चतुर्भुजः ।
पंचभूतात्मकं शंखं, करेरजसि संस्थितम् ॥३॥
बालस्वरूपमत्यन्तं, मनश्चक्रं निगद्यते ।
आद्या माया भवेच्चात्र, पद्मं विश्वकरेस्थितम् ॥४॥
आद्याविद्यागदा वेद्या, सर्वदा मेकरेस्थिता ।
धर्मार्थकामकेयूरैर्दिव्यैर्दिव्यमयैरितैः ॥५॥
कण्ठं तुनिर्गुणं प्रोक्तं, भात्यन्ते आद्ययायया ।
मालानिगद्यते ब्रह्मं, स्तव पुत्रैस्तु मानसैः ॥६॥
कूटस्थं सत्त्व-रूपंच, किरीटं प्रवदन्ति माम् ।
क्षरोत्तरं प्रस्फुरन्तं, कुण्डलंयुगलं स्मृतम् ॥७॥[1]

विष्णोर्ग्रीवायां वैजयन्तीमाला च भूत-संघातभूता तथा च विष्णु-पुराणे—

पंचरूपा तु या माला, वैजयन्ती गदाभृतः ।
साभूत-हेतुसंघातभूत, माला च वै द्विज ॥१॥[2]

राधातन्त्रेऽपि—

तथा च—

नानारत्नमयी-माला, विद्युत्कोटिसमप्रभा ।
पंचाशन्मातृकावर्णा, सहिताविश्व-मोहिनी ॥१॥[3]

विष्णोर्वाहनो गरुडश्च वेदानां प्रतीक-रूपः तथा—

गरुडो भगवांस्तत्र, स्तोत्रंछन्दोमयं वपुः ॥

शेषशय्यायां भगवान्योग-निद्रामाश्रित्य शेते । शेषश्च सहस्रमूर्धा । यैः पृथिवी धृताऽयंशेषः काल-प्रतीकः ।

त्वया धृतेयं धरणी विभर्ति, चराचरं विश्वमनन्तमूर्ते ।
कृतादिभेदैरजकालरूपो, निमेषपूर्वः जगदेतदत्सि ॥१॥[4]

एवं च पुराणादि-वर्णितो भगवान्विष्णुः प्रतीकरूपैः निर्गुणः सगुणश्चेति । कालिदासोऽपि—

रत्नच्छाया-व्यतिकर इव प्रेक्ष्यमेतत्पुरस्तात्,
बल्मीकाग्रात्प्रभवति धनुः खण्डमाखण्डलस्य ।

---

१. गोपालोत्तरतापिन्युपनिषदि, २२-२८
२. विष्णुपुराणे २।२२।७०
३. नारायणवर्म-स्तोत्रे २६
४. विष्णुस्तोत्रे (विष्णुपुराण) ६।६।२६

येन श्यामं बपुरतितरां, कान्तिमापत्स्यते ते ।
बर्हेणेव स्फुरितरुचिना, गोपवेषस्यविष्णोः ॥[१]

मन्त्रगायत्र्यादीनि—

भगवतो विष्णोर्गायत्र्यो विभिन्न-रूपेण यत्र तत्र वर्तन्ते तथा च महानारायणोपनिषदि—

१. "नारायणाय विद्महे वासुदेवाय धीमहि तन्नो विष्णुः प्रचोदयात्"[२] (नारायणगायत्री) ।

२. "बज्रनखाय विद्महे तीक्ष्णद्रंष्टाय धीमहि तन्नो नारसिंहः प्रचोदयात्"[३] (नृसिंहगायत्री)

३. नृसिंह-पूर्वतापिन्याम्—"ओं नृसिंहाय विद्महे वज्रनखाय धीमहि तन्नः नृसिंहः प्रचोदयात् ।[४]

४. तैतरीये प्रथमाक्षरशस्तथैव ।[५]

५. तन्त्रसारे—

ओम् त्रैलोक्य-मोहनाय विद्महे स्मराय धीमहि तन्नोविष्णुः प्रचोदयात्[६] प्रथमाऽपि पूर्ववत् ।

६. ओम् वागीश्वराय विद्महे हयग्रीवाय धीमहि तन्नो विष्णुः प्रचोदयात् ।[७]

७. ओम् कृष्णाय विद्महे दामोदराय धीमहि तन्नो विष्णुः प्रचोदयात् ।[८]

८. ओम् दाशरथाय विद्महे सीतावल्लभाय धीमहि तन्नो रामः प्रचोदयात् ।[९]

## विशिष्ट-स्तोत्राणि

### १. कृष्णकवचम्

यतोऽत्र श्रीकृष्णस्य वर्णनम् त्रैलोक्यविजयमिति नामान्तरं[१०] तथा च "त्रैलोक्य-विजयं नाम श्रीकृष्णस्य जयावहम्" पुष्पिकायां च—

---

१. मेघदूते १।१५
२. महानारायणोपनिषदि १।५१
३. तत्रैव २१।२
४. नृसिंहपूर्वतापिन्युपनिषदि उ० १।१३
५. तैतरीयारण्यके, १० प्र०
६. तन्त्रसारे, पृ० ६८
७-९. तत्रैव
१०. ब्रह्मपुराणे ३।३१।८

"इति श्रीब्रह्ममहापुराणे गणपति-खण्डे नारदनारायण-सम्वादे परशुरामाय कृष्ण कवच-प्रदानं नामै कत्रिंशोऽध्यायः ।"[१]

ब्रह्मवैवर्ते ३ ये खण्डे ३१ तमेऽध्याये ७मं श्लोकमारभ्य ५७ तमं यावत्। श्लोकाः ५० महादेवः परशुरामं प्राह।

कवचस्यास्य धारणेन राजसूयसहस्राणां वाजपेयशतस्य च नरमेधायुतानां महादानानां भूमेः प्रदक्षिणस्य च फलानि षोडशी-कलां नार्हन्ति। व्रतोपवास-स्वाध्यायादि-जन्यं फलं लभते नरः। अस्यैव प्रभावेण परशुरामः त्रिसप्तकृत्वः नृपान् जघान। तथा चोक्तम्।

राजसूय-सहस्राणि, वाजपेय-शतानि च,
अश्वमेधायुतान्येव, नरमेधायुतानि च ॥१॥
महादानानि यान्येव, प्रादक्षिण्यमणं तथा।
त्रैलोक्य-विजयस्यास्य, कलां नार्हन्ति षोडशीं ॥२॥
व्रतोपवासनियमं, स्वाध्यायाध्ययनेतपः।
स्नानं च सर्वतीर्थेषु, नास्यार्हति कलामपि ॥२॥[२]

आदावत्र माहात्म्यं प्रदर्शितं ततो विनियोगो मन्त्रः अंगन्यास-करन्यासौ, दिग्रक्षणं च। सरला भाषा गायत्री छन्दः।[३]

## २. कृष्णस्तोत्रराजः

सूच्यामिदमेवनाम[४] श्रीकृष्ण-स्तोत्रेषु शिरोमणीयमानत्वादस्येयं संज्ञा। पुराणेऽप्यनेनैव नाम्ना निर्देशः। "स्तवराजमिमंनित्यं ब्रह्मेन्द्रधर्मभिः कृतम्"[५] पुष्पिकायां च—

"इति श्री ब्रह्मवैवर्ते महा-पुराणे श्री कृष्णजन्मखण्डे गोलोक-वर्णने श्री कृष्ण स्तोत्र-राजपठनं नाम पंचमोऽध्यायः।"[६]

ब्रह्मवैवर्ते ५माध्याये ९३ तमं श्लोकमारभ्य १२६ तमं यावत्। श्लोक संख्या ३४। पापभरपीडितया धरया प्रार्थितानां ब्रह्मादि-देवानां स्तोत्रान्ते हरिः प्रादुर्बभूव। ततः पुनः ब्रह्मादि-देवाः स्तोत्रमकार्षुः।

स्तोत्रस्यास्य पाठेन नरो निश्चलां मतिं लभते। सुरासुरमुनीन्द्रैर्दुर्लभं भगवद्दास्य-मणिमादिक-सिद्धीश्च लभते। चिरकालीना कीर्तिश्च तस्य भवति।

---

१. तत्रैवाध्यायान्ते
२. ब्रह्मपुराणे ३।३१।५०-५२
३. तत्रैव ३।३१।२२-५०
४. ब्रह्मवैवर्ते, पृ० १
५. तत्रैव ४।५।१२१
६. तत्रैव, पृ० २१

तथा चोक्तम्—

पूजाकाले हरेरेवं, भक्तियुक्तश्च यः पठेत् ।
सुदुर्लभां दृढां भक्तिं, निश्चलां लभते हरौः ।।१।।

सुरासुर-मुनीन्द्राणां, दुर्लभं दास्यमेव च ।
अणिमादिक-सिद्धिं च, सालोक्यादि-चतुष्टयम् ।।२।।

इहैवविष्णु-तुल्यश्य, विख्यातः पूजितोध्रुवम् ।
वाक्सद्धिर्मन्त्र-सिद्धिश्च, भवेत्तस्यसुनिश्चितम् ।।३।।[1]

सानुप्रासं-सप्रसादं-सरलया भाषया भाषितमिदंस्तोत्रं अवितर्क्यस्येच्छामयज्योति-रूपमत्रवर्णितम् । ईश्वरः सर्वाधारोऽपि निराधारः ।

## ३. गजेन्द्र-कृत-विष्णु-स्तोत्रम्

विष्णोर्भगवतः स्तोत्रस्य गजेन्द्रेण कृतत्वात्तदेव नाम ।[2] पुराणेषु गजेन्द्र-मोक्षेतिनाम्ना प्रसिद्धं तथा च पुष्पिकायाम्—

"इतिश्रीमद्भागवते महापुराणे पारमहस्यां संहितायामष्टमेस्कन्धे गजेन्द्र-मोक्षणे तृतीयोऽध्यायः ।[3]

"भागवते महापुराणे ८मे स्कन्धे ३येऽध्याये २य-श्लोकात् २९ तमं यावत् श्लोक-संख्या २८ । स्तोत्र-कर्ताग्राहग्रस्तो गजेन्द्रः फल-कथने चतुर्थोऽध्यायः १५, १६ श्लोकयोरिति ।

स्तोत्रस्यास्य पाठेन विमलामतिर्भवति । पाप-पुंजं च प्रणश्यति । तथा च तत्रैव—

उत्थायापररात्रान्ते प्रयताः सुसमहिताः ।
स्मरन्ति मम रूपाणि, मुच्यन्ते ह्येनसोऽखिलात् ।।१।।

ये मां स्तुवन्त्यनेनांग, प्रतिवुध्य निशात्यये ।
तेषां प्राणात्यये चाहं, ददामि विमलां मतिम् ।।२।।[4]

भगवान्स्वमायया त्रिगुणात्मके जगति स्वेच्छोपात्तवपुस्तिरोधत्ते । स्वेच्छया विर्भति च । न केऽपि देवर्षयो मुनयो महर्षयो वा तं ज्ञातुं पारयन्ति । नटइव-विविधचर्याः करोति । अकारणोऽपि स कारणः । आशाबद्धैर्दुरापः । तथा च—

---

१. ब्रह्मवैवर्ते, ४।५।१२२-१२४
२. श्रीमद्भागवते, पृ० ३९१ मूलमात्रे, गीताप्रेस, गोरखपुर
३. तत्रैव, ३९२
४. श्रीमद्भागवते ८।४।२४-२५

आत्मजाप्तगृहवित्तजनेषु सक्तैः, दुष्प्रापणाय गुण-संगविवर्जिताय ।
मुक्तात्मभिः स्वहृदये, परिभाविताय, ज्ञानात्मने भगवते नमईश्वराय ॥१॥[१]

भाषा सरला सानुप्रासा समास-बहुला ।[२]

## ४. गोविन्दाष्टकम्

गोविन्दस्य भगवतः स्तोत्रे श्लोकानामष्टकत्वात् नवमस्य च फलकथन-परत्वात्तदेव नाम ।[३] पुष्पिकायां च

"इति श्रीमत्परहंस-परिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्य-पाद-शिष्यस्य श्रीमच्छंकरभगवतः कृतौ गोविन्दाष्टकं सम्पूर्णम् ।[४]"

आचार्य-शंकर-कृतमिदमत्र श्लोकाः ९ ।

स्तोत्रस्यास्य पाठेन गोविन्दार्पित-चेताः नरः धौताखिलाघो निजस्वान्ते परमानन्दामृतं गोविन्दमभ्युपैति । तथा च—

गोविन्दाष्टकमेतदधीते, गोविन्दार्पितचेता यो ।
गोविन्दांघ्रिसरोजध्यान, सुधाजलधौतसमस्ताघो ।
गोविन्दाच्युतमाधव-विष्णोगोकुल-नायकृष्णेति ।
गोविन्दं परमानन्दामृतमन्तस्थं स तमभ्युपेति ।।१।।[५]

अत्र निर्गुणाद्वैतात्मनि गोविन्दस्य-चर्चा । यः सत्यज्ञानमनन्तं ब्रह्म-माया-कल्पित-नानाकारानाकारभुवना-कारः । यश्च शैशवे मृत्साशी यशोदाताडितो व्यादितवक्त्रः दर्शितालोकचतुर्दशलोकः । भयपूरित लोकस्तम्भश्च तथा च तत्रैव—

मृत्स्नामत्सीहेतियशोदाताडन - शैशव-सन्त्रासम् ।
व्यादितवक्त्रालोकितलोकालोक-चतुर्दश-लोकम् ।
मायाकल्पित-नानाकारमनाकारं भुवनाकारम् ।
क्ष्मानाथमनाथं प्रणमत गोविन्दं परमानन्दम् ॥१॥[६]

अत्र भाषा सरला, सप्रसादा, सानुप्रासा दीर्घसमासा ।

## ५. नरसिंह स्तोत्रम्

यतोऽत्र नरसिंहस्य भगवतो महिम-प्रतिपादनम् । अतस्तदेव नाम ।

---

१. श्रीमद्भागवते ८।४।१८
२. तत्रैव, ८।४।५
३. श्रीशकरग्रन्थावल्याम्, पृ० ३६४ बृहत्स्तोत्ररत्नाकरे, काशी संस्करणे, पृ० २१५
४. तत्रैव, स्तोत्रान्ते
५. श्रीशंकरग्रन्थावल्याम्, श्लोकाः ९
६. तत्रैव, श्लोकाः २

स्तोत्रेणानेन भगवान्नरसिंहः स्तुतः।

देवीभागवते ८म स्कन्धे नवमेऽध्याये ३य श्लोकमारभ्य ९ मंयावत्। श्लोकानां सप्तकम्। स्तोत्रमिदम् हरिवर्षे भक्त शिरोमणिः प्रह्लादः कृतवान्।

स्तोत्रस्यास्य पाठेन सर्वविघ्नशमनं भवति। यतश्चात्र विघ्नमयजगत् परित्यज्य नृसिह चरणोपासना श्रेयस्करीत्युक्तम्। तथा च तत्रैव—

"तस्माद्रजो-राग-विषादमन्युमान-स्पृहा-भयदैन्याधिमूलम्
हित्वा गृहं संसृतिचक्रवालम्, नृसिंहपादं भजताकुतोभयम् ॥१॥"[1]

तान्त्रिकमेतद् भगवता नृसिंहेन प्रह्लादो निर्भयः कृतः सरलयागिरा नृसिंहगौरव-प्रतिपादनं। स च तेजस्विनां तेजस्वी वज्रद्रष्टा कर्माशयनाशकः। भवभीतान्यस्य स्मरणेन क्षयं यान्ति। रजोरागविषादमन्युमानादीनि परिहरणीयानि। तथा च तत्रैव—

ओम् नमोभगवते नरसिंहाय, नमस्तेजसतेजसे।
आविर्भव आविर्भव वज्रद्रष्ट कर्माशयान्रन्धय रन्धय,
तमो ग्रस ग्रस ओं स्वाहा ॥१॥[2]

## ६. पुण्डरीकाक्ष-स्तोत्रम्

सूच्यामिदमेवनामोपक्रमे[3] च "अथ पुण्डरीकाक्षस्तोत्रं"[4] "स्तोत्रान्ते-तल्लयं प्राप्तः सराजा राज-सत्तमः" इति च।

वाराहपुराणेऽष्टमेऽध्याये १०म श्लोकमारभ्य १७दश यावच्छलोकाः ८। प्रश्न-कर्त्री धरित्री वक्ता वाराहः। स्तोत्रान्ते कश्मीरनरेशस्य वसोर्मोक्ष-प्राप्तिः।

स्तोत्रस्यास्य नित्यं पाठेन पुष्कर-यात्रायाः यत् फलं प्राप्यते तत्प्राप्नोति। तथा च तत्रैव—

यश्चैतत्पुण्डरीकाक्ष, पारगं शृणुयान्नरः।
तस्य पुष्कर-यात्रायाः, विधि-स्नान फलं लभेत् ॥१॥[6]

सरले सप्रसादे सानुप्रासे स्तोत्रेऽस्मिन् पुण्डरीकाक्षस्य भगवतः स्तवनम्। स चात्र समेषां लोकानामीशः तीक्ष्ण-चक्री च कथितस्तथा च—

---

१. देवीभागवते ८।९।१, मनसुखराय मोर, क्लाइव रोड कलकत्ता, १९६०
२. तत्रैव, ८।९।१०
३. वाराहपुराणे पृ० १, खेमराज श्रीकृष्णदास, बाम्बे, सम्वत् १९५९
४. तत्रैव, पृ० ५
५. तत्रैव ९।८
६. वाराहपुराणे, ९।१०

"नमस्ते पुण्डरीकाक्ष, नमस्ते मधुसूदन ।
नमस्ते सर्वलोकेश, नमस्ते तिग्मचक्रिणे ।।१।।[1]

अत्र कतिपय-नामभिर्भगवतः स्तोत्रं चतुर्थ्यन्त-नामभिः सह नमः पदम् । भाषाप्रवाहमयी श्रुतपठितमात्रेण च बोध्या । भावः सर्व-प्रसिद्धः । पौराणिकी चात्र शैली । जनानन्द-दायिनी । पुण्डरीकाक्षस्य प्रधानत्वेननाम-निर्देशः ।

## ७. मुनिपत्नी-कृतं श्रीकृष्ण-स्तोत्रम्

यतोहीदं सान्दीपनमुनिपत्न्या कृतं श्रीकृष्णस्य स्तोत्रम् । पुष्पिकायां चेदमेव नाम । तथा च—

"इति ब्रह्मवैवर्ते महापुराणे श्रीकृष्ण जन्मखण्डे उत्तरार्द्धे नारायण-नारद संवादे मुनिपत्नी-स्तोत्रनामद्व्यधिक शततमोऽध्यायः ।[2]

ब्रह्मवैवर्ते १०२ येऽध्याये १७म श्लोकमारभ्य ३३तमं श्लोकं यावत् । श्लोक-संख्या १७ ।[3] श्रीकृष्णः स्वोपनयनानन्तरं सान्दीपन-मुनेः सकाशमध्येतुं गतः तदा मुनेरनन्तरं तत्पत्नी स्तोत्रं चकार ।

यो नरः पुरायदमिदं स्तोत्रं पठति स श्रीकृष्णे निश्चलां भक्तिं लभते । मूर्खः पण्डितोभवति । यावज्जीवं सुखं प्राप्यान्ते हरेर्दास्यं लभते तथा च तत्रैव —

"इदं स्तोत्रं महापुरायं यः, पठेत् भक्ति-पूर्वकम् ।।१।।
श्रीकृष्णे निश्चलां भक्तिं, लभते नात्र संशयः ।
अस्पष्टकीर्तिः सुयशा, मूर्खो भवति पण्डितः ।।२।।
इहलोके सुखं भुक्त्वा, यात्यन्ते श्रीहरेः पद्म ।
तत्रनित्यं हरेर्दास्यं, लभते नात्र संशयः ।।३।।[4]

अत्रादौ मुनि-पत्नी श्रीकृष्णदर्शनेन स्वजन्म-साफल्यं वर्णयामास । सा चा ब्रवीत् यद् यावत्कृष्णस्य न भवति जनः तावत्सुखंन्नाधिगच्छति । गृहं कारा-गारम् शोकमोहादिबन्धनानि च तावदेव नरं बद्धं सामर्थ्यवन्ति भवन्ति यावज्जनः कृष्णस्य न जायते ।[5]

## ८. रामगीता

रामेणगीतत्वाद्रामगीता ।[6]

---

१. तत्रैव ६।४०
२. ब्रह्मवैवर्ते, पृ० २२८
३. तत्रैव,
४. तत्रैव ४।१-२।३१-३३
५. तत्रैव १७-२१
६. अध्यात्मरामायणे, पृ० ९६९

२६५. श्रीमदनगोपालदेवाष्टकम्, श्लोकाः ९, श्रीविश्वनाथ-ठक्कुरकृतम्, हर्षकरम् ।

२६६. मदनगोपालस्तोत्रम्, श्लोकाः २२ । श्रीरघुनाथगोस्वामिकृतम्, सर्वेष्टदम् ।

२६७. श्रीमधुसूदनस्तोत्रम्, श्लोकाः १६ । श्रीशुकदेव-रचितम्, बृहत्स्तोत्र-रत्नाकरे काशीसंस्करणे । विष्णुलोकदम् ।

२६८. श्रीमुकुन्दमुक्तावली-स्तोत्रम् । श्लोकाः ३० । श्रीरूपगोस्वामिकृतम्, श्रीस्तवकल्पद्रुमे । भक्तिदम् ।

२६९. श्रीरघुनाथमंगलम्, श्लोकाः २१, स्तोत्रार्णवे, मंगलकरम ।

२७०. श्रीरामचन्द्राष्टकम्, श्लोकाः ९ । अमरदास-कृतम्, बृहत्स्तोत्ररत्नाकरे काशीसंस्करणे । श्रीराम-भक्ति-पददायकम् ।

२७१. श्रीराममंगलाशंसनम्, श्लोकाः १६, श्रीवरवरमुनिकृतम्, स्तोत्र-रत्नावल्याम्, मंगलदम् ।

२७२. श्रीरामद्वादशनामस्तोत्रम्, श्लोकाः ७ । ब्रह्माण्डपुराणीयम् स्तोत्रार्णवे । सर्वारिष्टनिवारकम् ।

२७३. श्रीरामकर्मनामाष्टाविंशत्युत्तरशतस्तोत्रम्, श्लोकाः ३६ । स्तोत्रार्णवे, पापविमुक्ति कारकम् ।

२७४. श्रीरामतारावलिस्तोत्रम्, श्लोकाः २४ । स्तोत्रार्णवे । सायुज्यदम् ।

२७५. श्रीरामनामाष्टोत्तरशतनामस्तोत्रम्, श्लोकाः ३९ । आनन्दरामायणे ३।५।१६-५४ । सर्वार्थदम् ।

२७६. श्रीरामानुस्मृतिः, श्लोकाः १५, स्तोत्रार्णवे मृत्युदारिद्र्य-पातक-निवारिका ।

२७७. श्रीव्रजबिहारीस्तोत्रम्, श्लोकाः २०, श्रीस्तवकल्पद्रुमे, हरिप्रीतिदम् ।

२७८. श्रीव्रजराज-सुताष्टकम्, श्लोकाः ८ । श्रीस्तवकल्पद्रुमे, विजयदम् ।

२७९. श्रीवासुदेव-कृत-श्रीकृष्णास्तोत्रम्, श्लोकाः ९ । बृहत्स्तोत्ररत्नाकरयोः ब्र० वै० श्रीकृष्णजन्म खण्डतः संकटघ्नम् ।

२८०. श्रीविष्णु-कवचम्, श्लोकाः ४१ । शाक्तप्रमोदे पृ० ५५५ । अश्वमेघ-यज्ञ फलदम् ।

२८१. श्रीविष्णुकवचम्, श्लोकाः १७ । ब्र० वैवते १।११९।१७-३८ । दुःखघ्नम् ।

२८२. श्रीविष्णुमहिम्नस्तोत्रम्, श्लोकाः ३५, श्रीस्वामिब्रह्मानन्दकृतम् । बृहत्स्तोत्ररत्नाकरयोः । ऐहिकसुखपूर्वकं मोक्षदम् ।

२८३. श्रीविन्दुमाधवाष्टकम्, श्लोकाः ९ । श्रीस्तवकल्पद्रुमे, कीर्तिकरम् ।

२८४. श्रीविष्णुस्तोत्रम्, श्लोकाः २४ । ब्र० वै० १।१४।२३-४३ । भक्तिदम् ।

२८५. श्रीविष्णुस्तवराजः, श्लोकाः १२२। स्तोत्रार्णवे महाभारतात्, देवलोकदम्।

२८६. श्रीविष्णुस्तोत्रम्, श्लोकाः २६। दे० भा० १०।५।२-२७। दारिद्र्यनिवारकम्।

२८७. श्रीसीतारामाष्टकम्, श्लोकाः ९। बृहत्स्तोत्ररत्नाकरयोः स्तोत्ररत्नावल्यां च श्री अच्युतयति-विरचितम्, अनिष्टहरम्।

२८८. श्रीस्तोत्ररत्नम्. श्लोकाः ६०। श्रीयामुनाचार्य-रचितम् श्रीस्तवकल्पद्रुमे भक्तिदम्।

२८९. श्रीहरिकुसुमस्तवकम्, श्लोकाः ११। श्रीरूपगोस्वामिरचितम्, श्रीस्तवकल्पद्रुमे, दुःखहरम्।

२९०. श्रीहरिहरस्तोत्रम्, श्लोकाः ११। स्तोत्रार्णवे। यमभय-निवारकम्।

२९१. श्रीहरिशरणाष्टकम्, श्लोकाः ९। श्रीस्वामिब्रह्मानन्द-रचितम् बृहत्स्तोत्ररत्नाकरे, पृ० ७८। सुखदम्।

२९२. श्रीहरिनाममालास्तोत्रम् श्लोकाः १९। वलिराजेन्द्रोक्तम् श्रीस्तवकल्पद्रुमे। मुक्तिदम्

२९३. संकष्टनाशन-विष्णु स्तोत्रम्, श्लोकाः ३५। पाद्मे कार्तिकमाहात्म्ये २।८७।४-३७। संकष्टहरम्।

२९४. संकष्टनाशनविष्णुस्तोत्रम्, श्लोकाः ५। ६।९८।१-५। संकष्टहरम्।

२९५. सरस्वती-कृत-श्रीविष्णुस्तोत्रम्, श्लोकाः ५। ब्रह्मवैवर्ते १।३।६०-६४। बुद्धिधनादिदम्।

२९६. सर्वजीतब्राह्मणकृतश्रीकृष्णस्तोत्रम्, श्लोकाः १३। पाद्मे ७।१९।५५-६७। दुःखहरम्।

२९७. सर्वदेवकृत-रामस्तोत्रम् श्लोकाः १९। ब्रह्म-वैवर्त-महापुराणे ५।५।१-१९। हर्षदम्।

२९८. सुतीक्ष्ण-कृत-रामस्तोत्रम्, श्लोकाः ११, अध्यात्मरामायणे ३।२।२७-३७। रामभक्तिदम्।

२९९. सोमशर्मकृतविष्णुस्तोत्रम्, श्लोकाः २९, ब्रह्मवैवर्ते २।१९।४७-७५। दुःखहरम्।

३००. स्तवमणिमाला, अध्या० ७, रामभद्रदीक्षित-कृता, सौख्यकरी।

३०१. हरिनामाष्टकम्, श्लोकाः ९। श्रीस्वामिब्रह्मानन्दकृतम् बृहत्स्तोत्र-रत्नाकरयोः। विष्णुपददम्।

३०२. हर्यष्टकम्, श्लोकाः ११। स्तोत्रार्णवे, वलारोग्यादिदम्।

३०३. हरिहरात्मकस्तोत्रम्, श्लोकाः ३५। हरिवंशे विष्णु-पदिदं सर्ववांछितदम् १२५।२९-६३।

षष्ठोऽध्यायः

# सूर्य स्तोत्राणि

## सूर्यः

१. शब्दार्थः

सरति आकाशे सुवति कर्मणि लोकं प्रेरयतीति वेति विग्रहे सृगतौ धातोः सू-प्रेरणे इति धातोर्वा "राजसूय सूर्येत्यादिना पाणनीय-सूत्रेण"[१] क्यपि सिद्ध्यति दर्शितेयं व्युत्पत्तिः शब्दकल्पद्रुम-हलायुध-कोशयोः[२] शब्दवाचस्पत्येऽपि सृ क्यपि दिवाकरे अर्कवृक्षे च[३] निरुक्तेऽपि "सूर्यः सर्तेर्वा सुवतेर्वा स्वीर्यतेर्वेति ।[४] सामान्यतो निम्नलिखिताव्युत्पत्तयः सम्भाव्यन्ते ।

१. सरतीति सूर्यः ।
२. सुवति प्रेरयति कर्मसु चराचरं जगत्स सूर्यः ।
३. सुष्टु ईर्यते संचाल्यते स्वमण्डलमनेनेति ।
४. अथवा स्वीर्यते उपताप्यते जगदनेनेति सूर्यः सूपसर्गकेर् गतौ धातोर्यद्वा स्वृशब्दोपतापत्योः धातोः सिद्ध्यति ।[५]
५. सरतिजानाति व्याप्नोति सर्व जगदितिवा ।
६. सुष्टु इर्यन्ते कम्प्यन्ते स्वीर्यन्त्वे उपताप्यन्ते वा दस्यवेऽनेनेति ।
७. सूते श्रियमिति सूर्यः[६] (उत्पादयतीत्यर्थः) इति विष्णुसहस्रनाम्नः शांकरभाष्ये ।
८. स्वरतिः आर्चतिः कर्मा स्वीर्य्यते अच्यतेभक्तैरिरिसूर्यः निघण्टौ ।[७]
९. सूर्यो जडचेतनात्मकजगत आत्मा तथा च यजुर्वेदे ।

सूर्य आत्मा जगतस्तस्थुषश्च ।[८]

---

१. अष्टाध्याय्याम् ३।१।११४
२. शब्दकल्पद्रुमे ५म भागे. पृ० ३९६ तथा हलायुध-कोशे, पृ० ७७८, सं० जोशी
३. शब्दवाचस्पत्ये ६ भाग, चौ० सं० पुस्तकालय काशी २०१८, पृ० ५३२७
४. निरुक्ते १२।१४
५. अष्टोत्तर शतनाम मालिकायाम् विद्यासागर मिश्र, पृ० ११५
६. विष्णु सहस्रनाम्नि, शांकरभाष्ये श्लो० १०७, गीता प्रेस गोरखपुर, २०१९
७. निघण्टौः ३।१
८. यजुर्वेदे ७ ४२

१०. सूर्यः ज्योतिष्कारको विश्व-प्रकाशकस्तथा चाथर्ववेदे
तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्यः
विश्वमाभासि रोचनम् ।[1]

११. परमभगवतो ब्रह्मणश्चक्षुः सूर्यस्तथा च यजुर्वेदे—
चन्द्रमा मनसो जातश्चक्षोः सूर्योऽजायत[2]

१२. ऋग्वेदे ६।११८।३। ऋचो व्याख्यावसरे सायणः
सरति गच्छति वा सुवति प्रेरयति वा तत्तद्
व्यापारेषु कृत्स्नं जगदिति सूर्यः यद्वा सुष्टु
ईर्यते प्रकाश-प्रवर्षणादि-व्यापारेषु प्रेर्य्यते इतिसूर्यः ।[3]

१३. शोभनवीर्यमस्येति सूर्यस्तथा च तैत्तरीये
सुवीर्योर्मिया यथा गोपाय तत्सूर्यस्य सूर्यत्वम्[4]
सूर्यः सर्वेषां प्राण-दातृत्वेन प्रेरकस्तथा च सायणः
सूर्य सर्वेषां प्राणदातृत्वेन प्रेरकम् आदित्यम्
दृशेर्द्रष्टुं चिरकालं जीवितुम् ।[5]

१४. सूर्यः मार्तण्डः सर्वस्य प्रकाशको देवः ।[6]

१५. यतः सूर्यः शश्वज्जायते शश्वच्चसन्तिष्ठते
तस्मात्सूर्यः कथ्यते, तथा च साम्बपुराणे—
शश्वच्चजायते यस्मात्, शश्वच्चसन्तिष्ठते यतः
तस्मात्सर्वैः स्मृतः सूर्यः मर्मज्ञैर्मनीषिभिः ॥१॥[7]

१६. भगवान्सूर्योभूत-भवद्-भव्यात्मकस्य जगतः प्रभवप्रलय-स्थानम्। स्वात्मानं त्रिधा कृत्वा त्रिषुलोकेषु तिष्ठति। अयमेव असतः सतश्च योनिः क्षराक्षरं तदुभयातीतं ब्रह्म सूर्य एव भूतानां हृदये हृदये ज्वलन-रूपेण तिष्ठति। अस्यतेजः सालोक्यं व्याप्तिमच्च। तथा च बृहद् देवतायाम्।

भवद्भूतस्यभव्यस्य, जंगम-स्थावरस्य च।
अस्यैके सूर्यमेवैकं, प्रभवं प्रलयं विदुः ॥१॥
कृत्वैषत्रिधात्मानं, एषु लोकेषु तिष्ठति।
देवान्यथायथं सर्वान्, निवेश्य स्वेषु रश्मिषु ॥२॥

---

१. अथर्ववेदे १३।२।१६
२. यजुर्वेदे, ३१।१२
३. अथर्ववेदे पृ० ४६
४. तैत्तरीय-ब्राह्मणे २।२।१०।४
५. अथर्ववेदे १।६।३ व्याख्यायाम्
६ तत्रैव, १।१।६।२
७. साम्बपुराणे ६।१८

असतश्च सतश्च चैषा, योनिरेषः प्रजापतिः ।
यदक्षरं च वाच्यं च, यथैतद्ब्रह्म शाश्वतम् ।।३।।
तिष्ठत्येषहि भूतानां, जठरे जठरे ज्वलन् ।
त्रिस्थानं चैनमर्चन्ति, होत्रायां वृक्तबर्हिषु ।।४।।
सालोक्याच्चैष जातत्वात्, व्याप्तिमत्वात्तु तेजसः ।
तस्य तस्येहदेवत्वं, दृश्यन्ते च पृथक् स्तुतः ।।५।।[1]

१७. सूर्यो भूतेषु गच्छति तानि च प्रेरयति प्रोत्साहयति च सर्व कर्मसु तथा च तत्रैव—

सूर्यः सरति भूतेषु, सुवीरयति तानि वा ।
सु ईर्यत्वाय योत्येष, सर्वकर्माणि सन्दधत ।।१।।[2]

१८. यतः सूर्यः सुवीर्यः गोपयति च सर्वान् तथा च तैत्तरीये—

तं देवा अब्रुवन् सुवीर्यो भय्र्या अथ गोपायत इति तत्सूर्यस्य सूर्यत्वम् ।[3]

१९. तपतीति सूर्यः आदित्य-नाम्ना च स्मर्यते तथा च शतपथे—

एष वै सूर्यः य एष तपति[4]

एष वै सूर्यः शुक्रो य एष सूर्यः तपति एष उ एव ब्रह्म[5]

२०. वषद्कारस्वाहाकारादयोऽस्यवाच्यास्तथा च शतपथे

"एषवैवषद्-कारः य एव सूर्यस्तपति ।"[6]

"एषवै स्वाहाकारो य एष सूर्यः तपति ।"[7]

२१. ब्रह्मणस्यतिरप्ययमभिधीयते तथा च यजुर्वेदे—

"एषवैब्रह्मणस्पतिः"[8]

२२. समेषां चक्षुरूपः सूर्यस्तथा च तैत्तरीते ।

"अर्कश्चक्षुस्तदसौ सूर्यः ।"[9]

२३. अयमेव मखपितृ भर्तृ-रूपस्तथा च

"एष वै मखः"[10]

---

१. बृहद्देवतायाम् १।६१।६३, ६३, ६५, ६८
२. तत्रैव ७।१२८
३. तैत्तरीये २।२।१०।४
४. शतपथे ६।४।२।२३
५. तत्रैव ४।५।६।६
६. तत्रैव ११।२।२।५
७. तत्रैव १४।१।३।२६
८. यजुर्वेदे ३७।७
९. तैत्तरीये १।१।७।२
१०. यजुर्वेदे ३७।१

"एष वै पिता ।"[1]
"सहैषभर्ता ।"[2]

२४. सूर्य एव वसुरन्तरिक्षश्च अयमेव होताऽयमेव यमोऽयमेव सर्वान् नियमयति । अयमेव मृत्युः, अयमेव परिवत्सरोऽयमेव देवानां गर्भस्तथा च—

"एषवै वसुरन्तरिक्षः सह"[3]
"एषवै होता वेदिषद्"[4]
"एषवै यमः य एष सूर्यस्तपतितत्तस्यैव"
"हीदं सर्वं यमयत्येतदेवतेनेदं सर्वयतम् ।"[5]
"य एष मृत्युः"[6]
"सूर्यः परिवत्सरः"[7]
"एष वै गर्भो देवानाम्"[8]

## २. प्रमुखनाम्नामर्थाः

(स्तोत्रेषुबहुशः समागतानाम् ।)

(क) सविता—सुवति स्वस्व-व्यापारे जनान्प्रेरयतिति विग्रहे तृचि-निष्पाद्यते ।

(ख) षुञ् अभिषवे षूङ्प्राणिगर्भविमोचने धातुभ्यां निष्पाद्यते एवं च सुनोति सूतेवा चराचरं जगत्सः ।[9]

(ग) यतो धी-शब्दवाच्यं ब्रह्माणं सृष्ट्यार्थं प्रचोदयति सर्वलोकान्सूतेऽतः सविता तथा हलायुधकोशे ।

धीशब्दवाच्यं ब्रह्माणं, प्रचोदयति सर्वदा ।
सृष्ट्यर्थं भगवान्, विष्णुः सविता स तुकीर्तितः ॥१॥
सर्वलोकप्रसवनात्, सविता स तु कीर्त्यते ।
यतस्तद्देवता देवी, सावित्रीत्युच्यते सदा ॥२॥[10]

---

१. यजुर्वेदे ३७।५
२. शतपथे ४।६।७।२१
३. ऐतरेये ४।२०
४. ऋक्वेदे ४।४०।५
५. शतपथे १४।१।३।४
६. शतपथे १०।५।१।४
७. ताण्डायने १७।१३।१७
८. यजुर्वेदे ३७।१४
९. सत्यार्थप्रकाशे, प्रथम संस्करणे १७८५, पृ० १०
१०. हलायुध-कोशे, श्री जयशंकर जोशी, सरस्वती भवन, वाराणसी १८७९, पृ० ७०२

असतश्च सतश्च चैषा, योनिरेषः प्रजापतिः ।
यदक्षरं च वाच्यं च, यथैतद्ब्रह्म शाश्वतम् ।।३।।
तिष्ठत्येषहि भूतानां, जठरे जठरे ज्वलन् ।
त्रिस्थानं चैनमर्चन्ति, होत्रायां वृक्तवर्हिषु ।।४।।
सालोक्याच्चैष जातत्वात्, व्याप्तिमत्वात्तु तेजसः ।
तस्य तस्येहदेवत्वं, दृश्यन्ते च पृथक् स्तुतः ।।५।।[1]

१७. सूर्यो भूतेषु गच्छति तानि च प्रेरयति प्रोत्साहयति च सर्व कर्मसु तथा च तत्रैव—

सूर्यः सरति भूतेषु, सुवीरयति तानि वा ।
सु ईर्यत्वाय योत्येष, सर्वकर्माणि सन्दधत ।।१।।[2]

१८. यतः सूर्यः सुवीर्यः गोपयति च सर्वान् तथा च तैत्तरीये—

तं देवा अब्रुवन् सुवीर्यो मर्या अथ गोपायत इति तत्सूर्यस्य सूर्यत्वम् ।[3]

१९. तपतीति सूर्यः आदित्य-नाम्ना च स्मर्यते तथा च शतपथे—

एष वै सूर्यः य एष तपति[4]

एष वै सूर्यः शुक्रो य एष सूर्यः तपति एष उ एव ब्रह्म[5]

२०. वषट्कारस्वाहाकारादयोऽस्यवाच्यास्तथा च शतपथे

"एषवैवषट्-कारः य एव सूर्यस्तपति ।"[6]

"एषवै स्वाहाकारो य एष सूर्यः तपति ।"[7]

२१. ब्रह्मणस्यतिरप्ययमभिधीयते तथा च यजुर्वेदे—

"एषवैब्रह्मणस्पतिः"[8]

२२. समेषां चक्षुरूपः सूर्यस्तथा च तैत्तरीते ।

"अर्कश्चक्षुस्तदसौ सूर्यः ।"[9]

२३. अयमेव मखपितृ भर्तृ-रूपस्तथा च

"एष वै मखः"[10]

---

१. बृहद्देवतायाम् १।६१।६३, ६३, ६५, ६८
२. तत्रैव ७।१२८
३. तैत्तरीये २।२।१०।४
४. शतपथे ६।४।२।२३
५. तत्रैव ४।५।६।६
६. तत्रैव ११।२।२।५
७. तत्रैव १४।१।३।२६
८. यजुर्वेदे ३७।७
९. तैत्तरीये १।१।७।२
१०. यजुर्वेदे ३७।१

"एष वै पिता ।"[1]

"सहैषभर्ता ।"[2]

२४. सूर्य एव वसुरन्तरिक्षश्च अयमेव होताऽयमेव यमोऽयमेव सर्वान् नियमयति । अयमेव मृत्युः, अयमेव परिवत्सरोऽयमेव देवानां गर्भस्तथा च—

"एषवै वसुरन्तरिक्षः सह"[3]

"एषवै होता वेदिषद्"[4]

"एषवै यमः य एष सूर्यस्तपतितत्तस्यैव"

"हीदं सर्वं यमयत्येतदेवतेनेदं सर्वयतम् ।"[5]

"य एष मृत्युः"[6]

"सूर्यः परिवत्सरः"[7]

"एष वै गर्भो देवानाम्"[8]

## २. प्रमुखनाम्नामर्थाः

(स्तोत्रेषुबहुशः समागतानाम् ।)

(क) सविता—सुवति स्वस्व-व्यापारे जनान्प्रेरयतिति विग्रहे तृचि-निष्पाद्यते ।

(ख) षुञ् अभिषवे षूङ्प्राणिगर्भविमोचने धातुभ्यां निष्पाद्यते एवं च सुनोति सूतेवा चराचरं जगतसः ।[9]

(ग) यतो धी-शब्दवाच्यं ब्रह्माणं सृष्ट्यार्थं प्रचोदयति सर्वलोकान्सूतेऽतः सविता तथा हलायुधकोशे ।

धीशब्दवाच्यं ब्रह्माणं, प्रचोदयति सर्वदा ।
सृष्ट्यर्थं भगवान्, विष्णुः सविता स तुकीर्तितः ।।१।।
सर्वलोकप्रसवनात्, सविता स तु कीर्त्यते ।
यतस्तद्देवता देवी, सावित्रीत्युच्यते सदा ।।२।।[10]

---

१. यजुर्वेदे ३७।५
२. शतपथे ४।६।७।२१
३. ऐतरेये ४।२०
४. ऋक्वेदे ४।४०।५
५. शतपथे १४।१।३।४
६. शतपथे १०।५।१।४
७. ताण्डायने १७।१३।१७
८. यजुर्वेदे ३७।१४
९. सत्यार्थप्रकाशे, प्रथम संस्करणे १७८५, पृ० १०
१०. हलायुध-कोशे, श्री जयशंकर जोशी, सरस्वती भवन, वाराणसी १८७९, पृ० ७०२

(घ) "सर्वस्य प्रसविता सवितेति"[1] निरुक्ते ।

(ङ) सर्वस्य जगतः प्रसविता सवितेत्युक्त्वाऽचार्यशंकरोऽप्यर्थमिमं मनुते ।[2] विष्णु-पुराणेऽपि—

"प्रजानां प्रसवनात्सवितेति निगद्यते ।[3]"

(च) सर्वस्य प्राणि-जातस्य प्रेरको देवः यद्वाभिमतसाधनस्य दाता तथा च तैत्तरीये—

सवितारमेव स्वेनभागधेयेनोपधावति स ए वास्मै सनिप्रसुवति ।[4]

(छ) साम्बपुराणे-स्रवणात्स्यन्दनाच्च सविता तथा च—

स्रवन्ति स्यन्दनार्थे, च धातुरेष निगद्यते ।
स्रवणात्तेजसोऽद्धा, च तेनासौ सविता स्मृतः ।।१।।[5]

(ज) यतोऽयं दिवाकरं प्रसौति उदितश्च लोकानवभासयति स्वमयूरवैंरतः सविता तथा च वृहद्देवतायांमिति—

दिवाकरं प्रसौत्येकः, सवितातेन कर्मणा ।
उदितो भासयंल्लोकान् इमांश्चैवस्वरश्मिभिः ।।१।।[6]

(झ) देवानां समुत्पादकः सवितृत्वात्सविता तथा च शतपथे—

सविता देवानां प्रसविता ।[7]

अयमेवार्थ ऐतरेयेऽपि—

सविता वैप्रसवानामीशे ।[8]

ताण्डायनेऽपि—"एताभिवैं रत्निभिः सवितासर्वस्य प्रसवगंच्छत"[9] (अत्र सर्वशब्द प्रयोगः)

(ञ) तपनशीलः सूर्यएव सविता तथा च शतपथे—

असौ वैसविता य एष सूर्यस्तपति[10]

(ट) अग्निरपि तथा च जैमनीये—

अग्निरेव सविता स प्रजापतिः[11]

---

१. निरुक्ते १०।३१
२. विष्णुसहस्रनाम्नि १०७ श्लो०, गीता प्रेस गोरखपुर, २०१६
३. विष्णुपुराणे १।३०।१५, शा० भा० विष्णु सहस्रनाम्निघृतम्
४. तैत्तरीये २।१।६।३
५. साम्बपुराणे ६।१२, खेमराज बाम्बे
६. बृहद्देवतायाम् २।६२
७. शतपथे १।१।२।१७
८. ऐतरेये १।३०।७।१६
९. ताण्डायने २४।१५।२
१०. शतपथे ३।२।३।१८
११. जेमिनीये उ० ४।२७।१

(ठ) विद्युदपि सवितृशब्दार्थस्तथा च गोपथजैमिनीययोः—
विद्युदेव सविता[1] स्तनयित्नुरेव सविता[2]

(ड) वायिन्दु-यज्ञ-पृथ्वीवेदा सवितृ शब्दवाच्याः। तथा च—
वायुरेवसविता[3]
चन्द्रमा एव सविता[4]
यज्ञ एव सविता[5]
इयं पृथिवी सविता[6]
वेदा एव सविता[7]

आदित्यः—

(क) "अदितेरादित्यस्या वाऽपत्यं पुमानित्यर्थेदित्यादित्य"[8] इति पाणिनीयसूत्रेण आदित्यः सिद्ध्यति।

(ख) दो अवखण्डने धातोक्तिनिदितिः सिद्ध्यति विनाशशीलेत्यर्थः न सा ण्यत् प्रत्यये चादित्यः।[9]

(ग) न विद्यते विनाशो यस्यासावयमादित्यस्तस्य आदित्यः।[10]

(घ) आदित्यः कस्मात् आदत्ते रसान् आदत्तेमासम् ज्योतिषा आदीप्तोभासेति निरुक्ते।[11]

(ङ) अदित्यां कश्यपाद् वामन-रूपेण जात आदित्यः अर्थेनानेन विष्णुरभिधीयते।[12]

(च) योऽन्तर्हिरण्यमय-पुरुषः दृश्यते स आदित्यस्तथा च छान्दोग्ये—
य एषोऽन्तरादित्येहिरण्यमयः पुरुषो दृश्यते।[13]

(छ) सर्वं वा अत्तीति तददितेरदितित्वम् सर्वस्यैवात्ता भवति सर्वम-

---

१. गोपथे १।३३
२. जै० उतरीये ४।२७।६
३. गो० पू० १।३३
४. तत्रैव १।३३
५. तत्रैव १।३३
६. शतपथे १३।१।४।२
७. गो०, पू० १।३३
८. अष्टाध्याय्याम् ४।१।८५
९. सत्यार्थप्रकाशे प्र० सं०, पृ० २६
१०. तत्रैव, पृ० ५, स्त० २
११. निरुक्ते २।१३
१२. विष्णुसहस्रनाम्नि, श्लो० १३शां० भाष्ये
१३. छान्दोग्योपनिषदि १।१।६०

स्यान्नं भवति य एवमदिते रदितित्वम् ।"[१]

(ज) अदितिर्विनाशरहिता ब्रह्मविद्या तस्याः पुनः तल्लभ्यत्वात् आदित्यास्तथा च वाल्मीकीये "दितिर्नाशो न विद्यते यस्या सादितिर्ब्रह्मविद्या पुत्रस्तल्लभ्यत्वात् ।[२]

(झ) आदित्यः परमात्मा तथा च यजुर्वेदे

वरामहौ असि सूर्यवआदित्यमहौ असि ।
महस्तेसतो महिमा वनस्पते द्वादेवमहौ असि ।[३]

(ञ) अदनान्नित्यमादित्यस्तपसां तेजसामयम् ।
अदितेर्वासुतोयस्मात् निगमज्ञैरुदाहृतः ।।१।।[४]

**भगः**—भजनीयः भाग्यस्य प्रदाता देवस्तथा च तैत्तरीये—

भगोह् दाता भग इति प्रदाता ।[५]

**चित्रराधः**—

चित्रंराघोयस्यसः । यस्मात्सूर्ये बहुविधं धनं विद्यते तस्माच्चित्रराध इति कथ्यते" तथा च यास्कः ।

राध इति धननाम राघ्नुवन्ति अनेनेति राधा ।[६]

चित्रबहुविधं धनं राधः यस्य स रध्धातोरसुनि रूपम् ।

**भानुः**—

प्रेरणार्थकनुद्धातुः भा च दीप्त्यर्थक एवंच भानुः प्रेरको जगत्प्रकाशकश्च तथा च साम्बपुराणे

नुदति प्रेरणेधातु र्भादीप्तौ च कथ्यते ।
नोदनात्कारणद् भासा, भानुरित्यमिघीयते ।।१।।[७]

**चित्रभानुः**—

यस्य प्रकाशः प्रेरणा च चित्र-विचित्र-वर्णादिभिर्भवति स चित्रभानुः कथ्यते । तथा च—

'चित्राहि भानवो यस्य, वर्णैः शुक्लादिभियतः ।
भानवोरश्मयः प्रोक्ता, चित्रभानुस्ततः स्मृतः ।।१।।[८]

**अर्कः**—अर्वनसाधनभूतमुदकं, अर्चनसाधनभूतो मन्त्रः स्तुतशस्त्रादिलक्षणश्च यत्र । तथा चाथर्ववदे—

---

१. शतपथे १०।६।५।५
२. वा० रामायणे ६।११५, आदित्यहृदयस्तोत्रे
३. यजुर्वेदे ३३।१३
४. साम्बपुराणे ६।१६
५. तैत्तरीये ३।१।६।८
६. निरुक्ते ४।४
७. साम्बपुराणे ६।२०
८. साम्बपुराणे ६।२१

उदीरयतमरुतस्त्वेषो अर्कः नम उतपात्याय[1]

**अत्र सायणः—**

"अर्कः अर्चनसाधनभूतमुदकम् । अर्चनसाधनभूतो मन्त्रः स्तुतशस्त्रादि-लक्षणः ।"[2]

**पूषन्—**

अयं क्षितिं पुष्णाति रश्मिभिश्च तमो विनाशयति अतः पूषेति कथ्यते । तथा वृहद् देवतायाम्—

पुष्णन् क्षितिं पोषयति प्रणुदन् रश्मिभिस्तमः ।
तेनैनमस्तौत्पूषेति भरद्वाजस्तु पंचभिः ।।१।।[3]

**केशी—**

यतोऽयं सायं कृत्वाऽन्यत्रगच्छति प्रातश्चोदयं प्राप्य किरणैः प्रकाशयति अतः केशीत्युच्यते ।

कृत्वा सायं पृथक् याति, भूतेभ्यस्तमसोऽत्यये ।
प्रकाशं किरणैः कुर्वन्, तेनैनं केशिनं विदुः ।।१।।[4]

तथा च निरुक्ते—

"केशाः रश्मयस्तैस्तद्वान् भवति काशनात् प्रकाशनात् वा ।[5]

**विश्वानर—**

यतोऽयं नरान् विश्वस्मिन्नयति नराश्चैनं विश्वस्न्नियन्ति । अतो विश्वानरोऽयं कथ्यते । तथा च—

सम्प्रत्येककैशः कृत्वा तेनायन्मनयन्ते पृथङ् नरान् ।
विश्वे विश्वानरस्तेन कर्मणा स्तुतिषु स्तुतः ।।१।।[6]
विश्वान् नरानूनयति विश्व एननरानयतीति वा ।[7]

पतंगः—पतंगच्छतीति पतंगः केचन सौर्यम् मन्यन्ते केचन मायामात्रम् तथा च वृहद्देवतायाम्—

ऋषिर्जंगी पतंगस्तु, पतंगमिति यत्परम् ।
तत्सौर्यमेके मन्यन्ते, मायामेव तथा परे ।।१।।[8]

वृषाकपिः

(क) यतोऽयं कपिलोभूत्वानाकमधिरोहति । रश्मिभिः कम्पयन्नेति वर्षणशीलश्च तस्माद् वृषाकपिः । सायंभूतानि स्वापयन्नस्तं गच्छति तस्माद्

---

१. अथर्ववेदे ४।१५।५
२. तत्रैव ४।१५।५ । व्याख्यायाम्
३. बृहद्देवतायाम् २।६३
४. तत्रैव २।६५
५. निरुक्ते ७;२१
६. बृहद्देवतायाम् १।६६
७. निरुक्ते ७।२१
८. बृहद्देवतायाम् ८।७५

वृषाकपि स्तथा च—

वृषैष कपिलोभूत्वा, यन्नाकमधिरोहति।
वृषाकपिरसौ तेन, विश्वस्मादिन्द्र उत्तरः ।।१।।
रश्मिभिः कम्पयन्नेति, वृषावर्षिष्ठएवसः ।
सायाह्न-कालेभूतानि, स्वापयन्नस्तमेति यः ।।२।।
वृषाकपिरिति वास्यात्, इति मन्त्रेषु दृश्यते ।[1]

यतो रश्मिभिः कम्पन्नेति ततो वृषाकपिस्तथा च निरुक्ते—
यद्रश्मिभिः अभिकम्पयन्न एति तद्वृषा-कपिः भवति वृषाकम्पनः ।[2]

मित्रः

मीतेर्मरणात्त्रायते इति मित्रः प्रमीतेः त्रायते[3] तैत्तरीये च—

सर्वस्यमित्रत्वान्मित्रः तथा च
सर्वस्याहं मित्र अस्मि[4]

## ३. माहात्म्यम्

प्रथमाध्याये देवानामाध्यात्मिकाधिदेविकाधिभौतिक-स्वरूप-निरूपणावसरेऽत्रैव शब्दार्थ-प्रकरणे च सूर्याराधनस्य महत्त्वं दर्शितम्। अस्य माहात्म्यं विरस्तरशो वर्षशतैरपि वक्तुं न शक्यते। जगति न किंचिदेतादृशं कार्यजातंमैहिकामुष्मिकव्वाविद्यते यदस्याराधनेन न सिद्ध्यति। तत्रापिस्वास्थ्य विषयकम्। निखिलं जगदस्मादेव जायते। त्रिलोकस्य परमं दैवतंमूलं सूर्य एव नात्र सन्देहः। सूर्यादेव जगत्प्रभवति पाल्यते तत्रैव च प्रलीयते। अग्नौ दत्ताहुतिरादित्यमुपतिष्ठते। तस्माच्च जलवृष्टि ायते। ततश्चान्नं ततः प्रजापोषणम् भवति तथा च ब्रह्म-पुराणे—

आदित्यमूलमखिलं, त्रैलोक्यं मुनि-सत्तमः।
भवत्यस्माज्जगत्सर्वं, सदेवासुरमानुषम् ।।१।।
सर्वात्मा सर्वलोकेशो, देवदेवः प्रजापतिः।
सूर्य एव त्रिलोकस्य, मूलं परम-दैवतम् ।।२।।
सूर्यात्प्रसूयते सर्वं, तत्रचैव प्रलीयते।
भावाभावौ हि लोकानां, आदित्यान्निःसृतौपुरा ।।३।।

---

१ बृहद्देवतायामृ २।६७ ६८
२. निरुक्ते १२।२०
३. तत्रैव १०।२१
४. तैत्तरीये ६।४।८१

अग्नौप्रत्ताहुतीः सर्वाः, आदित्यमुपतिष्ठते ।
आदित्याज्जायते वृष्टिः, वृष्टेरन्नंततः प्रजाः ॥४॥[1]

अयमात्मानं द्वादशमासेषुद्वादशधाविभज्यविभिन्न नामभि जंगदवति तथा च भविष्ये ।

इन्द्रोविवस्वान्पूषा च, त्वष्टा च सविता तथा ।
भर्गोऽशुमानर्यमार्क-पृश्निमार्तण्ड एव च ॥१॥
इत्यैकादश एवैते, द्वादशो विष्णुरुच्यते ।[2]

न केवलं पुराणादिष्वेवापितु निखिल-ज्ञानराशि-वेदेष्वपि सूर्यस्यमाहात्म्य-मस्ति । तत्रायं प्रजा-पालकः सवितृरूपेण द्यावापृथिव्योर्मध्य-प्रदेशे उदयास्ते कुर्वन् चरति । वस्तुतोऽयं स्वयमनुत्पाद्यमानः सर्वात्मकः सूर्यः चराचररूपेण विजायते स्वेन योगवलेन । जितमनसो विकाराः महात्मान एनं द्रष्टुं पारयन्ति । तथा च महानारायणोपनिषदि—

प्रजापतिश्चरति गर्भेऽन्तर्जायमानोबहुधाविजायते ।
तस्य धीरापरिजानन्तियोनिम्, मरीचीनोपदमिच्छति बेधाः ॥१॥[3]

द्यावापृथिवी उत्पादयन् प्रकाशमानोदेवः सूर्यः सर्वता धर्माधर्माभ्यां वास-नाख्यैः पतत्रैजंगत्सर्वं वशीकरोति तथा च तत्रैव—

विश्वतश्चक्षुरुतविश्वतोमुखो, विश्वतोहस्त उत विश्वतस्पात् ।
संबाहुभ्यां नमति पतत्रै, र्द्यावाभूमी जनयन्देवएकः ॥१॥[4]

सूर्य एव सर्वेभ्योऽग्रेजाते द्यावापृथिवी दाधार। तथा च तत्रैव—

हिरण्यगर्भः समवर्तत्ताग्ने, भूतस्यजातः पतिरेक आसीत् ।
स दाधार पृथिवीं द्यामुतेमां, कस्मैदेवाय हविषाविधेम् ॥१॥[5]

सूर्याः प्रजानां पोषको जगतोऽनुग्रह-कारकः । नृणां शुभाशुभकर्मणां साक्षि रूपेण विवेचकः धनदश्च तथा च तत्रैव—

विधर्तारं हवामहे, वसोविद्वनाति नः, सवितारं नृचक्षुषम् ॥[6]

एक एवायं त्रिधा विश्वजतेसप्राज्ञ रूपेण व्याकृत्या जगत्निर्माति तथा च तत्रैव—

---

१. ब्रह्मपुराणे ३१।१, ३, ५, ४
२. भविष्यपुराणे १५६।४
३. महानारायणोपनिषदि १।३
४. तत्रैव १।१३
५. तत्रैव १।१
६. तत्रैव १२।६

त्रिधा हितं पणिभिर्गुह्यमानं गवि देवासो घृतमन्वविदम् ।
इन्द्र एकः सूर्य एकं जजान, वेनोदकस्वधयानिष्टतक्षुः ।।[1]

वर्तुलाकार-मण्डलस्थः सूर्यस्तपति तत्रैव वेदभागे प्रसिद्धा ऋचो वर्तन्ते । ऋचा निष्पादितं मण्डलमादित्यश्च ऋचा ऋगभिमानिनां देवानां निवास-स्थानं । तत्र मण्डले वर्तमानस्य देवस्य स्वरूपं ध्येयम् । यतः सर्वेषां निवासभूमिः । तथा च महानारायणोपनिषदि—

आदित्योवा एष एतन्मण्डलं तपति, तत ऋचः तदृचां मण्डलं स ऋचां लोकोऽथ य एष एतस्मिन् मण्डलेर्चिः दीप्यते तानि सामानि स साम्नोलोकोऽथ य एष एतस्मिन्मण्डलेऽर्चिषि पुरुषस्तानि यजूंषि । स यजुषा मण्डलः स यजुषां लोकः सैषात्रय्येवविद्या तपति य एष अन्तरादित्ये हिरण्मयः पुरुषः ।[2]

जगदुत्पत्त्यादि कारणभूते सूर्ये सकलं पापं हूयते स चाक्षरः तद्रसम् मधु क्षरति तद्रसमापोज्योतिः। क्षरणरहितोदेवः नित्यः स्वयं प्रकाशः लोकोपकारार्थ गगनमार्गेणगच्छन् रसमुदकं वहति सत्यं ब्रह्म-स्वरूपश्च तथा च—

सूर्यश्च मा मन्युश्च मन्युपतयश्च
मन्युकृतेभ्यः पापेभ्यो रक्षन्तां
यद्रात्र्या पापमकार्ष मनसावाचा हस्ताभ्यां
पद्भ्यामुदरेण शिश्ना रात्रिस्तदवलुम्पतु
यत्किंच दुरितं मयि तत्सर्वमक्षय्यममृतमये
ज्योतिषि जुहोमिस्वाहा ।[3]

सूर्यः छात्राणां सौभगः दुःस्वप्नादिनाशकस्तथा च—

आद्यानो देव सवितः प्रजावत्साविः सौभगम् परा दुःस्वप्नियं सुव ।[4]

भगवान्सूर्यो ज्ञानप्रतिबन्धकप्रत्यवायाद्यात्मकविघ्नराशीः नाशयति । मंगलं च यच्छति । महानारायणोपनिषदि—

विश्वानिदेव सवितर्दुरितानि परासुव
यद्भद्रंतन्न आसुव ।[5]

अयमेव प्रातर्मध्यसायंकालीनां मेधांददाति । प्रजाः तेजांसि सर्वारायन्यानि च ददाति । तथा च तत्रैव—

त्वं नो मेधे प्रथमा गेभिरश्वेभिरागहि त्वं सूर्यस्य रश्मिभिः त्वं नो

---

१. महानारायणोपनिषदि १२।११
२. तत्रैव १४।१
३. तत्रैव ३२।१
४. तत्रैव ३६।३
५. तत्रैव ३६।४

असि यज्ञियाः ।[1]

मेधां सायं मेधां प्रातर्मेधां मध्यन्दिनं परिमेधांसूर्यस्य
रश्मिभिः वचसा वशयामहे ।[2]

अयमादित्यरूपेणोष्ण-रश्मिभिः सन्तापं करोति तैःभूमिस्था अप आदाय वर्षति वर्षाभिश्च फल-धान्यादीनि जायन्ते तैः पोषिताः बलवन्तो बलेन च वर्ग-चतुष्टयं साध्यते । एवं च वर्ग-चतुष्टयं सूर्यादेव सिद्ध्यति । तथा च तत्रैव—

याभिरादित्यस्तपति रश्मिभितस्माद्धि पर्जन्योवर्षति पर्जन्येनौषधिवन-स्पतयः प्राजायन्त । औषधवनस्पतिभरन्नं भवत्यन्नेनप्राणाः प्राणैर्बलम् बलेनतपः तपसा श्रद्धा श्रद्धयामेधा मेधया मनीषा मनीषया मनः । मनसा शान्तिः शान्त्या चित्तं चित्तेन स्मृतिः स्मृत्या स्मारं, स्मारेण विज्ञानं विज्ञानेनानन्दो ब्रह्मयोनि ।[3]

सर्वप्राणिनांपोषकः रश्मिभिर्जलधारकः सूर्य एव सर्वैः नमस्कार्यः । स जनं ब्रह्मणा संयोजयति तथा चर्क्संहितायां—

दिव्यः गन्धर्व्योभुवनस्य, यस्य यस्पतिरेक एवनभस्यः
तं त्वांयौमिब्रह्मणादित्यदेव, नमस्तेऽस्तु दिवि ते सधस्थम् ।[4]

एवं च भगवान्सूर्यः सर्वदो रोगनाशकः संस्कृत-वाङ्मयस्य महिमा-भरैर्व्याप्तम् दृश्यते पुराणेषु स्तोत्रेषु चान्यत्र च सर्वत्रचास्य महत्त्वमुद्घुष्टम् । अस्याराधनया कुष्टरोगनिवृत्तिः साहित्य-शास्त्रेप्रसिद्धमयूरनामकवेः साम्बपुराणे च स्पष्टमस्य रोगविनाशकत्वमुक्तम् । भविष्यपुराणे ७२, ७३, तमयोरध्याययोश्च कथा द्रष्टव्या । तथा च—

अस्मिच्छप्ते निमित्तेऽसौ पित्राजाम्बवतीसुतः
प्राप्तवान्कुष्ठरोगित्वं विरूपत्वं च भारत ।।१।।

ततः शापाभिभूतेन, सम्यगाराध्यभास्करम्
साम्बेनाप्तं तथारोग्यं रूपं च परमंपुनः ।।२।।[5]

अत्रैवैकनवतितमाध्याये सर्वरोग-निवृत्तिरस्याराधनेनोक्ता तथा च—

समुक्तः सर्वरोगैस्तु गच्छेद्दिनकरालयम् ।
तस्मादपि व्रजेल्लोकं, फुंकाराखहेतिनः ।।१।।[6]

साम्बपुराणेऽपि मित्र-कृत-सूर्य-स्तोत्रेऽर्थोऽयमभिहितः तथा च—

---

१. महानारायणोपनिषदि, ३६।७।२
२. तत्रैव ३६।७
३. तत्रैव ७६।१५
४. अथर्ववेदे २।२।१
५. भविष्यपुराणे ब्र० प० ७४।४३-४४
६. तत्रैव ६१।६

मुच्येतार्तस्तथा रोगात्, मुने श्रुत्वा कथामिमाम्,
जिज्ञासुर्लभते ज्ञानं, गतिमिष्टां तथैव च ॥१॥[1]

वाल्मीकीये युद्ध-काण्डे रावण-विजयार्थं राम एनं तुष्ठाव महाभारते चादित्यहृदयं स्तोत्रं प्रसिद्धम् ।

## ४. स्वरूपम् (वैदिकम्)

सूर्यस्तोत्र-निरूपणे वैदिकवाङ्मयेऽस्य स्वरूपनिरूपणमावश्यकं यतस्तस्य वेदमूलत्वादेव प्रामाण्यम् सर्वैरिष्टम्। तत्र प्रथमाध्यायेऽस्य स्वरूपनिरूपणावसर आध्यात्मिकादिप्रतीकरूपमभिहितम । वैदिकसाहित्ये भगवतः सूर्यस्य वर्णनं वैशद्येनोपलभ्यते । अयं जडचेतनोभयात्मक-जगत आत्मा तथा चर्क्-संहितायां "सूर्य आत्मा जगतस्थुषश्च"[2] सूर्योपनिषद्यपिब्रह्मादयोऽस्यैव भेदा इत्युक्तम् । तथा च—

एष ब्रह्मा च विष्णुश्च रुद्र एष हिभास्करः[3]

वृह्दारण्यकोपनिषदि चापि कथितं यदादित्येऽवतिष्ठते आदित्यादभिन्नं य आदित्यो न वेदादित्यो यस्य शरीरम् य आदित्ये तिष्टन् नियमयति । स एवाविनाशी आत्मा तथा च—

"य आदित्येतिष्ठन् आदित्यादन्तरोऽयं आदित्यो न वेद यस्यादित्यः शरीरं य आदित्यमन्तरोऽयमयत्येष त आत्माऽन्तर्याम्यमृतः"[4] इति ।

समस्तं जगतसूर्यादेवजायते पर्जन्योऽन्नम् सर्वसूर्य एव सूर्यो ब्रह्मविष्णु रुद्रर्क् साम यजुरथर्वरूपाञ्चमहाभूनानां जनकस्तथा च सूर्योपनिषदि—

"सूर्याद्वैखलु इमानि भूतानि जायन्ते सूर्याद्यज्ञः पर्जन्योऽन्नमात्मा नमस्त आदित्य । त्वमेवप्रत्यक्षं कर्म कर्तासि । त्वमेवप्रत्यक्षं ब्रह्मासि । त्वमेव प्रत्यक्षं विष्णुरसि । त्वमेवप्रत्यक्षं रुद्रोऽसि । त्वमेवप्रत्यक्षं ऋगसि त्वमेवप्रत्यक्षं यजुरसि··· आदित्याद् भूमिर्जायते। आदित्यादापोजायन्ते ।···आदित्यो ब्रह्मेति ।"[5]

सूर्याद्भवन्तिभूतानि, सूर्येण पालितानि तु ।
सूर्ये लयं प्राप्नुवन्ति, सूर्योऽसौग्रहमेव च ॥१॥[6]

महानारायणोपनिषदपि कथयति, यद्दीप्यमान आदित्यरूपस्त्वष्ट्रा परमेश्वरस्य रूपं। विशेषेणे सम्पादयन् पर्तते । जगतसृष्टिकाले तस्मातपरमात्मनो

---

१. साम्बपुराणे ५।३६, खेमराज, श्रीकृष्णदास बाम्बै
२. ऋक्संहितायाम् १।११५।१
३. सूर्योपनिषद, अप्रकाशित, भारतीय प्रतीकविद्या, पृ० १६३
४. बृहदारण्यकोपनिषदि ३।७९
५. सूर्योपनिषदि
६. तत्रैव, पृ० ५५

लब्धप्रकाशादादित्यात् तमोग्रस्तस्य प्रपंचस्य प्रकाशात्मकं देवत्वं सर्वत उत्पन्नम् तथा च—

अद्भ्यः सम्भृतः पृथिव्यैरसाच्च विश्वकर्मणः समवर्ततताग्रे ।
तस्यत्वष्ट्राविदधद्रूपमेति तत्मर्त्यस्य विश्वमाजानमग्रे ॥१॥[1]

ज्ञानरूपं धनदाता सूर्य एव ब्रह्म स च सकल-जगतां बुद्धिं-प्रेरयिता, नारायामाचार्यस्तत्त्वविद्या-प्रवक्ता तथा च तत्रैव—

विधर्तारहवामहेवसोः, कुविद् घनातिनः, सवितारं नृचक्षुषम् ।[2]

तेजस्स्वरूपः सूर्य एव जयते, ओजः रूपं शोभा बलं प्राणाः शक्तिः यागादि-निमित्तकीर्तिः दर्शनहेतु-चक्षुः श्रोत्रमात्मा मनोर्मन्युर्ज्ञानं मृत्युः सत्यासत्ये सर्व सूर्य एव तथा च तत्रैव—

"आदित्यो वैतेजः, औजोबलं यशश्चक्षुः श्रोत्रमात्मा मनोमन्युर्मनुर्मृत्युः सत्योमित्रो वायुराकाशः प्राणो लोकपालः, कः किंतत्सत्य मन्नममृतो जीवो विश्वं वातमः स्वयम्भूर्ब्रह्मै तदमृतम्, एष पुरुष एव भूतानामधिपतिर्ब्रह्मणः सायुज्य-सलोकतामाप्नोति य एवं वेद ।[3]

प्रकाशकः सूर्वोवृष्टि-हेतुर्वीर्यसम्पन्नो विश्वस्य सर्गस्थितिप्रत्यवहार-हेतुरेनमुद्दिश्य तपश्चरन्ति मुनयः नैवेद्यरूपेण मधु समर्पयन्त्यस्मै, अर्चितः सन्नयं फलार्थिने मधु सुधां यच्छति । आपोव्याप्तिगुणयुक्तः जगदुपादान-भूर्भुवः स्वरिति व्याहृति-त्रयेण प्रतिपाद्यः तथा च तत्रैव —

'घृणि. सूर्यः । आदित्यमर्चयन्ति । तपः सत्यंमधुक्षरन्ति तद्ब्रह्मतदादाय आपो ज्योतिरसोमृतं ब्रह्मभूर्भुवः स्वरोमिति ।[4]

अथर्ववेदे च सूर्यो जगत्पिता नामधारक एक एव तथा च—

स नः पिता जनिता स उतबन्धुः, धामनि वेद भुवनानिश्रिया ।
योदेवानां नाम य एकएव तसंप्रश्नं भुवना यन्ति सर्वा ॥[5]

निरुक्तेऽपि —

धामानि कर्मफलभूतस्वर्गादि स्थानानि त्रयाणि धामानभवन्ति, स्थानानि नामानि, जन्मानीति ।[6]

तैत्तरीये च—

---

१. महारामायणोपनिषदि १।१, मैसूर
२. तत्रैव १२।६
३. तत्रैव १५।१
४. तत्रैव १५।२
५. अथर्ववेदे २।२।३
६. निरुक्तम् ६।२८

सर्वाणि रूपाणि विचिन्त्य धीरः।
नामानि कृत्वा अभिवदन्यदास्त ।।[१]

द्युस्थः सूर्यादेव सम्बन्धिक्रोधनिवारकः सुखदश्च भुवनानाम्पतिरक एव तथा च—

दिविस्पृष्टः यजतः सूर्यत्वमवयाताहरसोदैव्यस्य ।
मृडात् गन्धर्वो भुवनस्य, यस्पतिरेक एवैनमस्यः सुशेवः ।।[२]

ऋग्वेदे स्पष्टतः सूर्यस्यानेकधोल्लेखः इन्द्रशब्देनापि अयं स्मृतः। सूर्यात्मक इन्द्रस्तथैव तेजांसि चालयति यथा सारथिः रथम् । तथा चर्क्-संहितायाम्—

स सूर्यः पपुरुवरां स्येन्द्रो ववृत्याद्रथ्येव चक्रा,
अतिष्ठन्तमपश्यं न सर्गं, कृष्णतमांसि विष्या जघान ।।१।।[३]

अनेकमन्त्रेषु नाभिस्थः (मध्यस्थः) लोकान्धारयति । भुवनस्य प्रजापतिस्तौति निगदितस्तथा च—

दिवो धर्ता भुवनस्य प्रजापतिः ।[४]
यत्रेमा विश्वाभुवनानितस्थुः ।[५]

वैश्वानरोनाभिरसि क्षितीनाम्, विश्वस्य नाभिचरन्तो ध्रुवस्य ।

वैदेबहुधा मातृ शब्दः पृथिव्यै पितृशब्दश्च दिवि प्रयुज्यते सूर्योद्युलोकत्रयं पृथिवीलोकत्रयं च धारयति । न कोऽपीमं पराजेतुं पारयति । द्युलोक-पृष्टेदेवा अज्ञेयां वाचंवदन्ति तथा चर्गवेदे—

तिस्रो मातृस्त्रीन् पितृन्, विभ्रदेक, उर्ध्वस्तस्थौ नैनमवलापयन्ति ।[६]
मन्त्रयन्ते दिवा अमुष्यपृष्टे, विश्वविदं वाचमभिपश्यामि त्वाम् ।[७]

आदित्यो भूमित्रयं द्युलोकत्रयं च धारयति । एषामन्तर्ज्ञाने यज्ञे वा त्रिधा व्रतानि कर्माणि । अर्यमावरुणमित्रनामकानामादित्यानाम् ऋतात् महत्त्वं भवति । एवमनेकमन्त्रेषु सूर्ये। द्युलोकत्रयं भूलोकत्रयं च धारयतीत्युक्तम् । सत्यव्रत सामाश्रमिमहोदयानां मते इमे षड्ग्रहाः सूर्याकर्षणेस्थिताः चन्द्रबुधशुक्रा भूमिनाम्ना कथिताः भौमगुरुशनयश्च द्युनाम्ना ।

---

१. तै० आ० ३।१२।७
२. अथर्ववेदे २।२।२।५
३. ऋक्संहिता १०।८४।२
४. ऋक्संहितायाम् ४।५३।२
५. तत्रैव १।६४।२
६. तत्रैव १०।५।३०
७. तत्रैव १।१६४।१०

तिस्रोभूमिर्धारयन् त्रीरुत द्यूनत्रीणि व्रतानि विदथे अन्तरेषाम् ।
ऋतेनादित्या महिवो महिस्त्वं तदर्यमन् वरुण-मित्र चारु ।[1]

अस्मिन्मन्त्रेसत्यव्रत-सामश्रमि-महाशयानां ग्रहनक्षत्रार्थ-करणं न समीचीनम् । ग्रहनक्षत्राणाम्बाहुल्यात् । इति महामहोपाध्याय-गिरिधर शर्मणः ।[2]

छान्दोग्योपनिषदि त्वेनंतेजोऽबन्नानाम् सृष्टिरुक्ता तत्र प्रत्येके तेत्रयः । तथा च—

| | | | |
|---|---|---|---|
| तेजसोभेदत्रयम् | तेजः | आपः | अन्नम् |
| एवमेव अपाम्भेदत्रयम् | " | " | " |
| एवमेवान्नस्य | " | " | " |

प्रथम वर्गस्यान्नावस्था द्वितीयस्यतेजोऽवस्था चैकरूपा, मावस्त्वयं यत्तेजो वर्गस्यान्नमन्नवर्गस्य तेजश्च समानमेव । एवमेवाप्वर्गस्यान्नमन्नवर्गस्य तेजश्च समानमेव । एवं सप्त भेदा भवन्ति । इमा एव सप्तमहाव्याहृतयः भूर्भुवादयः । भूः पृथिवी भुवर्जलमन्तरिक्षंवा । स्वस्तेजोद्युलोकोवा । महोवायुर्वायुलोकोवा जन आकाशमाकाश-लोकोवा तपः क्रिया प्रजापतिलोकोवा सत्यं मनोमयरूपं परमेष्ठी । अत्र भूर्भुवः स्वः पृथिवी स्वर्महजना-अन्तरिक्षम् । जनस्तपः सत्यं द्यौः । येषां धारणमुल्लिखितमन्त्रे लिखितम् सूर्यद्वारा । भूमेर्भ्रमणसंकेतोऽपि कतिपय मन्त्रेषु दत्तः । भूमिः स्वधुरि कथं भ्रमतीत्यस्य कारणमप्येकास्मेन्मन्त्रे विलक्षणतया कथितम् । तथा च--

यज्ञ इन्द्रमवर्धद्यत यद्भूमिव्यवर्तयत् कुर्वाण ओपशं दिवि ।[3]

यज्ञ इन्द्रं बर्द्धयति इन्द्रश्च द्युलोके ओपशं (शृंगं) रचयन् पृथिवीं भ्रामयति । सूर्यकिरणनि यदा पदार्थेषु आघातं कुर्वन्ति तदा तेषां गमनमार्गमागमनमार्गतो भिन्दति । वैज्ञानिकभाषाया मतमेतदेवोपशशब्देनामिधीयते । तदा किरणानामाघाततः पृथ्वीभ्रमणं प्राप्नोति । सूर्यस्य रथस्यवर्णनमपि तत्रैव—

सप्तयुज्जन्ति रथमेकं चक्रमेको अर्कोवहति सप्तनामा—
त्रिनाभि च क्रमजरमनर्वयत्रेमाविश्व-भुवनानि ।[4]
एकं रथं सप्ताश्वाः बहन्ति ।[5]

---

१. ऋक्संहितायाम् २।२७।८
२. वैदिक विज्ञान और भारतीय संस्कृति, पृ० १७३, बिहार राष्ट्रभाषा परिषद्, पटना, १९६०
३. ऋक्संहितायाम् ८।१४
४. तत्रैव १, अनु० २२
५. तत्रैव ८।२

एकएवाश्वः सप्त-स्थानेषु नमनशीलं रथं वहति । सप्तनामा वा । चक्रं-दृढं नाभित्रयं च पुराणेषु सूर्य-गतेः प्रदेशं क्रान्तिवृत्तं सूर्यस्य रथमाहुः । तथा च—

त्र्यशिति मण्डलं शतं काष्ठयोरन्तरं द्वयोः ।
आरोहणावरोहाभ्यां भानोरब्देन या गतिः ।।
सरथोऽधिष्ठितो देवैः, आदित्यैः ऋषिभिस्तथा ।।१।।[1]

सम्वत्सर एव रथस्य चक्रम् । स एव जगत् भ्रामयति नाभित्रयं च ऋतुत्रयं शीतोष्णवर्षाः । अन्यत्रपंच-षड्विभागमपि पंचषड्त्वानुसारम् । तथा च—

त्रिनाभिमतिपंचारेषणेम्यन्य क्षयात्मके ।
सम्वत्सरमये कृत्स्नं, कालचक्रे प्रतिष्ठितम् ।।१।।[2]

वर्तमान भूतभविष्यदितिकालत्रयंवा नाभिमयम् । येतु चक्र-पदेन ब्रह्माण्डं स्वीकुर्वन्ति तेषांमतम् भूम्यन्तरिक्षद्युलोकाः नाभयः इति ।

ऋग्वेदीये "सप्तयुजन्तीति" मन्त्रे पूर्व-लिखिते अनर्वमिति चक्रस्य विशेषणमत्र निरुक्तकारः "अप्रत्यृतमन्यस्मिन्" सूर्यमण्डलमन्यदाधारत्वेन नावलम्बते । सम्वत्सर विशेषणयोग्यशब्दाः अजरोऽनर्वादयः वायोरावाहप्रवाहादयः सप्तभेदाः एव सप्ताश्वा इत्येके । सूर्य एवाश्वः निरुक्तकारः किरणानि च बल्गा (लगाम) किरणानाँ सप्तरंगत्वमपि सप्तसख्याः नयति ।[3] सूर्यस्य वाय्वग्न्यादिभिः सम्बन्धोद्रष्टव्यः—

अस्य वामस्य पलितस्यहोतुस्तस्य, भ्रातामध्यमोऽस्त्यश्नः ।
तृतीयोभ्राता घृत-पृष्ठः अस्यात्रायश्यम्, विश्वयति सप्तपुत्रम् ।[4]

वामस्य (सेवनीयस्य) पलितस्य (सर्वलोकपालकस्य) होतुः (स्तोत्रैः यज्ञादिषु आह्वानकर्तुः) तस्यास्य सूर्यस्य मध्यमोभ्राता (वायुः) विद्युदग्निर्वा अनूनः अस्ति सर्वव्यापकः अस्य तृतीयोभ्राता घृतपृष्ठः (अग्निः) अस्ति । अत्रत्रिषु सप्तपुत्रम् प्रसरण शीलसप्त-किरणानि विश्वपतिम् (सर्वस्य स्वामिनं) अपश्यम् । एवं चग्निवायुपुत्राः लोकत्रयस्य प्रसिद्धदेवाः ।

वामस्य (वनधातोर्निष्पन्नः) सम्भिभत्सुः सूर्यः विभुः कर्ता पलितस्य सूर्यस्य पालकस्य । अस्य पलितकेशोबृद्धोऽप्यर्थः । सूर्योऽतिप्राचीन इत्यर्थः ।

होतुः ह्वेञ् धातोर्वानिष्पन्नः दानादानप्रीणनानिस्पर्धाहिवान शब्दाश्चार्थाः । तात्पर्यार्थस्त्वयम् सूर्योजलदातापृथिव्या रसादानकर्ता सर्वप्रसन्नकर्ता

---

१. विष्णुपुराणे २।१०
२. तत्रैव २।८
३. वैदिक विज्ञान और भारतीय संस्कृति, म० म० उ० गिरिधर शर्मा, चतुर्वेदी, राष्ट्रभाषा परिषद् पटना १९६०, पृ० १७३
४. ऋक्संहितायाम् अनु० २२, सू० ८।१

च। ग्रहोपग्रहाणां नाभौस्थितस्तैः स्पर्धते। आह्वयति आकर्षयति च तान्। तापैः वायौ गतीः जनयन् शब्दापयति। प्रजानामुत्पादयितृत्वात् पालकत्वाच्च। विश्वपतिः कथ्यते। सप्त-रश्मिमयत्वात् सप्तलोकगामित्वाच्च सप्तपुत्र इति भरणकर्तृत्वाद् भ्राता।

एवं च वेदादि ग्रन्थेषु सूर्यस्य चर्चा चर्चिता बृहत्संहितायां सूर्य स्वरूपम्—

नासा-ललाट जंघोरुगण्डवक्षांसि चोन्नतानि रवेः।
कुर्यादुदीच्यवेशं गूढं पादादुरो यावत्।
बिभ्राणः स्वकररुहोबाहुभ्यां पंकजे मुकुटधारी।
कुण्डलभूषितवदनः प्रलम्बहारो वियुदगणैर्वृत॥
कमलोदरद्युति मुखः, कंचुकगुप्तः स्मितप्रसन्नमुखः।
रत्नोज्ज्वलप्रभामण्डलश्च, कर्तुः शुभकरोर्थः॥१॥[1]

भगवान्सूर्यः पूर्वोल्लिखितरथेन भुवनानि पश्यन् अमृतमर्त्यं च वर्तमानो याति। तथा च—

आकृष्णेनरजसा, वर्तमानोनिवेशयन्नमृतं मर्त्यं च
हिरण्ययेनसविता रथेन देवोयातिभुवनानि पश्यन्॥१॥[2]

अयं वरुणस्य मित्रस्य चक्षुः तमसां निहन्ता सुभगो मानुषाणाम्। प्रकाशको-विश्वचक्षुस्तथा च—

उद्वेति सुभगोविश्व चक्षुः, साधारणः सूर्यो मानुषाणाम्।
चक्षुर्मित्रस्यवरुणस्य देवश्चर्मेव यः समविव्यक्तमांसि॥१॥[3]

## पौराणिकं स्वरूपम् (स्तोत्रेषु प्रतिपादितम्)

सरती आकाशेकर्मणि लोकेप्रेरयतीति सूर्यः सरतेः क्यपि रूपम्। अयं काल-पुरुषस्यात्मा रक्तश्यामान्वितः पिंगल-नेत्रः। पित्तात्मकः प्रतापशीलः सत्त्वगुणः प्राच्यादि-दिशाम् स्वामी स्वल्पप्रजः पुंग्रहः क्षत्रिय-जातीयः अस्थिसार-स्तथा च सर्वार्थ चिन्तामणौ—

भानुर्युगालंकृतदेह-रक्तः, श्यामान्वितः पिंगलनेत्र-कान्तिः।
पित्तात्मकोऽयं समगात्रयष्टिः, प्रतापयुक्तस्त्वगुणोल्परोमी।
संचारयुक्संकुचितार्थवाक्यः, स्वल्पप्रजः दैविकबुद्धियुक्तः॥१॥[4]

---

१. बृहत्संहितायाम् ५७।४६-४८, पुराणविमर्श, श्री बलदेव उपाध्याय, पृ० ५००, चौ० विद्या भवन, वाराणसी, १९६५
२. ऋग्वेदे १।३५।२
३. तत्रैव ७।६३।१
४. शब्दवाचस्पत्ये. पृ० ५३२७-२८, चौ० ख० प्रे वाराणसी, श्रीतारा कवच

सूर्य एवं ज्योति ब्रह्मा-विष्णु-प्रजापति-रूपो रुद्रो रुद्रात्मा वाय्वग्नि रूपश्च-तथा च भविष्यपुराणे आदित्य-हृदय-स्तोत्रे—

त्वंज्योतिस्त्वं द्युतिर्ब्रह्मा, त्वंविष्णुस्त्वंप्रजापतिः ।
त्वमेव रुदो रुद्रात्मा, वायुरग्निस्त्वमेव च ।।१।।[1]

महाभारतीय आदित्यहृदये च—

त्वामिन्द्रमाहुस्त्वं रुद्रस्त्वं, विष्णुस्त्वं च प्रजापतिः ।
त्वमग्निस्त्वं मनःसूक्ष्मं, प्रभुस्त्वं ब्रह्म शाश्वतम् ।।१।।[2]

सूर्य ओंकार वषद्कार सर्वयज्ञ-रूपः ऋग्वेद-सामवेद-यजुर्वेदात्मकः स एव ज्योति-र्द्युतिब्रह्म-विष्णु-प्रजापति-रुद्ररुद्रात्मकः सर्वतन्त्रमयो वेदान्तवेद्यो-दिव्यः सर्व-कर्म साक्षी हरित-वर्णः सुवर्णः सुरारिहन्ता सोमसूर्याग्नि-चक्षुष्कः तथा चादित्य-हृदय स्तोत्रे—

नमोंकार वषट्कार सर्वयज्ञ नमोऽस्तुते ।
ऋग्वेद - यजुर्वेद - सामवेद - नमोऽस्तुते ।।१।।
त्वं ज्योतिस्त्वं द्युतिर्ब्रह्मात्वं, विष्णुस्त्वं प्रजापतिः ।
त्वमेवरुद्रोरुद्रात्मा, वायुरग्निस्त्वेमव च ।।२।।
नमः सुरारिहन्त्रे च, सोमसूर्याग्नि-चक्षुषे ।
नमोदित्याय व्योमाय, सर्वतन्त्रमयाय च ।।३।।
नमो वेद न्त-वेद्याय, सर्वकर्मादि-साक्षिणे ।
नमोहरित-वर्णाय, सुवर्णाय नमो नमः ।।४।।[3]

अस्यैव मण्डलवर्ती सरसिजासनसन्निविष्टोभगवान्सूर्योनारायणः यश्च केयूरमकर-कुण्डलधारी किरीटहारी कनकच्छविः धृतशंखचक्रस्तथा चादित्य हृदये-स्तोत्रे--

ध्येयः सदा सवितृमण्डलमध्यवर्ती
नारायणः सरसिजासन-सन्निविष्टः ।
केयूरवान्मकर-कुण्डलवान्किरीटी
हारी हिरण्य-मय बपुः धृतशंखचक्रः ।।१।[4]

विभिन्न-नामभिर्यतयोऽस्य द्वादशमासेषु द्वादश-नामानिमुख्यानि तथा च महा-भारतीयादित्य-हृदये—

एकधा दशधा चैव, शतधा च सहस्रधा ।
तपतो विश्वरूपेण, सृजन्ति संहरन्ति च ।।१।।

१. आदित्यहृदयस्तोत्रे ४८
२. महाभारतीयादित्य-हृदये
३. आदित्यहृदये ४४ तथा अग्रे
४. आदित्यहृदये १५५

एषविष्णुः शिवश्चैव, ब्रह्मा चैव प्रजापतिः ।
महेन्द्रश्चैव कालश्च, यमोवरुण एव च ॥२॥
वायुरग्निर्धनाध्यक्षो, भूतकर्तास्वयं प्रभुः ।
उदयेब्रह्मणो रूपं, मध्याह्ने तु महेश्वरः ॥३॥
अस्तमनिस्वयंविष्णुः, स्त्रिमूर्तिश्च दिवाकरः ॥[1]

अयमुदये ब्रह्मामध्याह्ने शिवोऽस्तकालेविष्णुः ।

अयमेव महेन्द्रः कालो यमो वरुणो वायुरग्निः कुवेरः तत्त्वानामधिपतिश्च त्रयोगुणाः त्रीणितत्वानि त्रयो देवाः त्रयोऽग्नयः तिस्रोमूर्तयः चतुर्थश्च भगवान्सूर्यः । तथा चादित्य-हृदय-स्तोत्रे—

त्रिगुणं च त्रितत्त्वं च, त्रयोदेवास्त्रयोऽग्नयः ।
त्रयाणां च त्रिमूर्तिस्त्वं, तुरीयस्त्वं नमोऽस्तुते ॥१॥[2]

अस्य प्रतिमारथस्था कार्याऽयं-कमल हस्तः सुनेत्रः सप्ताश्व एकचक्रः कमल-प्रभः किरीटी नानाभरण विभूषितः द्विभुजः धृतपुष्करस्तथा च मात्स्ये उक्तम् —

रथस्थं कारयेद्देवं पद्महस्तंसुलोचनम् ।
सप्ताश्वैक चक्रं रथं तस्य प्रकल्पयेत् ॥१॥

मुकुटेन विचित्रेण, पद्मगर्भसमप्रभम् ।
नानाभरण भूषाभ्यां, भुजाभ्यां धृतपुष्करम् ॥२॥

स्कन्धस्थेपुष्करस्थे तं, तु, लीलयैवधृतंसदा ।
चालकच्छन्नवपुषे, क्वचिच्चित्रेषु दृश्यते ।
वस्त्र-युग्मसमोपेतम्, चरणौ तेजसावृतौ ॥३॥[3]

भगवतः सूर्यस्य रूपमतीवदीप्तम् । विचित्र-सकलजगत्प्रकाशकम् । दुर्निरीक्ष्यं तथा च ब्रह्म-पुराणे सूर्यस्तोत्रे—

प्रदीप्तं दीपनं दिव्यं, सर्व-लोकप्रकाशकम् ।
दुर्निरीक्ष्यं सुरेन्द्राणां, यद्रूपन्तस्य ते नमः ॥१॥[4]

वाराहपुराणेऽपि सूर्यः जगत उत्पत्ति-पालनप्रलयकर्ता कथितस्तथा च देव-कृत सूर्य-स्तोत्रे—

---

१. महाभारतीयादित्यहृदये ६०, ६१, ११८, भा० वि० १६४
२. आदित्यहृदये, श्लो० १३८
३. मत्स्यपुराणे २६०।१-४
४. ब्रह्मपुराणे ३१।१६

भवान्प्रसूतिर्जगतः पुराणः.
प्रयासिविश्वं प्रलयं च हंसि।
समुत्थितस्त्वं, सततं प्रवासि,
विश्वम्भरंत्वां प्रणतोऽस्मि नित्यम् ॥१॥[१]

देवीरहस्ये सूर्यस्तोत्रेऽस्य रूपमित्थं वर्णितम्। अयं प्रज्वलित-किरीटी युगान्ताग्नि-सदृशः सिन्दूरचूर्णजपा-कुसुम-वर्णोरत्नजटितकिरीटः श्वेताम्बुजासनो-रक्ताम्बरो द्विजः स्वर्ण-सरोज कलश-धारी तथा चोक्तं तत्रैव—

कल्पान्तानल-कोटिभास्वरमुखं सिन्दूरधूलीजपा,
वर्ण-रत्नकिरीटिनं द्विनयनं श्वेताब्जमध्यासनम्।
नाना भूषणभूषित स्मितमुखं रक्ताम्बरं चिन्मयम्,
सूर्यं स्वर्णसरोजरत्नकलशौ दोर्भ्यां दधानं भजे ॥१॥[२]

जगद्व्यापी जगत्पंचधा परिपाति गगनस्वरूपश्च तथा चादित्यस्तोत्रे—

व्यापित्वमेव भगवन्गगनस्वरूप।
त्वं पंचधाजगदिदं, परिपासि विश्वम् ॥१॥[३]
नमस्तुभ्यं परासूक्ष्मा, सौवर्णी बिभ्रते तनुम्।
धाम-धाम-वतामीश, धाम्नामाधार शाश्वतम् ॥१॥[४]

अयमब्जोजगत्कारण-भूतोभूतात्मागोपतिर्वृषात्मा महा-कारुणिक आत्मा जगतश्चक्षुः जगत्प्रसूतिः अखिल जगत्प्रदीपस्तथा च तत्रैव—

अजायलोकत्रय-कारणाय, भूतात्मने गोपतये वृषाय।
नमो महाकारुणिकोत्तमाय, सूर्याय चक्षुः प्रभवालयाय ॥[५]
इतिसकलजगत्प्रसूतिभूत, त्रिभुवनभावनधामहेतुम्।
रविमखिलजगत्प्रदीपभूतं देवं प्रणतोऽस्मि विश्वकर्माणम् ॥२॥[६]

विष्णुपुराणेऽप्ययं ऋग्यजुः-सामरूपः त्रयीधामासुरगणधारयिता चन्द्रा-प्यायियिता च कथितः। देवानामादिभूतोविवस्वान्। अस्य रथोहिरण्यमयो-ऽमृताश्वाः केतवः जगदालोकं बिभ्रति। तथा च विष्णुपुराणीय सूर्य-स्तोत्रे—

ऋग्यजुः सामभूताय, त्रयीधाम्ने नमो नमः,
बिभर्ति यः सुरगणान्, आप्यायेन्दुस्वरश्मिभिः।
स्वधामृतेन च पितॄंस्तस्मैतृप्त्यात्मने नमः ॥१॥

१. वाराहपुराणे २६।१०
२. देवीरहस्यसूर्य-स्तोत्रे, ३५।७
३. मार्कण्डेयपुराणे १०३।६, मनसुखराय मोर, क्लाइव रोड, कलकत्ता
४. तत्रैव १०४।१८
५. तत्रैव १०७।४
६. तत्रैव १०७।११

नमः सवित्रेसूर्याय, भास्कराय विवस्वते ।
आदित्यायादिभूताय, देवादीनां नमो नमः ।।२।।
हिरण्मयं रथं यस्य, केतवोऽमृतवाजिनः ।
वहन्ति भुवनालोकं-चक्षुषं, नमाम्यहम् ।।३।।[1]

अयंतिग्मतेजाः सुरेषूत्तमः सकलरोगघ्नः सप्ताश्वः रश्मिग्रथी वाल्यखिल्ययुतः । स्वरश्मिभिः जलान् क्षिपति । तज्जलं च सहस्रगुणंप्रदत्ते । तथा च भविष्य-पुराणे —सूर्यस्तोत्रे —

नमोनमः सुरवरतिग्मतेजसे, नमो नमः सुरवर-तेजसाय वै ।
जडान्धमूकान्वधिरान्सकुष्ठान्, सश्वित्रिणोऽन्धान् विविधव्रणावृतान् ।।१।।[2]
प्रसक्तसप्ताश्वयुजेऽक्षयाय ध्रुवैकरश्मिग्रथिने नमो नमः ।
सवाल्यखिलाप्सरकिन्नरोरगैः, ससिद्धगन्धर्वपिशाचमानुषैः ।।२।।[3]
यतो रसान्संक्षिपसे शरीरिणाम्, गभस्तिभिर्हिम-जलधर्म-निस्रवैः ।
जगच्चसंशोषयसि सदा वै, अतोऽसि लोके जगतो विशेषणम् ।।३।।[4]

सूर्यस्य सप्तरंगानिकिरणान्येवास्य सप्ताश्वास्तथा चादित्य-हृदये—

जयो जयश्चविजयोजितप्राणोजितश्रमः ।
मनोजवोजितक्रोधोवाजिनः सप्तकीर्तिताः ।।१।।[5]

अश्वानांनामानि च जयः अजयः विजयो जितप्राणः जितश्रमः मनोजवः जितक्रोधः ।

विष्णुलिंग-शिवलिंगवदस्याप्युपासना कार्या गगनलिंग-रूपेण । तथा च सूर्यस्तोत्रे—

अखण्डमण्डलाकारं, व्याप्तं येन चराचरम् ।
गगनलिंगमाराध्यं त्वां सूर्य-प्रणमाम्यहम् ।।१।।[6]

चराचर-व्याप्यखण्डवृत्तिकः पूजनीयःगगनलिंगः सूर्यः—यथाशिवलिंगे शालिग्रामे च समेषां देवनामाह्वानादिकंभवति साधनया च सिद्धिर्लभते । वाग्देवी गायत्र्यादिदेवीनां नारायण-ब्रह्मादि-देवानां च ध्यानं सूर्यमण्डले-भवति तथा च त्रिपुरासहस्रे भानु-मण्डलमध्यगे ।

एवं च विविध-वेद पुराणादि-स्तोत्रेषु च भगवतः सूर्यस्यवर्णनं विभिन्नरूपेण जगत्कर्तृत्वेन ब्रह्मत्वेन चास्ति । जगतो कालस्य निर्माता । सकलते-

---

१. विष्णुपुराणे ३।५।१५, १८, २३, २४, सवितृस्तोत्रे
२. भविष्यपुराणे १२३।४३ सूर्यस्तोत्रे
३. तत्रैव १२३।५१
४. तत्रैव १२३।५२
५. आदित्यहृदये, श्लोक १२१
६. सूर्यस्तोत्रे, ७, मा० प्र० वि० १६५

जोधारक: सूर्यः समेषमादिहेतुर्नचेमंविना किंचित्कार्यम् सिद्ध्यति । चक्षुषीविना-शरीरवत्सूर्यविनाजगत् विविधरोगहर्तृत्वेमचास्य स्मरणं सर्वैरप्यङ्गी-कृतम् क्रियते च ।

### १. सूर्यगायत्र्यः—(मन्त्रगायत्र्यादीनि)

अन्यदेवानामिव सूर्यस्य गायत्र्योऽपि विविधग्रन्थेषु विविधरूपेणेपलभ्यन्ते तथा च महानारायणोपनिषदि—

१. "भास्कराय विद्महे महद्द्युति-कराय चधीमहि तन्न आदित्यः प्रचोदयात्"[1] तत्रैव प्रकारान्तरेण ।

२. आदित्याय विद्महे सहस्र-किरणय धीमहितन्नो-भानुः प्रचोदयात् ।[2]

३. गरुडपुराणे चान्यादृशी—ओं आदित्याय विद्महे विश्वभावाय धीमहि तन्नः सूर्यः प्रचोदयात् ।[3]

सूर्योपनिषदि प्रकारान्तरेण—द्वितीयस्याः भिन्ना सूर्य-शब्द प्रयोगात् । तृतीयस्याश्च सहस्रकिरणाय शब्द-प्रयोगात् ।

४. "आदित्यायविद्महे सहस्र-किरणाय धीमहि तन्नः सूर्यः प्रचोदयात् ।[4]

मन्त्रः—

ओं घृणिः सूर्य आदित्योम्', घृणिरितिवीजम् ।[5]

## विशिष्ट-स्तोत्राणि

### (१) आदित्य-स्तोत्रम्

स्तोत्रस्यास्य पौराणिकं नामैतत् । आदित्यस्य भगवतः स्तोत्रत्वात्तदेव नाम । "इति संचिन्त्य भगवान्स्तोत्रंभगवतोरवेः ।"[6]

मार्कण्डेयपुराणे १०३ तमेऽध्याये ५मश्लोकमारभ्य द्वादश यावत् श्लोकाः ८ । स्तोत्र-कर्ता ब्रह्मा उर्ध्वमधश्चतप्यमानं रबिमवलोक्य ब्रह्मा स्वसृष्टिविनाश-शंकया स्तोत्रमेतच्चकार ।

स्तोत्रस्यास्य फलंतु सकलताप-विनाशोमतः स्तोत्रानन्तरं सूर्यः स्वतेज-उपसंहृतवानिति तथा च—

---

१. महानारायणोपनिषद् १।३, मैसूर, पृ० ५३

२. तत्रैव, पृ० ५५

३. गरुडपुराणे १६।१२। पंडितपुस्तकालय, काशी ।

४. उपनिषदंके कल्याण, गीता प्रेस, गोरखपुर, २००५, पृ० ६८५

५. सूर्योपनिषदि तत्रैव

६. मार्कण्डेय-पुराणे १०३।४। मनसुखराय मोर, क्लाइव, रोड, कलकत्ता, १९६२

इत्येवं संस्तुतोभास्वान् ब्रह्मणासर्ग-कर्तृणा ।
उपसंहृतवांस्तेजः परं स्वल्पमधारयन् ।।[1]

सरलेसानुप्रासेऽत्र सूर्यस्य परब्रह्मत्वेन वर्णनं यदाज्ञया स्रष्टा सृष्टिं करोति विष्णुश्च पालयित रुद्रश्च संहरति । गगनस्वरूपः सूर्यः सर्वत्र व्यापकः सपंचधा जगदिदं पाति ।

देवरूपो यज्ञरूपः परब्रह्मस्वरूपादयच । सर्व जगतत्स्वरूपम् । तथा च—

इतिसंचिन्त्यभगवान्स्तोत्रं, भगवते रवेः ।
चकार तन्मयो भूत्वा, ब्रह्मा लोक-पितामहः ।।१।।

सृष्टिं करोमि यदहं, तवशक्तिराद्या ।
त्वत्प्रेरितो जलमही, पवनाग्नि-रूपा ।।२।।

व्यापीत्वमेव भगवन्गगन्स्वरूपम् ।
त्वं पंचधा जगदिदं परिपासिविश्वम् ।।३।।

नमस्ते देव-रूपाय यज्ञ-रूपाय ते नमः ।
परब्रह्म-स्वरूपायः चिन्त्यमानाय योगिभिः ।।४।।[2]

## २. आदित्यस्तोत्रम्

यतोऽत्रादित्यस्यैकविंशतिनाम्नां कीर्तनम् ।

ब्रह्मपुराणे २६ तमेऽध्याये २६ तमं श्लोकमारभ्य ३६ तमं यावत् श्लोकाः ११ ब्रह्मा च प्रवक्ता ।[3]

अस्य स्तोत्रस्यपठनेन नराणामुपद्रवाः शाम्यन्ति । शरीरोत्पन्नोद्भूतोत्पतस्यमानव्याधीनां प्रशमो भवति । गलगण्ड-विर्चचिकादयः शाम्यन्ति । शरीरारोग्यादश्चैव यः प्रणतोभूत्वास्तौति स सर्वपापैः प्रमुच्यते । साम्बपुराणीय (सापु०) २५।१-१४। स्तोत्रवत् ।[4]

सरलेसानुप्रसेऽत्र भगवतः सूर्यस्यैकविंशतिनाम्नां कीर्तनम् । तत्र कानिचित् नामानि स्वरूप-प्रतिपादिकानि । तदनुसारं सूर्यः पिंगलवर्णः । रक्तनेत्रः । प्रकाशात्मकः शत्रुक्षयंकरः । सर्वविद्यानां निधानम् । अस्मादेव वेदस्यानेकशाखाः प्रावर्तन्त । इमं प्राप्य जनाः नीरुजः विशोकाश्च जायन्ते ।[5]

---

१. मार्कण्डेयपुराणे १०३।१३
२. मार्कण्डेयपुराणे १०३।४, ८,११
३. ब्रह्मपुराणे २६, अध्यायारम्भे
४. तत्रैव २६।३५-३६
५. तत्रैव २६।३०-३५

### ३. आदित्यदहृयम्

यतोऽत्रभगवतः सूर्यस्य हृदयरुपेण स्तवनम्। "एतद्वैहृदयं कूर्मपुरार्ण उत्तरार्द्धे १८शाध्याये ३३ तमं श्लोकमारभ्य ४६ तमं श्लोकंयावत्। उपदेष्टा व्यासः श्रोतारः ऋषयः।

स्तोत्रस्यास्य पाठेन नराणां सकलाः रोगा शाम्यन्ति सर्वपापनिवृत्तिश्च तथा च—

प्रदेयं सूर्यहृदयं, ब्रह्मणातु प्रदर्शितम्।
सर्वपापप्रशमनं, वेदसार समुद्भवम्॥[1]

सरलेऽत्रस्तोत्रे सूर्यः समेषांहेतुः कथितः स एव ब्रह्मविष्णुरुद्ररूपः। सूर्या-देव दिशः खंविभज्यन्ते। स्वरूपप्रतिपादन-परमिदम्। स च हिरण्यबाहुः हिरण्यपतिः शान्तः। स एव ब्रह्मणः ज्योतिः रसरूपो वज्रहस्तः त्र्यम्बकः विरु-पाक्षः। सूर्यस्य कतिपय-नाम्नामत्र परिगणनम् तत्र च कानिचिदप्रसिद्ध-नामान्यपि। यथा च कपर्दी प्रचेताः मीढुष्टमः। पिनाकी, पशुपदिः परमेष्ठी, भास्वानित्यादीनि। तथा च--

ओंखं खोल्काय योगशान्ताय कारणत्रयहेतवे।
निवेदयामि चात्मानं, नमस्ते विश्वरूपिणे॥१॥
नमस्ते घृणिने तुभ्यं, सूर्याय ब्रह्मरूपिणे।
त्वमेव ब्रह्मपरममापो ज्योति रसोऽमृतम्॥२॥
भूर्भुवस्वस्त्वमोकारः शर्वोरुद्रः सनातनः।
नमस्ते बज्रहस्ताय, त्र्यम्बकाय नमो नमः।
प्रपद्येत्वां विरुपाक्षं, महान्तं परमेश्वरम्॥३॥[2]

अपाणिनीयप्रयोगः अपि।

### ४. आदित्यहृदयस्तोत्रम्

पुस्तकेप्रदत्तंनाम्[3] पुष्पिकायांचेदमेव नाम "इत्यार्षे आदित्यहृदय-स्तोत्रं समाप्तम्।"[4] उपक्रमे च "आदित्यहृदयं पुण्यं सर्वशत्रुविनाशनम्।"[5]

वाल्मीकीये रामायणे षष्ठे लंकाकाण्डे १०७ मे सर्गे १म श्लोकमारम्य ३१ तमं यावत्। अगस्त्यो वक्ता श्रीरामः श्रोता। श्लोकाः ३१।

---

१. कूर्मपुराणे उ० १८।४६, मनमुखराय मोर, क्लाइव रोड, कलकत्ता, १६६२
२. तत्रैव, उ० १८।३४, ३५, ३६, ४१
३. बृहत्स्तोत्ररत्नाकरे, काशी संस्करणे, पृ० १०६
४. तत्रैव, पृ० १०८
५. तत्रैव, श्लो० ४

स्तोत्रस्यास्य पाठेन शत्रवः पराभवंयान्ति यत उपक्रमे कथितम् । लंका-समरे राम रावण-विजयार्थमगस्त्य आह । तथा च—

आदित्यहृदयं पुरायं सर्वशत्रु-विनाशम् ।
जयावहंजपेन्नित्यमक्षयं परमं शिवम् ।।१।।[1]

आर्षेऽत्र स्तोत्रे भगवान्सूर्योब्रह्म-रूपेणोदीरितः तथा च—

एषब्रह्मा च विष्णुश्च, शिवः स्कन्दः प्रजापतिः ।
महेन्द्रो धनदः कालः, यमः सोमः ह्यपांपतिः ।।१।।[2]

भगवतः सूर्यस्य चतुर्थ्यन्त-नाममिर्नमोऽन्तैं स्तवनम् । सूर्यः कमलबोधयिता प्रचण्डो ब्रह्मेशानाच्युतस्वरूपोऽयमेव सृजति पालयति संहरते च । प्रवाहात्मिका संगीतमयीभाषा । तथा च—

नमउग्राय वीराय, सारंगाय नमोनमः,
नमः पद्मप्रबोधाय, प्रचण्डाय नमोनमः ।।१।।
ब्रह्मेशानाच्युतेशाय, सूरायादित्यवर्चसे ।
भास्वते सर्वभक्षाय, रौद्राय वपुषे नमः ।।२।।[3]

## ५. आदित्यहृदयस्तोत्रम्

यतः पुष्पिकायामिदमेव नाम तथा च तत्रैव

"इत्यार्षेभविष्योत्तरपुराणे श्रीकृष्णार्जुनसम्वादे आदित्य-हृदयस्तोत्रं सम्पूर्णम् ।"[4] १०६ । विनियोगश्च

'अस्य आदित्यहृदयस्तोत्रमन्त्रस्येति ।'[5]

भविष्योत्तर-पुराणे श्री कृष्णार्जुन-सम्वादे १७० तमं श्लोकं यावत् । शतानीकसुमन्तु-सम्वादात्मकं शतानीकं प्रति सुमन्तुराह । पुरा चेदमेव श्रीकृष्णः अर्जुनमाह ।

स्तोत्रमिदं सर्वमंगल मंगलम् । सर्वपापप्रणाशनम् । शत्रुघ्नं तथा च—

सर्वमंगलमांगल्यं, सर्वपापप्रणाशनम् ।
सर्वरोगप्रशमन, - मायुर्वधनमुत्तमम् ।।१।।
अमित्रदमनं पार्थ, संग्रामे जयवर्धनम् ।
वर्धनं जयपुत्राणा, मादित्य-हृदयं शृणु ।।२।।[6]

---

१. बृहत्स्तोत्ररत्नाकरे, श्लोकः ४
२. तत्रैव, श्लोकः ८
३. तत्रैव, श्लोकः १८-१९
४. बृहत्स्तोत्ररत्नाकरे, काशी संस्करणे, पृ० १०६
५. तत्रैव, पृ० ९७
६. तत्रैव, ११ तथा १२

स्तोत्रेऽस्मिन्नादौ विनियोगागंयासकरन्यासध्यानादिकं ततो यन्त्रोद्धार-स्ततः कतिपय-नामभिःस्तवमम् । अत्र सूर्यः, त्रैलोक्यनाथो भूतपतिः कैवल्यनाथः उक्तः । अथमेव ब्रह्म विष्णुरुद्ररूपस्तथा च—

नमस्त्रैलोक्यनाथाय, भूतानां पतये नमः ।
नमः कैवल्यनाथाय, नमस्तेदिव्यचक्षुषे ।।१।।
त्वं ज्योनिस्त्यं द्युतिर्ब्रह्मा, त्वंविष्णु स्त्वंप्रजापतिः ।
त्वमेवरुद्रोरुद्रात्मा, वायुरग्निस्त्वमेव च ।।२।।[1]

## ६. दिवाकर-स्तोत्रम्

दिवाकरस्य स्तोत्रत्वार्त्तदेव नाम ।

मार्कण्डेयपुराणे १०४ र्थेऽध्याये १८ शश्लोकमारभ्य २९ तमं यावत् । तथा ३५ तममारभ्य ४६ तमं यावत् तथा २७ श्लोकाः स्तोत्र-कर्त्री देवमाता-दितिः सा च दैत्यपराजितान्स्वसुतानवलोक्य नियममास्थाय स्तोत्रमेतच्चकार ।

स्तोत्रस्यास्य ध्यानेन नराः परमं पदमवाप्नोति तथा च—

ध्यायन्तोविनम्र-चेतसो भवन्तं
योगस्थाःपरमं पदं प्रयान्ति योगमूलाः ।।१।।[2]

स्तोत्रेऽस्मिन्नादौ सूर्यस्य स्वरूप-वर्णनम् सूर्यः सुवर्णतनुः तेजस्वरूपस्ते-जस्विनामीशः जगतामुपकारापगृहूणानितिताश्च कालेनविसृजति तथा च—

जगतामुपकाराय, तथापस्तव गोपते ।
आददानस्य यद्रूपं, तीव्रं तस्मै नमोनमः ।।१।।[3]

सूर्य एव देवर्षिपितृणामाप्यायिता। विरंचि-विष्णुशिव-रूपेण सृष्ट्यादिकाः क्रियाः करोति तथा च—

आप्यायनमशेषाणां, देवानां च तथा परम्।
पितृणां च नमस्तस्मै, शस्यानां पाक-हेतवे ।।१।।
त्वंधाताविसृजसि विश्वमेतत्
त्वं पासि स्थितिकारणाय सम्प्रवृत्तः ।
त्वंयिचान्ते लयमखिलं प्रयाति
तत्त्वं त्वत्तोऽन्या नहि गतिरस्ति सर्वलोके ।।२।।[4]

---

१. बृहत्स्तोत्ररत्नाकरे, ४७, ४८
२. मार्कण्डेयपुराणे १०४।३८, मनसुखराय मोर, क्लाइव रोड, कलकत्ता, १९६२
३. तत्रैव १०४।१९
४. तत्रैव १०४।२५,२६

## ७. देवकृतसूर्यस्तोत्रम्

यतोऽत्र भगवतः सूर्यस्य स्तोत्रंदेवाश्चक्रुरतस्तदेवनाम। सूच्यां चेदमेव नाम।[1]

वाराहपुराणे २६ तमेऽध्याये १०म श्लोकतोऽष्टादश यावत्। श्लोकाः ६। स्तोत्र-कर्तारश्चदेवाः।[2]

स्तोत्रस्यास्यपाठेन सकलेष्टप्राप्तिर्भवति। तथा च तत्रैव—

एतां यः पुरुषोभक्त्या, उपास्ते सूर्यमर्चयेत्।
भास्करश्चैवतस्यासौ फलमिष्टं प्रयच्छति ॥१॥[3]

भगवतः सूर्यादेवास्य जगतः उत्पत्यादिकंभवति सप्ताश्वा अस्य रथं नयन्ति। अतएवायं सप्ताश्वइत्युर्च्यते। वरुणादयोऽस्यैवांशभूताः। तथा च—

भवान् प्रसूतिर्जगतः पुराणः
प्रयासि विश्वं प्रलयं च हंसि।
समुत्थितस्त्वं सततं प्रयासि
विश्वंसदात्वां प्रणतास्मनित्यम् ॥१॥[4]

सरले सानुप्रासे सप्रादेऽत्र स्तोत्रे सरलया गिरा भगवतः सूर्यस्य महिम-प्रतिपादन-पुरस्सरं तदुपयोगित्वं ब्रह्मत्वं च साधितम्।

## ८. ब्रह्मविष्णु-शिवकृतं सूर्यस्तोत्रम्

यतोऽत्रब्रह्मविष्णु-शिवकृतं सूर्यस्त्रोत्रं अतस्तदेव नाम।

भविष्यपुराणस्य ब्रह्म-पर्वणि १५३ तमेऽध्याये विशंतितममारभ्याशीति-तमं यावत् श्लोकानां ६१।

स्तोत्रस्यास्य पाठेन नरोऽचलां भक्तिलभते तथा च—

यदितुष्टो मम विभो, अनुग्राह्योऽस्मितेयदि।
अचलांदेहि मेभक्ति, मा'त्मनश्चरणं नय ॥१॥
तस्यैतान भवन्तीह आधयो व्याधयस्तथा।
तस्मात्वं च ततोदेव, संस्तव्यः सततंबुधैः ॥२॥

अत्र स्तोत्रे ब्रह्मविष्णुशिवा परस्परमधिकमंन्यमानाः[5] स्पर्धमानाअहंकार-तमोभिभूता अन्योऽन्यमपश्यन्तो[6] विह्वलितास्तोजो रूपमनुपममष्टश्रृंगमिवोन्न-

---

१. वाराहपुराणे, पृ० १, अपरभागे
२. वाराहपुराणे, पृ० २४
३. तत्रैव २६।१७
४. तत्रैव २६।१०
५. भविष्यपुराणे १५३।४-१२
६. तत्रैव १५३।२१-२५

तमुपलभ्य[१] तस्याद्यन्ते चानुपलभ्य पृथक् पृथक् तुष्टुवुः । भगवतः सूर्यस्य प्रसादात्ते सृष्टि-पालसंहारात्मिकां शक्तिमधिजग्मुः ।

स्तोत्रेऽस्मिन् प्रायः गुणात्मक-यौगिकनाम-कथनमेव ।[२] स्वस्वस्तोत्रेब्रह्म-विष्णुशिवाश्चस्वनामानि कथयामासुः । शिवविष्णु-ब्रह्मणा-मैक्यमप्यत्र दृश्यते । वरे-प्रार्थनायामन्ते पृथक् पृथगचलांभक्तिं-प्रार्थयामासुरन्ते[३] च सूर्यःस्वचतस्रःमूर्तीः वर्णयामास ।[४]

## ९. ब्रह्मकृतंसूर्य-स्तोत्रम्

भविष्य-पुराणे ब्रह्मपर्वणि सप्तमी-कल्पे स्त्रोत्रमिदं ब्रह्मणाकृतत्वात्त-देवनाम ।

भ० पुराणे ब्रह्म पर्वणि सप्तमी कल्पे १७४ तमेऽध्याये ३५ तमं श्लोक-मारभ्य ४० तमं यावत् । श्लोकाः ६ ।

स्तोत्रस्यास्य श्रवणेन पाठेन च नरः परां कीर्तिमवाप्नोति पुनः सूर्य-पुरं व्रजेत् । तथा च—

च इदं शृणुयान्नित्यं ब्रह्मप्रोक्त-स्तवंपरम् ।
स इह कीर्ति परां प्राप्य, पुनः सूर्य-पुरं व्रजेत् ॥१॥[५]

सूर्यसमर्चनेनैव ब्रह्मा ब्रह्मत्वमवाप । ततः प्रसन्नचेता रविमस्तौषीत् । स्तोत्रमिदं सरलं सुबोधं प्रसादोपेतमनुष्टुब्छन्दः अत्र सूर्यस्यानेकनामान्यपि यथा विभावसुः भानुरादीनि । तथा च—

पूजयित्वा रविंसम्यग्, ब्रह्माब्रह्मत्वमागतः
गोपतिं पूजयित्वा तु प्रहृष्टेनान्तरात्मना ।
कृतांजलिपुटोभूत्वा, पुराब्रह्माब्रवीदिदम् ॥१॥
भगवन्तं भगवरं शान्तचित्तमनुत्तमम् ।
देवमार्गप्रणेतारं प्रणतोऽस्मिरविसदा ॥२॥

अत्रभगवान्सर्वोब्रह्म-विष्णु-शिवादीनां प्रेरयिता[६] कथितस्तत्प्रसादादेव ब्रह्मा-दयःस्व-स्व-कर्मकर्तुं पारयन्ति । तेन विना ते गतासुदेहमिव निरर्थका इवसम्पद्यन्ते ।

## १०. ब्रह्मप्रोक्तसूर्यस्तोत्रम्

यतोऽत्र स्तोत्रे ब्रह्मणा सूर्यः स्तुतोऽतस्तदेव नाम ।

---

१. भविष्यपुराणे, १५३।५०-५३
२. तत्रैव १५३।५०-५३
३. तत्रैव १५३।१०९-११०
४. तत्रैव १५४।१४-१६
५. भविष्यपुराणे १७४।४० सप्तमी कल्पे
६. भविष्यपुराणे १७४।१, ३५, ३६

भविष्यपुराणे ब्रह्म-पर्वणि ७२ तमेऽध्याये १मं श्लोकमारभ्य १६ तमं यावत् श्लोकाः १६। ब्रह्मा स्तोत्रकर्ता।

स्तोत्रस्यास्य श्रवणेन पठनेन च नरः सर्वकामानवाप्नोति। अस्य जप-मात्रेण नरः सर्वपापेभ्यो मुक्तिं प्राप्नेति। तथा च तत्रैव—

एतान्यादित्यनामानि, मयाप्रोक्तानि वैपुरा।
आराधनाय देवस्य, सर्वकामेन सुव्रत ॥१॥
एतज्जप्यं रहस्यं च, सन्ध्योपासनमेवच।
एतेन जपमात्रेण, नरः पापात्प्रमुच्यते ॥२॥[1]

सरले सप्रसादे सानुप्रासेऽत्र स्तोत्रे भगवतः सूर्यस्य नाम्नां कीर्तनम्। नमोन्त-नामभिः चतुर्थ्यन्तैः स्वतः कृतः। भगवान्सूर्यः कार्यभानुः अग्निश्चार्थः कथितः। स एव वरुणो विष्णुः तथा च—

नमः सूर्याय नित्याय, रवये कार्य-भानवे।
भास्कराय पतंगाय, मार्तण्डाय विवस्वते ॥१॥[2]

प्रायोऽत्र पंच-पंचाशत्-नामानि।

## ११. ब्रह्मभाषितस्तव

ब्रह्मप्रभृतिभिर्भाषितत्वादध्यायान्ते चोल्लेखात्। तथा च—

इति श्री साम्बपुराणेब्रह्म भाषित-स्तवो नाम चपुर्दशोऽध्यायः[3]

साम्बपुराणे १४ शाध्याये ५म-श्लोकतः ३४ तमं श्लोकं यावत्। श्लोकाः ३०। ब्रह्मा ऋषीन् प्राह।

ये नरा अनेन स्तोत्रेण भास्करं स्तुवन्ति ते सूर्य-लोकं यास्यन्ति। तथा च—

ब्रह्माद्यैः संस्तुतं देवं, ये नमस्यन्ति भास्करम्।
सर्वकिल्विषनिर्मुक्ताः सूर्यलोकं व्रजन्ति ते ॥[4]

स्तवेऽस्मिन्सरलाभाषा सानुप्रासानुष्टुब्छन्दोऽत्रादौ सृष्टि-वर्णनम्। बुद्ध्यहंकार जलाग्नि-भूम्यनन्तरमण्डलतवर्त्तीः तेन चेमे त्रयोलोकाः। सप्तद्वीपाः सप्त-समुद्राश्च। तत्र स्थितास्तमोमग्नाब्रह्मविष्णु-शिवाः-विमुग्धदिशः सूर्यमादि-देवंतुष्टुवुः। सूर्यएव ब्रह्मविष्णु-शिवादीनां रूपधृक्। तथा च—

१. भविष्यपुराणे ७१।[illegible]
२. तत्रैव ७१।२
३. साम्बपुराणे १४ अध्यायान्ते
४. तत्रैव १४।३४

त्वं ब्रह्मा त्वं महादेवः, त्वं विष्णुस्त्वंजगत्पतिः
वायुरिन्द्रश्च सोमश्च, विवस्वानरुणस्तथा ।।१।।[1]

सूर्यः पापविमोचनः कारणानां च परमं कारणम्। सुखदश्चोपासकानामिति।

## १२. भानुस्तोत्रम्

यतः स्तोत्रेणानेन भानुः संस्तुतोऽतस्तदेव नाम। पुराणेऽपीदंनाम।

मार्कण्डेय-पुराणे १०६ ष्ठेऽध्याये ४८ तमं श्लोकमारभ्य ५४ तमं यावत्। श्लोकाः ७। स्तोत्रकर्तारोब्रह्मादिदेवाः।

स्तोत्रऽस्मिन् 'शन्नो' इति वेदंमन्त्रानुसारी श्लोक एकः। अत्र चराचराणां गति सूर्य एवेति प्रतिपादितम्। सूर्य एव मुमुक्षूणां मोक्षः ध्यानिना ध्येय सर्वं भूतानां गतिः। तथा च—

त्वन्नाथ मोक्षिणां मोक्षः, ध्येयस्त्वं ध्यानिनां पर.।
त्वंगतिः सर्वभूतानां, कर्मकाण्डोपवर्तिनाम् ।।१।।
शंप्रजाभ्योऽस्तुदेवेश, शन्नोऽस्तु जगताम्पते।
शन्नोऽस्तु द्विपदेनित्यं, शन्नोस्तु चतुष्पदे ।।२।।[2]

अत्र सरला सुबोधापौराणिकी भाषा। सप्रसादा प्रवाहमयी। अत्र स्वयमृषिणा स्तोत्रमिदमार्तिनाशन तथा च—

ऋषयश्च ततः सप्त, वशिष्ठात्रिपुरोगमाः।
तुष्टुवुर्विविधैः स्तोत्रैः, स्वस्तिस्त्वस्तीतिवादिनः ।।१।।[3]

## १३. महेश्वरकृतं (सूर्य) स्तोत्रम्

यतोमहेश्वरेण कृतमिदं स्तोत्रान्ते पुष्पिकायां चेदमेव नाम। तथा च—

इति श्री-साम्वपुराणे माहेश्वर-स्तोत्रं नाम सप्तदशोऽध्यायः।

साम्बपुराणे १७ शाध्याये १म श्लोकतः २२तमं यावत् २१तिः श्लोकाः। स्तोत्रकर्तामहेश्वरः।

स्तोत्रस्यास्य पठनेन ध्यानेन चानरः किल्विषाद्भयात्-चमुक्तो भवति। चक्षुर्मनः ग्रहादि-जन्यपीडाः म्यन्ति।

पठंच्छृणवस्तथा चेमं, पुरायं सम्वाद-मावयोः।
किल्विषाच्चविमुच्येत् मुच्येत् च महाभयात् ।।१।।

---

१. साम्बपुराणे १४।५
२. मार्कण्डेयपुराणे, १०६।५४,५३, मनसुखराय मोर, क्लाइव रोड कलकत्ता
३, तत्रैव १०६।५१

चक्षुः पीडां मनःपीडां, ग्रहपीडां तथैव च ।
शमयेदेकजप्येन, दुःस्वप्नं शमयेत्ततः ॥२॥[१]

सरले सानुप्रासे सप्रसादेऽत्रानुष्टब् छन्दोभिः समन्विते स्तोत्रे सूर्य-स्वरूपं । यो दिवि तिष्ठन् दिशो दशभासयते । स्वकिरणैर्वसुधामन्तरिक्षं च वेवेष्टि । अत्रोपमायाः सौन्दर्यमपि दर्शनीयम् ।

स्रवद्भिरपि दीप्ताभिः गोभिर्लोकान्प्रकाशयन् ।
धारयन्दृश्यसे वापि, बिभूतिं पारमेश्वरीम् ॥१॥[२]

## १४. मित्रकृतंसूर्यस्तोत्रम्

मित्रेण कृतत्वात्तदेव नाम ।[३]

साम्बपुराणे पंचमेऽध्याये १३ शश्लोकमारभ्य ३७ तमं यावत् । श्लोकाः २८ ।[४]

योनरोनित्यं शृणोति श्रावयति पठति पाठयति वा स सूर्य·लोकं गच्छति रोगोतोंरोगान्मुच्यते ज्ञानार्थी ज्ञानंलभते यं यं कामं चिन्तयति तं तं प्राप्नोति। तथा च—

यश्चैतत् श्रावयेन्नित्यं, यश्चैतच्छृणुयान्नरः ।
स सहस्रार्चिषंदेवं, प्रविशेन्नात्र संशयः ॥१॥
मुच्येतार्तस्तथा रोगात्, मुनिःश्रुत्वा कथामिमाम् ।
जिज्ञासुर्लभते ज्ञानं, गतिमिष्टांतथैव च ॥२॥
क्षेमेणव्रजतेऽध्वानमिदं चः पठते पथि ।
यं यं कामयते कामं, स तं प्राप्नोत्यसंशय ॥३॥[५]

सूर्यस्तोत्रेऽत्रभगवान्सूर्यः क्षेमक्षोभणेभयात्मकः सत्वरजस्तमसों प्रभावाद् व्यतिरिक्तः । स एकात्मना सर्व लोकं निर्माति । सर्वगोऽपि नभस्वत् । अज्ञै-र्दुष्पाप्यः । तथा च—

हिरण्यगर्भः स भगवान्, स वै बुद्धिरितिस्मृतः ।
धृतेनेकात्मना येन, त्रैलोक्यमिदमात्मना ॥१॥[६]

सर्वतोऽस्य कराः पादाश्च यान्ति । सर्वं पश्यति चायं सगुण-निर्गुणस्वरूपः दैवे पित्र्ये च कर्मणि पूज्यते सरलाभाषा सानुप्रासानुष्टुप्छन्दः।

---

१. साम्बपुराणे १७।२१, २२
२. साम्बपुराणे १७।१४
३. तत्रैव, पृ० ६
४. तत्रैव ६-७
५. तत्रैव ५।३५-३७
६. तत्रैव ५।१६

## १५. सवितृस्तोत्रम्

सवितुःस्तोत्रत्वात्तदेवनाम । पुराणे चेदमेवनाम घृतम् ।[१]

विष्णुपुराणे ३येऽंशे ५ माध्याये १४ शश्लोकमारभ्य २४ तमं यावत् । श्लोकाः ११ । स्तोत्र-कर्ताऽत्र याज्ञवल्क्यः । स च यजुर्वेद-प्राप्तये भगवन्तं सवितारं तुष्टुवे ।

स्तोत्रस्यास्य पाठेन नाविद्वान्मेधावी च भवति यतोऽस्यैव प्रसादात्सूर्योभगवान्याज्ञवल्क्याय वेदविद्यां-ददाविति पुराणप्रसिद्धमिति-वृत्तम् ।

अत्र सूर्यस्यभगवतः ऋग्यजुः सामात्मकम् रूपमुक्तं विष्ण्वादयौऽस्मादेव प्रभवन्ति । स्वरश्मिभिः चन्द्रमसमापूर्यामृतेनदेवान् स्वधया च पितृन् तर्पयति । अस्मिन्नुदिते एव जनाः सत्कर्मार्हाः भवन्ति । अत्र भगवतः सवितुः कतिपय-प्रसिद्ध नामान्युक्तानि सूर्योभास्करो विवस्वान्दिव्यादीनि । सूर्यस्यरथंहिरण्यमयं । ध्वजं च प्रज्ञा । सरला प्रवाहमयी भाषा अनुप्रासप्रसादयुतानुष्टुबच्छन्दस्तथा च—

ऋग्यजुः सामभूताय, त्रयीधाम्ने च ते नमः ।
बिभर्ति यः सुरगणानाप्यायेन्दुं स्वरश्मिभिः ॥१॥
स्वधामृतेन च पितृं, स्तस्मैतृप्त्यात्मने नमः ।
नमः सवित्रे सूर्याय, भास्कराय विवस्वते ॥२॥
आदित्यादिभूताय, देवादीनां नमोनमः ।
हिरण्मयं रथं यस्य, केतवो मृतवाजिनः
वहन्तिभुवनालोकं, चक्षुषं तं नमाम्यहम् ॥३॥[२]

## १६. साम्बकृत-सूर्य-स्तोत्रम्

गुह्यस्तोत्रमिदमपरं नामस्तोत्रस्यास्यातिगुह्यत्वात्तथा च "आराधनार्थे सूर्यस्य गुह्यस्तोत्रमिदं जगौ ।"[३]

साम्बपुराणे २४ तमे सर्गे ७म श्लोकतो ३७तमं यावत् । श्लोकाः ३१ । कुष्टरोगाक्रान्तः साम्बः कृष्णेनानुज्ञप्तो मित्रवनं गत्वा स्तोत्रेणानेन सूर्यंतुष्टाव रोगविमुक्तश्च जातः ।

यो नरस्त्रिकालमिदं स्तोत्रं पठति स दुःख शोकरोगादिभ्यो विमुच्यते । चक्षुर्मनः—ग्रहबन्धनादिभ्योमुक्तोभवति । स्वस्वेष्टकामानवाप्नोति तथा च—

पठेद्द्विज इमं स्तोत्रं, त्रिकालं भक्तिमान्नरः ।
नारी वा दुःख शोकार्ता, मुच्यते शोकसागरात् ॥१॥

---

१. विष्णुपुराणे सूच्याम्
२. विष्णुपुराणे सूच्याम्, ६।५।१५, १८, २३, २४
३. शाक्तप्रमोदे २४।७

चक्षुः पीडामनः-पीडाग्रहपीडाभ्य एव च
बन्धनै र्निगडै र्घोरे, काष्ठागारगृहेषु या ॥२॥
अधस्तादन्तरिक्षे वा, क्षमते भक्ति-वत्सलः
त्रिसप्तशतमावर्त,-होमस्त्वासप्तरात्रिकम् ॥३॥
राज्यकामो लभेद्राज्यं, धन-कामोलभेद् धनम् ।
रोगार्तो मुच्यते रोगात्, यथा साम्बस्तथैव सः ॥४॥[1]

भगवान्सूर्यः सर्वजीवानामादिः । सर्वत्र व्याप्नोति । विष्णु-नाम्ना प्रसिद्धो ऽयमेवस्वतेजोभिरापूर्यमहीमविछन्नगतिः सर्वत्र भ्रमति । ब्रह्मविष्णुशिवादयोऽमुं स्तुवन्ति ।

सरलाभाषानुष्टुप्छन्दः । तथा च—

का मे शक्तिः तव स्तोतुं आर्तोऽहं रोगपीडितः
स्तूयसे त्वं सदादेव, ब्रह्मविष्णु-शिवादिभिः ॥१॥[2]

## १७. सूर्य-कवचम्

सूच्यांदत्तंनाम ।[3] पुष्पिकायां च "इति श्रीरुद्रयामले तन्त्रे देवी-रहस्ये वज्रपंजराख्यसूर्यकवचनिरूपणे नाम त्रयस्त्रिंशः पटलः ।[4] वज्रपजरमित्यपरं-नाम ।

देवी-रहस्ये ३३तमे पटले १मश्लोकमारभ्य ४५तमं यावत् । ४५ श्लोकाः । वक्तात्र भैरवः । रुद्रयामलतोऽत्रग्रहीतम् ।

स्तोत्रस्यास्य पाठेन नरः सर्वान्कामानवाप्नोति इहलोके श्रियंभुत्वान्ते मुक्ति प्राप्नोति तथा च—

भक्त्या यः प्रपठते दिव्यं, कवचं प्रत्यहं प्रिये ।
इहलोके श्रियं भुक्त्वा, देहान्ते मुक्तिमाप्नुयात् ॥१॥[5]

तान्त्रिकमिदं स्तोत्रमत्रादौ माहात्म्य-कथनपूर्वकम् विनियोगांगन्यास-करन्यासादिकं ततो ध्यानम् । दिग्रक्षणान्ते सूर्यस्य महत्त्ववर्णनम् । भगवान्सूर्यो जगत्प्रवर्तकः निमेषादिपरार्धान्तानां कालादीनां कारणम् । अनेनेव सर्वलोकस्य स्थितिर्ब्रह्मादयोऽनेनैवप्रेरिता स्वस्वकार्यमनुतिष्ठन्ति । दिशः खं द्यौः मह्यादयो-ऽनेनैव विभिज्यन्ते । सर्ववेदानाम्प्रवर्तकोऽयं विशेष-रूपेण यजुर्वेदस्य । देवर्षिपि-त्रादीनां समेषां पोषकः । अस्य कृपयासाध्यानि कार्याणि सिद्ध्यन्ति । गायत्र्यं

---

१. साम्बपुराणे २४।३४-३७
२. तत्रैव २४।२०
३. देवीरहस्ये, पृ० ११
४. तत्रैव, पृ० १८३
५. तत्रैव ३३।४५

छन्दः सविता देवता तथा च—

वज्रपंजरकाख्यस्य, मुनिर्ब्रह्मा समीरितः ।
गायत्र्यं छन्द इत्युक्तं, देवता सविता स्मृतः ।।१।।[1]

## १८. सूर्यकवचम्

सूर्यस्यात्रवर्णनत्वात् । सूचग्रामिदमेवनाभ ।[2] पुष्पिकायां च—

इतिश्री ब्रह्मयामले त्रैलोक्यमंगलं नाम श्री-सूर्य-कवचं-सम्पूर्णम् ।[3] त्रैलोक्यमंगलमस्यापरं नाम ।

ब्रह्मयामलतः शाक्तप्रमोदे धृतं सूर्योऽत्रवक्ता साम्बः श्रोता । श्लोकाश्चात्र १८ । दुर्लभमिदं कवचं सूर्येण प्रकाशितम् कवचमिदमज्ञात्वा सूर्य-मन्त्रोऽसिद्धदायकः ।

त्रिसन्ध्यमस्यपाठात्कुष्ठादिरोगाः शमं यान्ति । तथा च—

श्रीप्रदं कान्तिदं नित्यं, धनारोग्यविवर्द्धनम् ।
कुष्ठादिरोग-शमनं, महाव्याधि-विनाशनम् ।।१।।
त्रिसन्ध्यं यः पठेन्नित्यं, अरोगी बलवान्भवेत्
बहुना किमिहोक्तेन, यद्यन्मनसिवर्तते
तत्सर्वं भवत्येव कवचस्यास्य धारणात् ।।२।।[4]

तान्त्रिकमेतदत्रादौ सूर्यः साम्बं कवचस्यास्य माहात्म्यमूचे ततो भूतप्रेतबाधादिनिवृत्तयेऽस्यप्रयोगः कथितः विनियोगागंन्यासनकरन्यासांगरक्षा-प्रतिपादनम् । सूर्य बीजमन्त्रस्य कथनं च । सूर्यमन्त्रश्चिन्तामणिः । कवचस्यास्य भूर्जपत्रे लिखित्वा धारणमपि । रविवासरे संक्रान्त्यां च विशेषफलदायकम् । भाषा सरलाऽल्पसमासा पौराणिकी । सुबोधा ।

## १९. सूर्यकवचस्तोत्रम्

यतोऽत्र सूर्यस्य वर्णने सूच्यामुप-क्रमे[5] चेदमेव[6] नाम "गृहीत्वा कवचं स्तोत्रम्" ब्रह्मवैवर्ते ३ये खण्डे १९ तमेऽध्याये १४श श्लोकमारभ्य ४८ तमं यावत् । श्लोकाः ३३ । स्तोत्रमिदं सुमालिमालिनौ ब्रह्मा प्राह । आदौ कवचं ततः स्तोत्रम् ।

---

१. देवीरहस्ये ३३।१२
२. शाक्तप्रमोदे, बाम्बे सं० २००८, पृ० ८
३. तत्रैव ५३३
४. तत्रैव ५३२
५. ब्रह्मवैवर्तमहापु०, पृ० ८
६. तत्रव ३।१९।१३

इदं कवचस्तोत्रं सर्व विघ्नहरमस्यप्रसादात् नरो व्याधिभ्यो विमुच्यते। स्वेच्छानुसारं फलं लभते। इदं कवचमज्ञात्वा दशलक्ष-जपेनापि सिद्धिर्नजायते तथा च—

सर्वविघ्नहरं सारं, विघ्नेशं विघ्ननाशनम्।
स्तोत्रेणानेन तं स्तुत्वा मुच्यते नात्र संशयः ॥१॥
व्याधितोमुच्यसे त्वं च, कवचस्यास्य प्रसादतः।
भवानरोगी श्रीमांश्च, भविष्यति न संशयः ॥२॥
लक्षवर्षहविष्येण, यत्फलं लभते नरः।
यत्फलं लभते नूनं, कवचस्यास्य धारणात् ॥३॥
इदं कवचमज्ञात्वा योमूढो भास्करं जपेत्।
दशलक्षप्रजप्तोऽपि मन्त्रसिद्धिर्नजायते ॥४॥[1]

आदावत्र सरलया भाषया गायत्री-छन्दसाभगवतः सूर्यस्य माहात्म्यकथन पूर्वकं विनियोगस्ततो मन्त्राणां न्यासकरन्यास-दिग्रक्षणादिकं ततः स्तोत्रम्। मन्त्रश्च—

ओं क्लीं ह्रीं श्री सूर्याय स्वाहा[2] स्तोत्रेऽत्रभगवान् सूर्यः सर्वलोकानामीश्वरः सिद्धिरूपः पापविमोचनः फलदाता त्रिगुणात्मकः शोकमोहभयविनाशकः कथितः। स च सुखदो, मोक्षदः, सर्वकामदश्च।[3]

## २०. सूर्य-कवचस्तोत्रम्

यतोऽत्र सूर्यस्य स्तोत्रम् कवचात्मकम्। सूच्यामुपक्रमे[4] पुष्पिकायांचेदमेव नाम तथा च "शृणुध्वमुनिशार्दूल सूर्यस्य कवचं शुभम्"[5] इति श्री-याज्ञवल्क्य-विरचितं सूर्यस्तोत्रं सम्पूर्णम्।[6]

याज्ञवल्क्यरचितम्। बृहत्स्तोत्ररत्नाकरयोर्धृतम् श्लोकाः ७।

यः सुस्नातोजपेदिदं सरोगमुक्तो भवेत् दीर्घायुष्यं सुखं पुष्टिं च विन्दति। तथा च—

सूर्यरक्षात्मकं स्तोत्रं, लिखित्वा भूर्जपत्रके।
दधाति यः करेतस्य वशगाः सर्वसिद्धयः ॥१॥

---

१. ब्रह्मवैवर्तमहापु० ३।१९।४८, ३१, ३२, ३३
२. तत्रैव ३।१९।२५
३. तत्रैव ३।१९।३५-३९
४. बृहत्स्तोत्ररत्नाकरे, काशी संस्करणे, पृ० २
५. तत्रैव ११०, श्लो० १
६. तत्रैव १११

सुस्नातोयोजपेत्तत्सम्यग्योऽधीते स्वस्थमानसः ।
स रोगमुक्तोदीर्घायुः, सुखं पुष्टिं च विन्दति ।।२।।[1]

सरलेऽत्र स्तोत्रे प्रथमं सूर्यस्वरूप-वर्णनम् । सूर्यश्च देदीप्यमानमुकुटः स्फुरन्मकर-कुण्डलस्ततोऽगंरक्षापरं तत्र च विभिन्ननामभिस्तस्य कीर्तनम् । सूर्यश्च द्वादशात्मा सर्वरक्षकः । तथा च—

घ्राणं धर्मघृणिः पातु, वदनं देव-वाहनः ।
जिह्वां मे मानदः पातु, कण्ठं मे सुरवन्दितः ।।१।।
स्कन्धो प्रभाकरः पातु, वक्षः पातुजनप्रियः ।
पातु पादौ द्वादशात्मा, सर्वंगं सकलेश्वरः ।।२।।
सूर्य-रक्षात्मकं स्तोत्रं, लिखित्वाभूर्जपत्रके ।
दधाति यः करे तस्य, वशगाः सर्वसिद्धयः ।।३।।[2]

## २१. सूर्यनाम्नामष्टोत्तर-शतम्

यतोऽत्ररवेरष्टोत्तरशतनाम्नां कथनम् । सूच्यामिदं नाम[3] अध्यायान्त पुष्पिकायां च—

इति श्री ब्रह्मपुराणे स्वयम्भ्वृषि-सम्वादे सूर्याष्टोत्तर-शतं नामैकत्रिंशोध्यायः ।[4]

ब्रह्मपुराणे ३१तमेऽध्याये ८श्लोकमारभ्य ४९ तमं यावत् श्लोकाः ४२ । ब्रह्मादयः स्तोत्रकर्तारः ।[5]

योनरः समाहित-चित्तेन सूर्योदयकाले स्तोत्रमिदं पठति स पुत्रदारान्धन-निचयांश्चावाप्नोति । मेधामपूर्वां च विन्दति । शोकदवाग्नेर्विमुक्तो भवति । सर्वान्कामानवाप्नोति । तथा च—

सूर्योदयेयः सुसमाहितः पठेत्सपुत्रदारान्धनरत्नसंचयान् ।
लभेत् जातिस्मरतां नरः सदा, स्मृतिं च मेधां च सविन्दते पराम् ।।१।।
इमं स्तवं दैववरस्य यो नरः, प्रकीर्तयेच्छुद्धमनाः समाहितः ।
विमुच्यते शोकदवाग्नि-सागराल्लभेत् कामान्मनसा यथेप्सितम् ।।२।।[6]

अत्रभगवतो दिवाकरस्याष्टोत्तर-शतनाम्नां कीर्तनम् सरला सानुप्रासा सप्रसादाभाषानुष्टुप्छन्दः ।

---

१. बृहत्स्तोत्ररत्नाकरे, काशी संस्करणे ६,७
२. तत्रैव, ४, ५, ६
३. ब्रह्मपुराणे, पृ० १, खेमराज, श्रीकृष्णदास, बाम्बै, मारवाड़ी पु० दिल्ली
४. तत्रैव, पृ० ४५
५. तत्रैव, पृ० ४४
६. तत्रैव ३१।४८,४९

प्रदीप्तं दीपनंदिव्यं, सर्वलोकप्रकाशकम् ।
दुर्निरीक्ष्यं सुरेन्द्राणां, यद्रूपं तस्य तेनमः ।।[1]

स्तोत्रेऽत्र भगवतः सूर्यस्य प्रदीप्त-रूपस्य चर्चा परं स न केवलमत्र प्रकाशकत्वेनापितु विद्याधिष्ठातृदेवत्वेनापि ख्यातः ।

## २२. सूर्यमूलमन्त्र-स्तोत्रम्

यतोऽत्रस्तोत्र सूर्यस्य मूलमन्त्रस्य माहात्म्य-कथनपुरस्सरं स्तवनमिति तदेव नाम । सूच्यामिदमेव नाम ।[2] सूर्य-स्तोत्र-मन्त्र इत्यपि संज्ञा ।[3]

रुद्रयामलतन्त्रे देवी रहस्ये ३५ तमे पटले श्लोका २२ । वक्ता भैरवः ।

स्तोत्रस्यास्यप्रातः पठनेन सर्वार्थाः सिद्ध्यन्ति । भूमौ सकलभोग-प्राप्तिः परत्र च सूर्य-लोकस्य प्राप्ति रिति तथा च—

इति स्तोत्रं मन्त्रात्मकमखिलतन्त्रोद्धृतमिदम् ।
पठेत्प्रातः स्नातो, मिहिर-भुवनेशस्य भवतः ।
भवेद्भोगीभूमौ विभव-सहितः कीर्तिसहितः ।
परमान्ते विष्णोर्व्रजति, परमं धाम सवितुः ।।१।।[4]

पंचांग-मयेऽत्र स्तोत्रे प्रथमं कथनोपक्रमो माहात्म्यं च । ततो विनियोग-ध्यानस्तोत्रं चात्र सूर्यस्य तेजः कल्पान्तातकोटिभास्वरम् सिन्दूरधूलीजपावर्णं दोर्भ्यां कलशंदधानमुक्तम् । तथा च—

कल्पान्तानल-कोटिभास्वर-मुखं सिन्दूरधूलीजपा ।
वर्णं रत्नकिरीटिनं, द्विनयनं श्वेताब्जमध्यासनम् ।
नाना भूषणभूषितं स्मितमुखं रक्ताम्बरं चिन्मयम् ।
सूर्यं स्वर्ण-सरोजरत्नकलशौदोर्भ्यां दधानं भजे ।।१।।[5]

रक्षात्मकं प्रासादानुप्रासोपत्तम् कल्पनापरम् सूर्यमाहात्म्य-प्रतिपादन-बहुलन्तत्रापि सूर्य-मन्त्र-महत्वमुद्घोषण-परमिदमिति ।

## २३. सूर्य-सहस्रनाम-स्तोत्रम्

सूच्यामिदमेवनाम ।[6] यतोऽत्रभगवतः सूर्यस्य सहस्रनाम्नां वर्णनम् ।

---

१. ब्रह्मपुराणे ३१।१६
२. देवीरहस्ये, पृ० १२, श्रीरामचन्द्र काक सम्पादितम् १९४१, श्रीनगर, कश्मीर
३. तत्रैव, ३५तमे पटले, पृ० २०१
४. देवीरहस्ये, ३५।१६, श्री रामचन्द्र काक सम्पादिते १९४१, श्रीनगर, कश्मीर
५. तत्रैव ३५।७
६. देवीरहस्ये, पृ० ११

पुष्पिकायां चेदम् नाम । तथा च—

"इति श्री रुद्रयामलेतन्त्रेदेवी रहस्ये सूर्यसहस्रनाम-निरूपणं नाम चतुस्त्रिंशः पटलः ।"[१]

देवी-रहस्ये ३४तमे पटले १म श्लोकमारभ्य १७१ तमं यावत् । श्लोकाः १७१ । वक्ता चात्र भैरवः ।[२]

अस्य स्तोत्रस्य श्रवणेन पठनेन च सर्वकाम-प्राप्तिः नरश्च सूर्यवत्तेजस्वी भवति । तथा च—

श्रृणुयात् यः परं दिव्यं, सूर्यनाम-सहस्रकम् ।
सभवेत् भास्करः साक्षात् परमानन्द-विग्रहः ॥१॥[३]

स्तोत्रेऽत्रादौ सहस्रनाम्नां गोप्यत्वं दुर्लभत्वं च प्रतिपादितम् । भूमिकायां बिस्तरेणास्य महत्त्वमुक्तवान् । ततो विनियोग-ध्यानांगन्यास-करन्यासांग-रक्षण-दिग्रक्षणध्यानादिकम् च । ततः परं सूर्यस्य सहस्रनाम्नां परिकीर्तनम् । नाम्नां प्रसंगे तत्र तत्र प्रतिपादित-नामभ्योऽतिरिक्ताप्रसिद्ध-नामान्यपि । यथा वीरल-क्ष्णादीनि । प्रसंगतोऽत्र सूर्य स्वरूप-प्रतिपादनमपि दृश्यते । सूर्यश्च रक्तवस्त्रधारी रक्तमालः सहस्रहस्तोन्यग्रोधवासी ।

## २४. सूर्य-सहस्रनाम-स्तोत्रम्

यतोऽत्र सूर्यस्त सहस्र-नाम्नां कथनम् । सूच्यामिदमेवनाम ।[४]

भविष्यपुराणस्य सप्तमी-कल्पतः शाक्तप्रमोदे धृतम् श्लोकाश्चात्र १२३ । गीता प्रेस गोरक्षपुरतः पृथगपि मुद्रितम् । सुमन्तु-शतानीक-सम्वादात्मकम् । प्रवक्ता चात्र सुमन्तः ।

स्तोत्रस्याफलमादावन्ते च बहुभिः श्लोकैः प्रतिपादितम् । तदनुसार-मसाध्यसाधकं सर्वेष्टदम् । तथा च—

धन्यं यशस्यमायुष्यं, दुष्ट-दुःस्वप्न-नाशनम् ।
बन्धमोक्षकरचैव भानोर्नामानुकीर्तनम् ॥१॥
यस्त्विदं श्रृणुयान्नित्यं, पठित्वा प्रयतो नरः ।
अक्षयं सुखमन्त्राद्यं, भवेत्तस्योपसाधितम् ॥२॥
नृपाग्नितस्कर-भयं व्याधिभ्यो न भयंभवेत् ।
विजयी च भवेन्नित्यं श्रेयश्चपरमाप्नुयात् ॥३॥

---

१. देवीरहस्ये, पृ० २००
२. तत्रैव, पृ० १८४
३. तत्रैव ३४।१३६
४. शाक्तप्रमोदे, पृ० ८

नाम्नां सहस्रमिदमंशुमतः पठेद्यः
प्रातःशुचिर्नित्यमवान्सुसमाधि-युक्तः ।
द्वारेण तं परिहरन्ति सदैव रोगाः
भीताः सुपर्णमिव सर्वमहोरगेद्राः ॥४॥[1]

आदावत्रशतानीकप्रश्नानन्तरं सुमन्तोरस्य-स्तोत्रस्य माहात्म्यकथनान्ते विनियोगध्यानादिकं ततः सहस्रनाम्नां परिकीर्तनम् । तत्र बहूनिनामानि समासिकानि तथा च—

कालाश्रयः कालकर्ता, कालहा कालनाशनः ।
महायोगीमहाबुद्धिर्महात्मा सुमहाबलः ॥१॥[2]

## २५. सूर्यस्तवराज

यतोऽयं स्तवानां राजा सूर्यमुखान्निर्गतः सहस्रनामतुल्यः । पुष्पिकायामिदमेव नाम । तथा च—

"इति श्री साम्बपुराणे रोगापनयने श्री सूर्यवक्त्रविनिस्सृत-स्तवराजवर्णनं नाम पंच-विंशतितमोऽध्यायः ।[3]

साम्बपुराणे २५ तमं सर्गे १२ श्लोकमारम्य १४ तमं यावत् । १४ श्लोकाः । सहस्रनामभिस्तुवन्तं विद्यमानं तं दृष्ट्वा स्वप्ने सूर्यस्तमुपदिदेश स्तोत्रमिदम् ।

यो नरः सूर्योदयास्तयोः सन्ध्ययोः प्रणतो भूत्वा स्तौति स सर्व पापेभ्यः प्रमुच्यते । एष शरीरारोग्यैश्वर्य-धनादिदः । त्रिविधतापहरस्तवोऽयं । सन्ध्योपासनएषोजप्योहोमश्च कार्यस्तथा च—

शरीरारोग्यदश्चैव धनवृद्धियशस्कर, ।
स्तवराज इतिख्यातस्त्रिषु लोकेषु विश्रुतः ॥१॥
यस्तेन महाबाहो, द्वेसन्ध्येऽस्तमनोदये ।
स्तौति मां प्रणतो भूत्वा, सर्वपापैः प्रमुच्यते ॥२॥
कायिकं वाचिकं चापि, मानसं यच्चदुष्कृतम् ।
तत्सर्वमेकजाप्येन, प्रणश्यति ममाग्रतः ॥३॥[4]

अत्र भगवतः सूर्यस्यैकविंशतिनामानि । तानि च—

ओं विकर्तनो विवस्वांश्च, मार्तण्डोभास्करोरबिः ।
लोकप्रकाशकः श्रीमान् लोकचक्षुर्ग्रहेश्वरः ॥१॥

१. शाक्तप्रमोदे, सहस्रनामस्तोत्रे, पृ० ५४६, श्लो० ११६, १२०, १२१, १२३
२. तत्रैव, श्लो० २
३. साम्बपुराणे, २५ आध्यायान्ते
४. साम्बपुराणे २५।८,९,१०

लोक-साक्षी त्रिलोकेशः, कर्ता हर्ता तमिस्रहा ।
तपनस्तापनश्चैव, शुचिः सप्ताश्ववाहनः ।।२।।
गभस्तिहस्तोब्रह्मा च, सर्वदेवनमस्कृतः ।
एकविंशतिरित्येषस्तव इष्टः सदा मम ।।३।।[1]

सरलसरला सप्रसादोऽनुष्टुब्छन्दोबद्धः ।

## २६. सूर्य-स्तवराजः

सूर्यस्तोत्रेषु राजत्वात् स्तवराजः । सूर्येणभगवता स्वयमेवेद नाम धृतम् । तथा च—

स्तवराज इतिख्यातस्त्रिषु लोकेषु विश्रुतः ।[2]

भविष्यपुराणे १२८ तमेऽध्याये ३यश्लोकमारभ्य १४शश्लोकान्तं (यावत्) । श्लोकाः १२ । दुर्वाससः शापसंतप्तेन कुष्ठरोगामि-भूतेन साम्बेन रोगविमुक्तये कृतमिदम् । प्रवक्ता चात्र सूर्यः स्वयमेव ।

स्तवराजश्चायं शरीरारोग्य-धनवृद्धिकीर्तिदायकः । रोगविमुक्ति-कारकश्च इत्युक्तम् तथा च—

शरीरारोग्यदश्चैव, धनवृद्धियशस्करः ।
स्तवराज इतिख्यातस्त्रिषु लोकेषु विश्रुतः ।।१।।
साम्बोऽपि स्तवराजेन, स्तुत्वा सप्तार्श्ववाहनम् ।
प्रीतात्मा नीरुजः श्रीमान्, तस्माद्रोगाद्विमुक्तवान् ।।२।।[3]

अत्रादौ श्लोक-द्वयेन कथन प्रस्तावस्ततः सप्तान्तम् । नाम्नामेक-विंशतिरादितोन्त्यावधि फलकथनम्। छन्दश्चात्रानुष्टुब् भाषा सरला स प्रसादा । नाम्नां प्रसंगे विकर्तनो विवस्वान् गर्भस्तिहस्तब्रह्मादीनि । स्वयंभगवतेमानिना-मानि सहस्र-नामतुल्यानि तथा च—

साम्वसाम्बमहाबाहो, शृणुजाम्बवतीसुत ।
अलंनामसहस्रेण, पठचेमं शुभंस्तवम् ।।१।।
यानि गुह्यानि नामानि, पवित्राणि शुभानि च ।
तानि ते कीर्तयिष्यामि प्रयत्नादवधारय ।।२।।[4]

## २७. सूर्य-स्तोत्रम्

यतोऽत्र सूर्यस्य स्तोत्रम् । तस्य गुण-प्रतिपादनपरम् ।

---

१. साम्बपुराणे २५।५-७
२. भविष्यपुराणे, अ० १२८, श्लो० ८
३. तत्रैव १२८।८ तथा ११४
४. भविष्यपुराणे १२८।३-४

ब्रह्मवैवर्ते १२३ तमेऽध्याये ४३ तमं श्लोकमारभ्य ५२ तमं यावत्। श्लोकाः १० । स्तोत्रकर्तारश्च ब्रह्मविणुशिवाः ।

स्तोत्रमिदं सकलरोगनाशकम् । मूकान्ध-बधिर-कुण्ठरोगविनाशकम् यतो-विशेषरूपेणे तादृश-नामानुकीर्तनम् । तथा च—

नमोनमः सुरवर तिग्मतेजसे ।
नमोनमः सुरवरतेजसाय वै ।
जडान्धमूकान्बधिरान्सकुष्ठान् ।
सश्वित्रिब्नोघ्नान्विविध-व्रणावृताम् ॥१॥[1]

अत्र भगवतः सूर्यस्य नमोन्त-नामभिःसंस्तवः । सूर्यश्च सप्ताश्वयुक् (क्षयादिकारक्)क्षयादिकारकोरश्मिग्रन्थी बालखिल्याप्सरकिन्नरोरगैः सेव्यमानः कथितः । सिद्धगन्धर्वपिशाचमानवास्तं सदास्तुवन्ति । स्वकिरणैरयं रसान्सं-क्षिपति जगतोविशोषणः कथ्यते तथा च—

प्रसक्त सप्ताश्वयुजेक्षयाय, ध्रुवैकरश्मि-ग्रथिने नमोनमः ।
सबाल्यखिल्याप्सरकिन्नरोगैः ससिद्धगन्धर्वपिशाच-मानुषैः ॥१॥
यतो रसान्संक्षिपसे शरीरिणाम्, गभस्तिभिर्हिमजल-धर्मनिस्रवैः ।
जगच्चसंशोषयसे सदैव अतोऽसि लोके जगतो विशेषणम् ॥२॥[2]

## २८. सूर्य-स्तोत्रम्

यतोऽत्र सूर्यस्य स्तोत्रम् । पुराणे च धृतंनामेदम् तथा च—

आराधनाय सूर्यस्य गुह्यं स्तोत्रं जजाप ह ।[3]

भविष्यपुराणे १२७ तमेऽध्याये ८म श्लोकमारभ्य षड्त्रिंशत्यावत । श्लोकाः २५ । स्तोत्र-कर्ता साम्बः ।

स्तोत्रस्यास्यफलम् सूर्य-लोक-प्राप्तिस्तथा च—

य इदं पठते स्तोत्रं, त्रिकालं भक्तिमान्नरः ।
त्रिसप्तशतमावृत्य, होमे वा सप्तरात्रकम् ॥१॥
सूर्यलोकं व्रजेच्चापि, भक्त्या पूज्य दिवाकरम् ।
रमते च तथा तस्मिन् देवैश्च परिवारितः ॥२॥[4]

स्तोत्रेऽस्मिन्नादौ सूर्य-मंडलवर्णनम् तच्चाजरमव्ययं मनोजवैरश्वैर्युतं ब्रह्मवादिमुनिभीराजितम् । अयं भूतानामादित्यः त्रैलोक्यचक्षुः परमातमा प्रजा-पतिः ब्रह्मविष्णु शिवरूपः । पंचतत्त्वानि दिगधिपाश्च सूर्यरूपा एव तथा च—

---

१. ब्रह्मवैवर्ते १२३।४३
२. तत्रैव १२३।५१-५२
३. भविष्यपुराणे १२७।८
४. तत्रैव १२७।३४,३६

यदेतन्मण्डलं शुक्लं दिव्यंह्यजरमव्ययम् ।
युक्तं मनोजवैरश्वैः हारीतैब्रह्मवादिभिः ॥१॥
आदिरेषहि भूतानां, आदित्य इति संज्ञितः ।
त्रैलोक्य-चक्षुरेवात्र, परमात्मा प्रजापतिः ॥२॥
एषमण्डलेह्यस्मिन्, पुरुषो दीप्यते महान् ।
एषविष्णुरचिन्त्यात्मा, ब्रह्माचैवपितामहः ॥३॥
रुद्रोमहेन्द्रोवरुण आकाशः, पृथिवी जलम् ।
वायुः शशांकः पर्जन्यः, धनाध्यक्षोविभावसुः ॥४॥[1]

## २९. सूर्य-स्तोत्रम्

यतोऽत्र सूर्यस्यमहत्वं प्रतिपादनमन्ते च फलकथनम् ।

भविष्यपुराणे ब्रह्म-पर्वणि १२३ तमेऽध्याये ६४ तमं श्लोकमारभ्य ८३ तमं यावत् । श्लोकानां विंशतिः । स्तोत्र-कर्तारोदेवाः ।

यो नरः स्तोत्रमेतत्पठेद्योवाश्रृणुयात्सोऽश्वमेघ-फलं लभते । तथा च—

इत्येतन्निखिलं भानोः, कथितं स्तोत्रमुत्तमम् ।
श्रृणुयाद्यो नरो भक्त्या, अश्वमेधफलं लभेत ॥१॥[2]

सरलेऽत्र स्तोत्र आदौ भगवतः सूर्यस्य नमोन्त नामभिस्तवनम् । तत्र सूर्यश्चतुर्वेदस्वरूपश्शब्दरूपः संसार-हेतुश्च कथितः । अस्य तेज ऋङ्मयमयं सकल-मेदिनीहेतुर्यजुर्मयःदिवं । स्वयं चायं साममयः । अस्य तेजोभिरेव शिवशूलादीनि । तथा च—

नमस्ते रवि-रूपाय, सोमरूपाय तेनमः ।
नमो यजुः-स्वरूपायाथर्वांगिरसे नमः ॥१॥
नमोऽस्तु ज्ञेय-रूपाय प्रकाशे लक्ष-रूपिणे ।
भास्कराय नमस्तुभ्यं, तथा शब्द-कृते नमः ॥२॥
यत्तस्य ऋङ्मयं तेजः भविता तेन मेदिनी ।
यजुर्मयेनापि दिवं, स्वयं साममयो रविः ॥३॥
शातितास्तेजसोभागा ये च स्युर्दश पंच च ।
तस्यैव तेन शर्वस्य, कृतं शूलं महात्मना ॥४॥[3]

अनुष्टुप्-छन्दः प्रवाहमयी पौराणिकीभाषा ।

---

१. भविष्यपुराणे १२७।९, १०, ११, १२
२. तत्रैव १२३।८३
३. तत्रैव १२३।६४, ६७, ७७, ७८

## ३०. सूर्यस्तोत्रम्

यतोऽत्र सूर्यस्य वर्णनम्। स्तोत्रारम्भे च पुराणे घृतंनाम तथा च—

उद्भूत पुलकस्तोत्रमिदं चक्रे विवस्वतः।[1]

मार्कण्डेय-पुराणे १०७ तमेऽध्याये प्रथम श्लोकमारम्य ११शं यावत्। श्लोकसंख्या ११।

स्तोत्रस्यास्य सूर्य-माहात्म्य-स्वरूपस्य श्रवणेन पठनेन च सर्वापदो विनश्यन्ति। नक्तं-दिवकृतं पापं च नश्यति। तथा च—

आपदंप्राप्य मुच्यते प्राप्नुयाच्च महायशः।
अहोरात्र-कृतं पापमेतच्छमयते श्रुतम्॥१॥
माहात्म्यमादिदेवस्य, मार्तण्डस्य महात्मनः॥२॥[2]

अत्र स्तोत्रे भगवान्सूर्योलोकत्रयहेतुरजन्मा च कथितः। स च महाकारुणिकः जगच्चक्षुः संसार हितैषी सकल-जगत्प्रदीपभूतः त्रिभुवनभवनधामविश्वकर्मा च अयं ज्ञानमूलः स्वयम्भूः जगत्प्रतिष्ठः सुरोत्तमश्च। तथा च—

अजायलोक-त्रय-कारणाय, भूतात्मने गोपतयेवृषाय।
नमो महाकारुणिकेऽस्तमाय, सूर्याय चक्षुः प्रभवालयाय॥१॥
इति सकलजगत्प्रसूतिभूतं, त्रिभुवनभावनधामहेतुमेकम्।
रविमखिलजगत्प्रदीपभूतं देवंप्रणतोऽस्मिविश्वकर्माणम्॥२॥
विवस्वते ज्ञान-भूतान्तरात्मने, जगत्प्रतिष्ठाय जगते।
स्वयं भुवे लोकसमस्त-चक्षुषे, सारोत्तमायामिततेजसेनमः॥३॥[3]

## ३१. सूर्याष्टोत्तर-शतनामस्तोत्रम्

यतोऽत्रभगवतः सूर्यस्याष्टोत्तरशत-नाम्नां परिकीर्तिनम् सूच्यां "शतनामस्तोत्रमिति"[4] संज्ञा पुष्पिकायां च सूर्याष्टोत्तरशतनामेति तथा च।[5]

"इति महाभारते वन-पर्वणि धौम्ययुधिष्ठिरसम्वादे श्री सूर्यस्याष्टोत्तरशत-नामस्तोत्रं समाप्तम्।"[6] श्लोकाः १६।

स्तोत्रस्यास्य सूर्योदये पठनेन नरः धनरत्ननिचयान्प्राप्नोति। धृतिमेधादिकं चावाप्नोति। शोकादिभिर्विमुच्यते तथा च—

---

१. श्रीमार्कण्डेय-पुराणे १०७।१, मनसुखराय मोर, क्लाइव रोड, कलकत्ता, १९६२
२. तत्रैव १०८।२८,२९
३. तत्रैव १०७।४, ११, ५
४. शाक्तप्रमोदे, पृ० ८, खेमराज श्रीकृष्णदास, बाम्बे, २००८
५. तत्रैव, पृ० ५३७
६. तत्रैव, पृ० ५३७, श्लोक, १५, १६

सूर्योध्येयः सुसमाहितः पठेत्, सपुत्रदारान्धनरत्नसंचयान् ।
लभेत जातिस्मरतान्ततः सदाधृतिं च मेधां च स विन्दते पुमान् ।।५।।
इमं स्तवं देववरस्य योनरः, प्रकीर्तयेच्छुद्धमनाः समाहितः ।
विमुच्यतेशोकदवाग्निसागरा, ल्लभेतकामान्मनसा यथेप्सितान् ।।२।।[1]

सरले सानुप्रसिऽत्रभगवत सूर्यस्याऽटोत्तर-शतनाम्ना परिगणनम् । तत्र सर्वप्रसिद्ध-नामातिरिक्तमप्रसिद्धान्यपिकानिचित यौगिकनानिचित यौगिकनाम्नामत्रचर्चा विशेषेण । तथा च—

इन्द्रोविवस्वान्दीप्तांशुः, शुचिः शौरिः शनैश्चरः ।
ब्रह्मा-विष्णुश्च रुद्रश्च, स्कन्दो वै वरुणो यमः ।।१।।
दाहकर्ता प्रशान्तात्मा, विश्वात्मा विश्वतोमुखः ।
चराचरात्मा सूक्ष्मात्मा मैत्रेयकरुणान्वितः ।।२।।

अत्र भगवतः सूर्यस्य नाम्नां प्रसंगे स परब्रह्मत्वेन कथितः । सुरगण-पितृ यक्षास्तमुपासन्ते असुरनिशाचरसिद्धादयश्च सततम् स्तुवन्ति ।

## (ग) सामान्य-स्तोत्राणि (२५)

१. आदित्य-स्तोत्ररत्नवृत्तिः, अप्पयदीक्षिताचार्यं रचिता । वाराणसेय-संस्कृत विश्वविद्यालये पु० सं० १८१५६, दुःखदादिद्र्यनाशिकम् ।
२. रविगणेशचण्डिका-स्तोत्रम्, वाराणसेय संस्कृत-विश्वविद्यालये पु० सं० १६७६४ । अत्र संकलनएकं सूर्यस्य । सर्वरोगहरम् ।
३. रविस्तोत्रम्, वाराणसेय-संस्कृत-विश्वविद्यालये पु० सं० १६६६१ । स्कान्दे काशी-खण्डे । दुःखरोगादिशमनम् ।
४. सूर्यकवचस्तोत्रम्, श्लोकाः ७ । बृहत्स्तोत्ररत्नाकरे, काशी-संस्करणे श्री याज्ञवल्क्यरचितमेतत् । सुस्नातो भूत्वा जपेन रोगमुक्तिं-दीर्घायुषं च विन्दतिनरः ।
५. सूर्यद्वादशनाम स्तोत्रम्, श्लोकाः ३ । स्कान्दे ४।४६।४५-४७ । सर्वरोगहरम् ।
६. सूर्यनामसप्ततिः स्तोत्रम्, वाराणसेय-संस्कृत विश्वविद्यालये पु० सं० १६२१५ । अत्र भगवतः सूर्यस्य नाम्नां सप्ततिः सर्वेष्टदम् । अत्र सूर्यलोकवर्णनम् । स्तोत्रमिदम् स्कान्दे । ४।६।७६-६६ । श्लोकाः २० ।
७. सूर्यशतकम्, श्लोकाः १०० । रचयिता मयूरः । स्तोत्रेऽस्मिन् रश्मिरथबिम्ब वर्णन-पुरस्सरं सूर्य-महिम-प्रतिपादनम् । कुष्टरोगनिवृत्तिकरम् । आलंकारिकम् ।

---

१. शाक्तप्रमोदे, पृ० ५३६, श्लोक २ तथा ५३७ श्लोक १२

८. सूर्य-शतकम्, श्लोकाः १०७। स्तोत्रार्णवे ५९६ पृष्टे। श्रीकोदण्डरामार्य कृतमिदम्। पुत्रकलत्रसुखपूर्वकम मोक्षदम्।

९. सूर्य-स्तवराजः, वाराणसेय-संस्कृत-विश्वविद्यालये पु० सं० १७७०४। बंगलिप्यां मुद्रितम्। भविष्योत्तर-पुराणीयः सर्व-सुख-करः।

१०. सूर्यस्तवः महाभारततो वाराणसेय संस्कृत-विश्वविद्यालये पु० सं० १७९९४। रक्षाकरः।

११. सूर्यस्तोत्रम्, श्लोकाः २८। स्कान्दे १।४३।१७-४४। ऐतरेय-कृतम् सर्वारिष्ट-प्रशमन-कारकम्।

१२. सूर्य-स्तोत्रम्, श्लोकाः ३९। स्कान्दे ५।४३।५५-९३। अर्जुन-कृतम् सर्वरोगहरम्।

१३. सूर्य-स्तोत्रम्, श्लोकाः ७। श्री वासुदेव-सरस्वती-रचितम्, बृहत्स्तोत्ररत्नाकरे काशी-संस्करणे, २९८ पृष्टे। इष्टदम्।

१४. सूर्याष्टकम्, श्लोकाः ११। बृहत्स्तोत्र-रत्नाकरे काशी-संस्करणे मुम्बापुरी संस्करणे च संकलितम्। स्त्रीतैलमघुमांसादीनिविहाय रवेर्दिने पठनेन सर्वेष्टसिद्धिः।

१५. सूर्याष्टकम्, श्लोकाः १०। अस्यामेव शताब्दयां १९१९ तमे वर्षे मार्गमासे शुक्ल-पक्षे श्री-पण्डित-रघुनाथ शर्मणा रचितम् बृहत्स्तोत्ररत्नाकरे काशी-संस्करणे मुद्रितम् त्रिसन्ध्यं पठनेन चतुर्वर्गदम्।

१६. सूर्याष्टकम्। श्लोकाः ९। आचार्य-शंकर-कृतम्। पठनेनास्य सर्वकार्यसिद्धिः जायते।

१७. सूर्याष्टकम्, वाराणसेय संस्कृत-विश्वविद्यालये पु० सं० २०५१८। श्लोकाः ९।

१८. सूर्याष्टोत्तरशतनाम, श्लोका १९। स्कान्दे ५।४६।१-१९। नारायणकृतम्। सर्वेष्टदम्।

१९. सूर्याष्टोत्तरशतनामस्तोत्रम्, वाराणसेय संस्कृत विश्वविद्यालये पु० सं० १९९८४। महाभारतीयारण्यपर्वतः संकलितम्, समस्ततापापहम्।

२०. सूर्याथवशीषम्, नवीनाह्निकसूत्रावल्यामन्त्रच मुद्रितम्। सूर्यमहिमवर्णंन परम्। यश्चत्रिकालं पठति सभाग्यवान् जायते धनपुत्रादिकं च विन्दति।

२१. सूर्यार्यास्तोत्रम्, श्लोकाः १२। बृहत्स्तोत्ररत्नाकरे काशी संस्करणे। १११ पृष्टे श्री याज्ञवल्क्य-रचितम्। लक्ष्मीदम्। रोगघ्नम् सकल-कार्यं सिद्धि-करम् च।

२२. सूर्याचन्द्रमसोः स्तोत्रम्, वाराणसेय-संस्कृत-विश्वविद्यालये पु० सं० १९९४७। सकल-रोगहरम्।

२३. सूर्यप्रातःस्मरण स्तोत्रम्, श्लोकाः ४। स्तोत्ररत्नावल्यां गीता प्रेस गोरखपुरतो-मुद्रितम्, पृ० सं० २८५। सर्वव्याधिहरम्।

२४. सूर्यमण्डलाष्टकम्, श्लोकाः १३, स्तोत्ररत्नावल्याम् २४८ पृष्ठे। सर्वपापघ्नम्।

२५. सौरसप्तार्यास्तोत्रम्, वाराणसेय संस्कृत वि० वि० पु० सं० २०११५। सर्वदम्।

सप्तमोऽध्यायः

# उपसंहारः

## सौन्दर्य-बोधः

### भक्तेः रसत्वम्

अथात्रप्रस्तूयते स्तोत्राणां सौन्दर्यबोध-प्रस्तावस्तत्रादौ संस्कृत वाङ्मये भक्तिरसभावस्थितिरेवोपस्थाप्यते । स्तोत्रेषु भक्तिरसस्यैव बहुल्येनाङ्गीकारत् । तन्मूलत्वाच्च स्तोत्राणाम् ।

भक्तिरसस्य काव्यशास्त्रीय-चर्चा—

संस्कृत-साहित्याचार्यैर्भक्तिः रसत्वेन नांगीकृताऽद्यापि तत्र प्रश्नस्तिष्ठति । आचार्यभरतेन भक्ति र्नवा रस-रूपेणनवा भावत्वेन कथिता । तत्कारणंतुतत्समक्षं भक्तिपरकाभिनेयग्रन्थाभाव एवासीत् तस्य विवेच्यं तु प्रधानत्वेनभिनेय-साहित्य-मेव । भरतोदाम्पत्येतर-रतेश्चर्चामेव नाकरोत् । सर्वप्रथममस्याश्चर्चा दण्डिना कृता । परं तेन भक्तिः रसरूपेण नांगीकृता यतस्तत्समक्षं भरतस्य मान्यतासीत् । दण्डिनाचार्येण भावात्मक-परिस्थितयोऽलंकारेषु परिगणिताः । रसोऽपि रसवद-लंकार एव प्रीतिश्च प्रेयालंकारः । प्रेयालंकारस्योदाहरणं कृष्णपरकमतः प्रतीयते यत्प्रीतिर्भगवद्विषयिणी प्रतिरेव तथा च "प्रेयः प्रिय-तराख्यानम्"[1] भगवद्विषयिका प्रीतिः लौकिक्य-पेक्षया प्रियतरा । तथा च—

अत्र या मम गोबिन्दे, जातात्वयिगृहागते ।<br>
कालेनैषा भवेत्प्रीति, स्तवैवागमनात्पुनः ॥१॥<br>
इत्याहयुक्तं विदुरो, नान्यतस्तादृशीधृतिः ।<br>
भक्तिभावसमाराध्य, सुप्रीतश्च ततोहरिः ॥२॥<br>
सोमः सूर्योमरुद्व्योम, होतानलोजलम् ।<br>
इतिरूपाण्यतिक्रम्य, त्वां द्रष्टुंदेव के वयम् ॥३॥<br>
इति साक्षात्कृते देवे, राज्ञोयद्राति-वर्मणः ।<br>
प्रीति-प्रकाशनं तच्च, प्रेय इत्यवगम्यताम् ॥४॥[2]

---

१. काव्यादर्श (दण्डी), श्लो० २७५

२. तत्रैव २७६, ९

अत्र डा० राघवन्नप्याह कृष्णपर-कोदाहरणे भक्तिशब्दस्य निर्देशः दण्डिनाकृतः। दण्डी शृंगाररतेः पृथक् प्रीतिं कथितवान्। "प्राक् प्रीतिः दर्शिता सेयं रतिः शृंगारतांगता।"[1] रतिः शृंगारविषयिणी प्रीतिश्च भगवद्विषयिणीति। दण्डिनो मते भक्तिः प्रेयोलंकारे समायाति।[2] भरतमनुसरन्दण्डी भक्तिं पृथग्रसत्वेन नांगी चकार। "इह त्वष्टरसायत्ता रसवत्ता स्मृता गिराम्।"[3]

रुद्रटः—

आचार्य-रुद्रटो दण्डिनः प्रेयालंकारं प्रेयानित्यतिरिक्त-रसरूपेणाह। शान्तस्तूद्भटेनैव रसत्वेन स्वीकृत आसीत्। तथा च—

स्नेहः प्रकृतिः प्रेयान् संगतशीलार्यनायको भवति।
स्नेहस्तु साहचर्यात्प्रकृतेरूपचार-सम्बन्धात् ॥१॥
निर्व्याज मनोवृत्तिः सनर्मसद्भापेशलालापाः।
अन्योऽन्यंप्रतिसुहृदोर्व्यवहारोऽयं मतोयत्र ॥२॥[4]

परमत्रसुहृदाम् स्नेह एवरसः।

अभिनवगुप्तात्पूर्वं भक्तेः रसत्वेन निरूपणस्य प्रयासोऽभवदित्यभिनवगुप्तकथनादेवानुमीयते। परम् स्वयमभिनवगुप्तः भक्तेः रसत्वे प्रतिकूलतामेवांगीचकार। तथा च—

"अत एवेश्वर प्रणिधानविषये भक्ति-श्रद्धे स्मृति-मति धृत्युत्साहाद्यनुप्रविष्टेभ्योऽन्यथैवांगमिति न तयोः पृथक् रसत्वेनगणनमिति।"[5]

उद्धृतोदाहरणं तत्र शान्त-रस-निरूपणे समायातं तत्रभक्तेः गणना शान्तरसस्यव्यभिचारिभाव एव कृतेदम् कथनं तस्य दार्शनिक-पद्धत्यनुकूलमासीत। अभिनवगुप्तः शैवदर्शनानुयाय्यसीत्तत्र च शान्तो रसो मुख्यः प्रकृतिभूतो रसः अन्ये चाष्टौ विकृतिभूतरसाः।[5]

यद्यप्यभिनवगुप्तोरहस्यवादीभक्त आसीत्परं तस्य समक्षमद्वैतदर्शनमासीत्। भक्तिस्तु साध्य-रूपेण द्वैते एव सम्भवति। अतः सभक्तेरन्तार्भावः शान्तरस्य व्यभिचारिषु कृतवानिति। तथा च—

स्वं स्वं निमित्तमासाद्य, शान्ताद्भावः प्रवर्तते।
पुनर्निमित्तापायेतु, शान्त एव प्रलीयते ॥१॥[6]

---

१. नम्बर आफ रसाज़, डा० वी० राघवन्, पृ० १०९-११०
२. तत्रैव
३. काव्यादर्शे पृ० २८१
४. काव्या० रुद्रट, १५।१७।१६
५. अभि० भा० भा० १, पृ० ३४०
६. अभिनव भा० भा० १, पृ० ६४० (८३ श्लोके)
७. तत्रैव

संचारिणस्त्रयस्त्रिशंद्भावानानन्दवर्धनाचार्यानुसारमभिनवगुप्तोऽप्याह भावध्वनिशब्देनेति। मम्मटो नकेवलां भक्तिविषयिणीमपितुदाम्पत्येतरसर्वाः रतीः भावध्वनि-शब्देन स्वीचकार। तथा च—

रतिर्देवादिविषया, व्यभिचारी तथांजितः।

भावः प्रोक्तः[1] आदिशब्दान्मुनिगुरुपुत्रादिविषयाः, कान्ता विषया तुव्यक्ता शृंगार एव।[2]

एवं च मम्मटेत भावध्वनिर्विधाभ्यघायि। त्रयस्त्रिशंत् प्रधानीभूता-व्यंजना, दाम्पत्येतररतेर्विविधरूपाणि च। आचार्य हेमचन्द्रोऽपि मम्मटमनुमेने तथा च—

स्नेहोभक्तिर्वात्सल्यमितिहि रतेरेव विशेषाः।

एवमादौ च विषये भावस्यैवास्वाद्यत्वम्॥१॥[3]

आचार्य-विश्वनाथ-पण्डितराजजगन्नाथाभ्यामपिमम्मटमनुसृत्य भक्ते-रन्तर्भावोध्वनावैव कृते[4] न पृथक्रसरूपेण।

"अथ कथमेत एव रसा भगवदालम्बनस्य रोमांचाश्रुपातादिभिरनु-भावितस्य हर्षादिभिः परिपोषितस्य भागवतादि-पुराणश्रवणसमये भगवद्भक्तेरनु भूयमानस्य दुरपह्लवत्वादिति भगवदनुरागरूपाभक्तिश्चात्र स्थायिभावः न चासौ शान्तरसेऽन्तर्भावमर्हति। अनुरागस्य वैराग्यविरुद्धत्वात् उच्यते भक्तिर्देवादि-विषयरतित्वेन भावान्तर्गततया रसत्वानुपपत्तेः।[5]

भक्तेः रसत्वानंगीकारे पण्डितराजेन कारणद्वयमुपन्यस्तम् भगवद्भक्ता एव रसानुभवकर्तारस्ते च विरला एव भरतादीनां परम्पराचेति तथा च—

"न च तर्हि कामिनी विषयाया अपि रते र्भावत्वमस्तु रतित्वाविशेषात्। अस्तुभगवद् भक्तेरेवस्थायित्वम्। कामिन्यादिरतीनां च भावत्वम् विनिगम-काभावादितिवाच्यभ् भरतादिमुनिवचनानामेवात्र रसभावत्वादि व्यापकत्वेन स्वातन्त्र्यायोगात् रसानां नवत्वगणना च मुनिवचननियन्त्रिता भज्येत्।"

अत्र विशदरूपेण रसत्व-चर्चा मुद्भाव्य परम्परा-भीतो रसगंगाधरकारः रसं नानुमेने। भक्तिरसविषये च परम्परैवंप्रचलति—

१. दण्डी-भक्तिः प्रियतराख्यानं प्रेयालंकारेऽन्तर्भूता।

२. अभिनवः—सर्वरस प्रकृतिभूत-शान्त-रससंचारिभावप्रविष्टाभक्तिः।

३. धनंजयः भक्तिः समानजातीये स्थायिनिसंचारिभावे वा प्रविष्टा।

---

१. काव्यप्रकाशे उ० ४।३५, नागेश्वरी टीका सहित चौ० सं० प्र० वाराणसी, १९५१

२. तत्रैव

३. काव्यानुशासने, पृ० १०६

४. साहित्यदर्पणे, ३।२३५

५. रसगंगाधरे, १

४. मम्मटः—भावध्वनौ भक्तेः समावेशः ।

५. पण्डितराजजगन्नाथः—भक्तेः रसत्वमंगीकृत्यापि भावध्वनावै-वान्तर्भावं कृतवानिति ।

**विमर्शः**

पण्डितराज-जगन्नाथ-समक्षं भक्ति-रस विषयकं विशालं साहित्यमासीत् । विभिन्न-भक्ति सम्प्रदायानामाचार्याणां विविध-तर्कैः भक्तिरसत्वं प्रतिष्ठापित-मासीत् । पुराणस्तोत्रादीनां चर्चा चर्चितासीत । स्वकीया च धीर्भक्ति रस-पौषिका, आसीत् । किन्तुभरतादीनांमाचार्य-प्रवराणां मान्यताविरोधं सोढुं न शशाकातएव महताटोपेनानुरागरूपायाः भक्तेः स्थायिभावत्वमगीकृत्यापि रसत्वं नांगीचकार । षोडश-शताब्द्याः उत्तरार्धवर्ती मधुसूदनाचार्योभक्तेः रसत्वमाह ।

नव रस-मिलितं वा, केवलं वा पुमर्थम्'
परमिह मुकुन्दे, भक्ति-योगं बदन्ति ।
निरूपम-सुखसंविपद्रूमस्पृष्ट-दुःखम्,
तमहमखिलनुष्ट्यै शास्त्र-दृष्ट्या व्यनज्मि ।।१।।[1]

नृणां श्रेयो विधित्सया भगवता त्रयोयोगाः प्रोक्ताः ज्ञानं कर्म च भक्तिश्चान्यः कोऽप्युपायो नास्ति श्रेयसः । तथा च—

योगास्त्रयोमया प्रोक्ता, नृणां श्रेयो विधित्सया ।
ज्ञानं कर्म च भक्तिश्च, नोपायोऽन्योस्ति कुत्रचित् ।।१।।[2]
मनएकत्र संयुज्याज्जित श्वासो जितासनः ।
वैराग्याभ्यास-योगेन, ध्रियमाणमतन्द्रितः ।।२।।[3]
तावत्कर्भाणि कुर्वीत्, न निर्विद्येत यावता ।
मत्कथा-श्रवणादौ, वा श्रद्धा यावन्नजायते ।।३।।[4]
प्रोक्तेन भक्तियोगेन, भजतो मामसकृन्मुनेः,
कामा-हृदय्या नश्यन्ति, सर्वे मयिहृदिस्थिते ।।४।।[5]

इत्यादिभगवद्वचनानुसारं साधनभक्तिनिष्ठ्या सर्वप्रेमभगवत्येवस्थाप्यते। विषयनिवृत्तिचित्तस्य सौभाग्य-शालिनः भगवद्गुणगरिमग्रथन-श्रवण-जन्य द्रुतिरूपाया भगवदाकारायाः विभावादि संयोगतयारत्याख्यस्थायिभावः भक्ति-रसः प्रादुर्भवति तथा च भक्तिरसायने ।

१. भक्तिरसायने १, वाराणसी २०१८
२. भागवते ११।२०।६
३. तत्रैव ११।६।११
४. तत्रैव ११।२०।६
५. तत्रैव ११।२०।२६

"इत्यादिभगवद्वचनानुसारिण्या साधनभक्तिनिष्ठया निखिलमपिविषय-निष्ठप्रेमाण भगवत्येवप्रतिष्ठापयत: सकलविषयविमुख-मनसोमहाभागस्य कस्य-चिद् भगवद्गुण-गरिमग्रथनरूप-श्रवणजनितद्रुति-रूपाया मनोवृत्तौ सर्वसाधन-फलभूतायां गृहीतभगवदाकारायां विभावानुभाव-व्यभिचारिसंयोगेन रस रूपतयाभिव्यक्तभगवदाकारता रूपोरत्याख्य-स्थायिभाव: परमानन्द-साक्षात्का-रात्मक: प्रादुर्भवति स एव भक्तियोग: ।"[1]

उज्ज्वल नीलमणावपि मुख्यरसेषु भक्तिरस: कथितस्तस्य च चर्चा संक्षेपेणभक्ति-रसामृतसिन्धौ विस्तरेणोज्ज्वलनील-मणौ कृता तथा च—

मुख्य रसेषु य: पुरा संक्षेपेणोदित: रहस्यत्वात् ।
पृथगेवभक्तिरसराड् सविस्तरेणोच्यते मधुर: ।।१।।
वक्ष्यमाणैर्विभावाद्यै: स्वाद्यतां मधुरा रति: ।
नीता भक्तिरस: प्रोक्त: मधुराख्यौ मनीषिभि: ।।२।।[2]

'मुख्य-रसेषु शान्ति प्रीतिप्रेयोवत्सलोज्ज्वल नामसु (तट्टीका) भक्ते: निरुपमसुख सम्विदत्वेनास्पृष्ट दु:खत्वेन च परमपुरुषार्थतास्पष्टैव । धर्मार्थ काममोक्षेष्वन्तर्भावो भवितुं न शक्यते। धर्मार्थ-काममोक्षाणां स्वत: पुरुषार्थ-त्वाभावात् । तज्जन्यसुखस्य पुरुषार्थे गौरवादननुगमाच्च तथा च भक्तिरसायने ।

'धर्मार्थकाममोक्षाणां स्वत: पुरुषार्थत्वाभावात् तज्जन्य सुखस्यैव पुरुषार्थत्वे गौरवादननुगमाच्चाधर्मजन्यत्वादि विशेषणं परित्यज्य सुखमात्रंपुरुषार्थ इति स्थिति: समाधिसुखस्येव भक्ति-सुखस्यापि स्वतन्त्र-पुरुषार्थत्वात् । तस्य मोक्षसमीपवर्तितया मोक्षान्तर्भूतत्वेयोगजधर्मजन्यतया धर्मान्तर्भूतत्वे वा भक्ति-सुखस्यापि भागवतधर्म-जन्यतया-धर्मान्तर्भावस्य श्रद्धाजडान्प्रतिवक्तुं शक्यत्वात् । भक्तस्य संसारमोक्षस्यावश्यकत्वान्मोक्षान्तर्गतो वा भक्तियोग: । तस्मात्पुरुषार्थ-चतुष्टयान्तर्गतत्वेन वा स्वातन्त्र्येण वा भक्ति-योग: परमार्थ रूपत्वादिति निर्विवादम् ।"[3]

भक्तिरसस्यकिमालम्बनमिति चेत्परम-पिता परमेश्वर एवालम्बन-विभावस्तथा च तत्रैव—

सर्वान्तिर्यामी परमेश्वर एव भक्तिरसावलम्बन-विभाव: ।।[4]

उज्ज्वलनीलमणौ भगवान्कृष्णस्तस्यवल्लभाश्चालम्बनत्वेन कथिता-स्तथा च—

१. भक्तिरसायने, प० ११ ।
२. उज्ज्वलनीलमणौ श्लो० २, पृ० ४, बाम्बे १९३२
३. भक्तिरसायने, पृ० १६, काशी
४. तत्रैव, पृ० १६

अस्मिन्नालम्बनः प्रोक्तः, कृष्णस्तस्यच वल्लभाः ।
अयं सुरम्यः मधुरः, सर्वसल्लक्षणान्वितः ॥१॥
सुधीः संप्रतिमोधीरः, विदग्धश्चतुरः सुखी ।
कृतज्ञोदक्षिणः प्रेमवश्यः, गम्भीरताम्बुधिः ॥२॥
वरीयान्कृतिमान्नारीमोहनः, नित्यनूतनः ।
अतुल्यकेलिसौन्दर्य, प्रेष्ठ-वंशी - स्वनांकितः ॥३॥[1]

भक्तिरसायनेऽन्यत्र च भक्तेः रसत्वमाह । संसार-रोगग्रस्तः मनसामस्योपदेशः—

संसाररोगेण बलीयसाचिरम्,
निपीडितैस्सत्प्रशमेऽतिशिक्षितम् ।
इदं भवद्भिर्बहुधा व्ययातिगम्,
निपीयतां भक्ति रसायनं बुधैः ॥१॥[2]

विभावानुभाव-व्यभिचारिसंयोगाद्रसनिष्पत्तिरिति भरतसूत्रानुसारं भक्तेः रसत्व-सिद्धये स्थायिभावत्वेन दाम्पत्येतरेश्वर-विषयिणी रतिस्तथा च भक्तिरसायने—

स्थायिभावगिरातीतो वस्त्वाकारोऽभिधीयते ।
व्यक्तश्च रसतामेति, परानन्दतया पुनः ॥१॥
भगवान् परमानन्दस्वरूपः स्वयमेवहि ।
मनोगतस्तदाकारोरसतामेति पुष्कलम् ॥२॥[3]

रतेर्व्याख्याऽत्रैव ग्रन्थकारेण कृता । तथा च—

"रतिनमि भक्ति-रस - स्थायिभावाद्रुतचित्तप्रविष्टभगवदाकारता - रूप-संस्कार-विशेषः ।"[4]

सा च रतिः भक्ति-रसानुभवे सति उत्पद्यते तथा च तत्रैव—

"श्रद्धाभक्तिरसानुभवे सति ततोरतिः स्थायिभावः तत एवभक्तिरसतां प्राप्तोऽनुक्रमेण भविष्यति ।"[5]

जागर्तीयशंका य द्रुतिरेव श्रृंगार-वत्सलयोरपिस्थायि-भावः सैव च भक्तेः कोऽत्र विवेक इति चेद्ग्रन्थकृत्स्वयमनुवदति ।

स्नेहः पुत्रादि-विषयः, पाल्यपालकलक्षणः ।
सेव्यसेवकभावोऽन्यः, सोऽप्युक्तस्त्रिविधोबुधैः ॥१॥

---

१. उज्ज्वलनीलमणौ, १,२,७ श्लोकाः
२. भक्तिरसायने १।२
३. भक्तिरसायने ११।६,१४
४. तत्रैव, पृ० १२५
५. तत्रैव, पृ० १२५

भगवद्दास्य सख्याभ्यां, मिश्रितं चापरं जगुः।
या कृष्णाकारताचित्ते, तज्जन्य द्रुतशालिनि ।।२।।
पाल्यपालकभावेन, सा वत्सलरतिर्भवत्।
सेव्य - सेवकभावेन, प्रेयोरतिरितीर्य्यते ।।३।।

अयंभावः

पाल्यपालकलक्षणपुत्रादि-विषयकभावो यो पालके भवति स स्नेहः कथ्यते। एवमेव सेव्यसेवकभावजन्यः स्नेहोद्वितीयोभवति। प्रथमश्चोत्तमः सत्त्व-गुणजन्यो, द्वितीयश्च रजोगुण-मिश्रितो भवति। सेव्यसेवक-भावजन्योऽयं त्रिधा भवति। ते च भगवतः दास्यभावेन सख्यभावेन मिश्रित-भावेन च। द्विविध-स्नेह-जन्यद्रुतशालिचित्ते या कृष्णाकारिता भवति सैवपाल्यपालकभावेन वत्सलारतिः। सेव्यसेवकभावेन च प्रेयोरतिरितिच्यते।

रतेः पृथगन्यएवकोऽपि भावः स्थायित्वेन भक्तिरसस्य कल्प्यतामिति न स्थायिभावानामष्टानामेव नियतत्वात् तथा च तत्रैव—

कामक्रोधभय-स्नेह-हर्षशोकदयादयः
तापकाश्चित्तजतुनः तच्छान्तौ कठिनं तु तत् ।।१।।[1]
इतोऽन्यथा तु चितस्य न द्रुतिर्विद्यतेक्वचित्।
तदभावात्तुभावोऽन्यो न, निरुक्तोऽन्योऽस्तिकश्चन् ।।२।।
यावत्योद्रुतशश्चैतेभावा, स्तावन्त एवहि।
स्थायिनो रसतां यान्ति, विभावादिसमाश्रयात् ।।३।।[2]

भक्तिरसो भगवद्विषयक एवातो धर्मोत्साहदयोत्साह-जुगुप्सा-त्रिविध-शुभादिष्वन्तर्भावोऽस्य नकर्तुं शक्यते। तथा च—

धर्मोत्साहोदयोत्साहो, जुगुप्सा त्रिविधः शमः।
षडप्येतेनविषया भगवद्विषयाः नहि ।।१।।
धर्मवीरो दयावीरो, वीभत्सः शान्तइत्यमी।
अतो न भक्तिरसतां, यान्तिभिन्नास्पदत्वतः ।।२।।[3]

धर्मोभगवत्प्राप्ति-साधनभूतः पापापनोदकः शमश्च विषयवितृष्णाजनकः तत एव भगवद्भक्तिरुत्पद्यते। अतो न भक्तिरस आभ्यां भिन्न इति चेत् इमौ भक्तिसाधनभूतावित्यस्यनिर्विवादत्वेऽपि आलम्बनविभावोऽनयोर्भिन्नोऽपि भवति भक्तेस्तु भगवानेव। शान्तरसस्तु वैराग्य-मूलको भक्तिश्चानुरागमूलिकेति। ननु कंस-रावणादयोभयेर्ष्यादि कुर्वाणा अपि भक्ता एव तेषां मुक्ति-लाभादिति चेदाह—

---

१. भक्तिरसायने १।१०
२. तत्रैव २।२५-२६
३. भक्तिरसायने २।२७-२८, पृ० १५८

ईर्ष्याजभयजद्वेषौ जगवद्विषयावपि ।
न भक्तिरसतां याते, साक्षादिति-विरोधतः ।।१।।[1]

भगवान्यत्रालम्बनो भवति तत्रैव भक्ति-रसो निष्पद्यते। परमीर्ष्यामयादीनामालम्बत्वे भगवत्यपि भक्तिरसो न निष्पद्यते। यतः पूर्णतश्चित्तद्रुतिस्तदैव भवति याप्रीत्यात्मिका भगवद्विषयिणी रतिर्भवति । ईर्ष्यामये प्रीतिविरोधिके। एवमेवश्रृंगारकरुणहास्य-प्रीतिभयानकाद्भुतादयो मिश्रिताः भवन्ति तथा च—

कामजेद्वेरतीशोकः प्रीतिर्भीविस्मयस्तथा ।
उत्साहो युधिदाने च, भगवद्विषया अमी ।।१।।
व्यामिश्रभावरूपत्वं यान्त्येवक्षीरनीरवत् ।
विभावादिसमायोगे, तथा भक्ति-रसा अपि ।।२।।
श्रृंगारः करुणाहास्यस्तथा प्रीतिभयानकाः ।
अद्भुतोयुद्धवीरश्त्र दानवीरश्च मिश्रितः ।।३।।

विशुद्धोवत्सलः प्रेयानेते त्रयो भक्तिरसा अमिश्राश्च तथा च—

शुद्धा च वत्सलरतिः, प्रेयोरतिरिितित्रयी ।
भावान्तरामिश्रितत्वादमिश्रारतिरुच्यते ।।१।।
विशुद्धो वत्सलः प्रेयानितिभक्तिरसास्त्रयः ।
रसान्तरामिश्रितास्ते भवन्ति परिपुष्पकलाः ।।२।।[3]

श्रृंगारप्रधानाभक्तिः कामजाभक्तिरुच्यते सम्बन्धजावत्सलाभक्तिः । प्रैयाभक्तिप्रीतिभयजा । एवं च यदा रतिचतुष्टयमेकदैव व्यक्तं भवति तदापानकरसन्यायेन परमविलक्षणरसस्य निष्पत्तिर्जायते । तथा च भक्तिरसायने ।

श्रृंगारमिश्रिताभक्तिः, कामजाभक्तिरिष्यते ।
सम्बन्धजारतिर्याति, पूर्वोक्तां रसतां द्वयोः ।।१।।
एकोवत्सलभक्त्याख्यः, प्रेयो भक्तिस्तथापरः ।
भयजारतिरध्यासते रस-प्रीतिभयानकम् ।।२।।
एकदैव यदि व्यक्तमिदं रति-चतुष्टयम् ।
तदा तु पानकरस-न्यायेन परमो रसः ।।३।।[4]

या भक्तिर्भावध्वनावभिहिता सातवन्यदेव-विषयिणी, परमात्मनि परमानन्द मये भगवति नहि सा । तथा च—

---

१. भक्तिरसायने २।२६
२. तत्रैव २।३१-३३
३. तत्रैव २।३४-३५
४. भक्तिरसायने २।६७-७०

रतिर्देवादि-विषया व्यभिचारी तथांञ्जितः ।
भावः प्रोक्ते रसो नेति, यदुक्तं रस-कोविदैः ।।१।।
देवान्तरेषु जीवत्वात्, परानन्द-प्रकाशनात् ।
तद्योज्यं परमानन्द रूपेण परमात्मनि ।।२।।[1]

भक्तिरसोऽन्य रसापेक्षयावलवत्तरो यथा खद्योतेभ्य आदित्यस्तथा च—

परिपूर्णरसा क्षुद्ररसेभ्यो भगवद्रतिः ।
खद्योतेभ्य इवादित्य प्रेमववलवत्तरा ।।१।।[2]

भगवतो गुण-कथनं तदीय-प्रियाणां गुणनाम कथनं च उद्दीपनविभावस्तथाचोज्ज्वलनीलमणौ—

उद्दीपनविभावाःहरेस्तदीयप्रियाणां च कथिता-गुणनाम-
चरित्रमण्डनसम्बन्धिनस्तरस्थाश्च ।[3]

गुणाश्च त्रिविधामानसावाचिकाः कायिकास्तथा ते च कृतज्ञता-क्षान्ति-करुणादयस्तथा च—

गुणास्त्रिविधमानसा स्युर्वाचिकाः कायिकास्तथा,
गुणाः कृतज्ञतांयान्ति, करुणाद्यास्तुमानसाः ।।१।।[4]

भक्तिरसेऽनुभावास्तु अलंकारादयस्त्रयत्रिंशद्व्यभिचारिणस्तुपूर्बदेव-तथा च—

अनुभावास्त्वलंकारास्तथैवोद्भास्वराभिधाः ।
वाचिकाश्चेतिविद्वद्भि, स्त्रिधामीपरिकीर्तिताः ।।१।।
यौवनेसत्वरजस्तासामलंकारास्तुविंशतिः ।
उदयन्त्यद्भुताकान्तेसर्वथाभिनिवेशिताः ।।२।।
भावो हावश्च हेला च, प्रोक्तास्तत्र त्रयोऽङगजाः ।
शोभा कान्तिश्च दीप्तिश्च, माधुर्यं च प्रगलमता ।।३।।
निर्वेदाद्यास्त्रयस्त्रिंशद्भावाःये परिकीर्तिताः ।
आंग्यलास्ये विनातेऽत्र विज्ञेयाः व्यभिचारिणः ।।४।।[5]

एवं चोल्लिखितोद्धरणोभ्यो भक्तेः रसत्व-साधनन् नाति दुर्घटमिति विरम्यतेऽतिविस्तरात् ।

भक्तिरस-सामग्री—

---

१. भक्तिरसायने २।७४-७५
२. तत्रैव २।७७
३. उज्ज्वलनीलमणौ, पृ० २६४
४. तत्रैव, पृ० २६५
५. तत्रैव, पृ० २६८

१. स्थायिभावः - ईश्वर-विषयिणी रतिः

२. आश्रयाः भगवद्भक्ता

विभावः

(क) आलम्बनं—परमेश्वरस्तदवताराश्च

(ख) उद्दीपनं—भगवतः सौन्दर्योत्कर्षः कार्याणि, दीनरक्षा, विराटस्वरूपादीनि, कीर्तनं देवालयाश्च ।

३. अनुभावाः—पुलकौत्सुक्यमश्रुपातादीनि ।

४. संचारिभावाः—हर्षौत्सुक्यनिर्वेदादयः ।

२. स्तोत्रेषुरसाः—

यद्यप्यारम्भिकसाहित्यशास्त्रेभक्तेः रसत्वं नांगीकृतम् परं विचारस्तुजात एवासीत् । पण्डितराजजगन्नाथेन तु स्पष्टतोभक्तेः रसत्वमंगीकृत्यापि मर्यादा-भंगभियानिषद्धम् परं वैष्णव-सम्प्रदायेषु रसत्वमस्यनिर्विवादमिति साधितम् प्राक् । स्तोत्रेषुभक्तेरेवप्राधान्याद्भक्ति-रसस्यैवप्राधान्यम् नास्वाभाविकम् । परं प्रसंगतः शान्तवत्सलशृंगारादयोऽपिरसावर्तन्त एव । तत्रादौ शृंगाररसमय-स्तोत्रत एवोदाहरणम् ।

नाना - पुष्पमणि -व्रात, पिच्छमुंजाफलादिभिः ।
कृष्णगुम्फितधम्मिलो, त्फुल्लरोमस्मरांकुरा ।।१।।
मंजुकुंजे मुकुन्दस्य, कुचौ चित्रयतः करम् ।
क्षपयन्ती कुचाक्षेपैः सुसख्यधुनोन्मदा ।।२।।
विलासेयत्नतः कृष्ण, दत्त-ताम्बूल-चर्वितम् ।
म्मित्वावाम्यादग्रहणाना तत्रारोपित-दूषणम् ।।३।।[1]

अन्यत्रापि—चंचला चपलास्नेहा मदघूर्णितलोचना ।
स्वामिनी सुमुखी चन्द्रा, भाले तिलकनिर्मिता ।।१।।
सिन्दूरकुंकुमारंगा, बिन्दुकी परिरंजिता ।
वन-शोभा-करी धौता, कर्णे कनक-कुण्डलै ।।२।।[2]
श्रीमाधवी-कुसुम-सौरभ-मंजु-कुंजे,
तल्पेद्विरेफ-कुलगुंजित-कंजपुंजे ।
संविष्टयोः सुखदकेलिविशेषभाजोः,
श्रीराधिकागिरिभृतो सुरतं स्मरामि ।।१।।[3]

एवमेव त्रिपुरारहस्ये - ललितास्तवे सौन्दर्यलहर्य्यामन्यत्र च विचित्र युगलपरिहासादि-स्तोत्रेषु ।

---

१. श्रीस्तवकल्पद्रुमे श्रीविशाखामिधानस्तोत्रे १०१-१०३

२. तत्रैव, श्रीराधिकास्तवराजे १,२

३. श्रीस्तवकल्पद्रुमे, श्रीविशाखामिधानस्तोत्रे, सुरत रमणाष्टके, १, पृ० ६६८

भक्तिरसत्वमनंगी-कुर्वतामाचार्याणाम्मते तु सर्वाणिस्तोत्राणि शान्तरसा-न्तर्गतान्येव कागणना केषांचित् परं भक्तेः रसत्वमंगी कुर्वतामपि वैराग्य-प्रधानस्तोत्रेषु शान्तरसोऽन्य त्र च भक्तिरसः। तथा च वैराग्य-पंचके—

शिलं किमनलं भवेदनलमौदरं बाधितुम्।
पयः—प्रसृति-पूरकं, किमु न धारकं सारसम्।
अयत्नमलमल्पकं पथिपटच्चरंकच्चरम्।
भजन्तिबिबुधा मुधा, अहहकुक्षितः कुक्षितः ॥१॥[1]

आचार्य शंकरोऽपि—

मूढजहीहि धनागमतृष्णां, कुरुसद्बुधि मनसि वितृष्णां।
यल्लभसेनिकर्मोपात्तं वित्तं, तेनविनोदय चित्तम् ॥१॥[2]
दिनमपि रजनीसायंप्रातः, शिशिरवसन्ते पुनरायात्ः।
कालः क्रीडतिगच्छत्यायु, स्तदपिनमुंचत्याशावायुः॥
अग्रेबह्निः पृष्टेभानू, रात्रौ, चिबुकसर्मपित-जानुः।
करतलभिक्षातरुतलवासः, तदपि न मुंचत्याशापाशः॥३॥[3]

आर्तिषोडशस्तेत्रे—

जन्मानन्त्यसमुत्थकिल्विषपरिपाकोत्य-दुश्शेमुषी।
संजातानभिजातकृत्यकलना शीलं सदा श्रीपते।
पाहिश्रीकरिशैलनाथकरुणाकूपार-पापाकरम्,
दासं मामरुणाब्जनेत्रयतिराहुमुख्यार्यसेव्यप्रभो ॥१॥
मुधाचिन्ताभीतिर्व्यसनमधिकं चाधिरमित्रता,
प्रकृष्टस्वस्तौत्रं महदधिकनिन्दा च ममप्रभो।
न मुंचन्ति स्वान्तं नयननलिनेमां हि सततम्,
महाप्रारब्धस्यानुगुणफलमेतन्न विषमः ॥२॥[4]

## वत्सलः

शान्तभक्तरसाभ्यां वत्सल-रसस्य पार्थक्यम् प्रागेव साधितम्। बहुषु-स्तोत्रेषु मातृ-पितृ-भावेनाराधनं भगवतस्तत्र वत्सलस्य प्राधान्यम्। यथाचार्य-शंकरः।

---

१. बृहत्स्तोत्ररत्नाकरे, पृ० २५१, श्लो० १
२. तत्रैव द्वादश पंजरिकास्तोत्रे १
३. तत्रैव चर्पटपंजरिकास्तोत्रे, १,२
४. स्तोत्रार्णवे, पृ०४३८, श्लो० १, ६, श्री चन्द्रशेखरन, मद्रास १९६१

पृथिव्यां पुत्रास्ते जननिबहवः सन्ति सरलाः,
परं तेषां मध्ये विरलतरलोऽहं तव सुतः ।
मदीयोऽयं त्यागः समुचितमिदं नो तवशिवे,
कुपुत्रो जायेत्क्वचिदपि कुमाता न भवति ।।१।।
आपत्सु मग्नः स्मरणं त्वदीयं करोमिदुर्गेकरुणार्णवेशिवे
नैतच्छठत्वं ममभावयेथाः, क्षुधातृषार्ताः जननींस्मरन्ति ।।१।।
मत्समः पातकीनास्ति पापघ्नित्वत्समानहि ।
एवं ज्ञात्वामहादेवियथायोग्यं तथा कुरु ।।३।।[1]

एवमेव—

तव चका किलनस्तुतिरम्बिके
सकल शब्दमयी किलतेतनुः ।
निखिलमूर्तिषु मेभवदन्वयः
मनसिजासु बहिः-प्रसरासु च ।।१।।
इति विचिन्त्य शिवे शमिताशिवे,
जगति जातमयत्नवशादिदम् ।
स्तुतिजपार्चनचिन्तनवर्जिता ।
नखलुकाचनकालकलास्तिमे ।।२।।[2]

भागवते—

उत्क्षेपणं गर्भगतस्य पादयोः,
किं कल्पते मातुरधोक्षजागसे ।
किमस्तिनास्तिव्यपदेशभूषितम्,
तवास्तिकुक्षौकियदप्यनन्तः ।।१।।[3]

## अलंकारः

विषयवितृष्णानां स्वान्ते रममणाना परम भागवतानां भगवदाराधने-प्रवृत्तिः स्वाभाविकी तेषां वाणीषु अलंकारयोजनंन साध्यम् । परं निसर्गतश्चिदानन्दे लग्नचित्तानां तेषां स्तोत्रेष्वलंकाराः स्वान्कृतार्थान्कर्तुमायान्ति स्वयमेव सर्वालंकार-शिरोमणौभगवति । अन्यच्च स्तोत्र-साहित्यमपिद्विधंकं काव्यात्मक-मन्यत्तुभावप्रधानं तत्र काव्यात्मकेषु न केवलं साधारणालंकाराणामपितुपद्म-मुरजादिबन्धानामपि प्रयोगो विद्यते तत्र केषांचिदुदाहरणमुभयोरेव स्तोत्रविधयो प्रदर्श्यते । अनुप्रासः—

---

१. देव्यपराधक्षमापनस्तोत्रे १, ६, १०
२. आचार्य अभिनवगुप्त, श्री दुर्गासप्तशती, गीता प्रेस, गोरखपुर, २०१५
३. श्रीमद्भागवते १०।१४।१२, पण्डित पुस्तकालय, काशी, २०१८

स्वरवैषम्येऽपि शब्द साम्यजन्योऽयमलंकारोयत्र तत्र सर्वत्र स्तोत्रेषु दृश्यते तथा च—

गणपति-परिवारं चारु-केयूर-हारम्,
गिरिधर-वर-सारं योगिनी चक्रधारम्।
भवभयपरिहारम् दुःखदारिद्रयदूरम्,
गणपतिमभिवन्दे वक्रतुण्डावतारम् ॥१॥[1]

अन्यच्च— योगं योगविदां विधूतविविधव्यासंगशुद्धाशय-
प्रादूर्भूत-सुधारसप्रसृमरध्यानपदाध्यासिताम्।
आनन्दप्लवमानबोधमधुरामोदच्छटा-मेदुरम्।
तंभूमानमुपास्महेपरिणतं दन्तावलस्यात्मना ॥१॥[2]

विभावना—

पद्मानां दशभिर्यदस्तुत शतैस्त्वत्प्रेयसः पादुकाम्,
त्रयन्तार्यकविः, परोह्यमुखस्तत्रास्ति कोविस्मयः।
स्तोत्रप्रज्ञमतीवमूकमपि, मां श्लोकैः सहस्रेण ते,
स्तोतरि समवेक्ष्य सूक्ष्ममतिभिः कस्यान्नविस्मीयते ॥१॥[3]

अल्पैः कृतं महत्कर्म विलोक्य कथंन विस्मीयते।

काव्यालिंगमुदात्तश्च—

स्वैरप्ररोहयतुपद्यसहस्रमाशु, दासस्य मेवदनसीम्नितवावलोकः।
यः क्वापि हन्त सकृदुज्जवलिबन्धभाजि जन्तौ
जगज्जननिस्तौतिसहस्र-मक्ष्णाम् ॥१॥

मुद्रा— भजे दुग्धाम्बुधिं यत्र परिष्कर्तुं हरेरुरः।
कठिनं सुकुमारं च रत्नं प्रादुरभूत्द्विधा ॥[4]

अत्र प्रादुर्भावस्तबकस्य प्रादुर्भावान्मुद्रालंकारः।

विरोधाभासयमकौ—

जननिपुष्यसि तामरसंपदम्, वितनेषु च न तामरसं पदम्।
परमुरस्फुरण प्रतिरोधिनः परमुरस्फुरणं नयसेऽधुना ॥१॥[5]

उदात्तरूपकातिशयोक्तयः—

---

१. गणेशाष्टके १ बृहत्स्तोत्ररत्नाकरे
२. महागणपतिस्तोत्रे १
३. लक्ष्मीसहस्रे १।३३
४. तत्रैव १।२७
५. तत्रैव ३।२४

द्विपंचग्रीवाज्ञा-चकित-समुदंचान्निशिचराः
प्रपंचप्रक्षिप्तः पवनसुतः बालेहुतवहः ।
यतो जातः शीतः तमिहवसन्ताप-विवशे ।
कृपापूरं स्वैरंकिरतु मयि लोकाम्बुभवती ।।१।।[1]

अर्थान्तरन्यासः—

कार्येषु कारणगुणाःनियताः भव
न्त्युक्ति सतामक्तिथामवधारयामः ।
चान्द्रीकला च भवती च पयोधिमध्या-
ज्जातेदमम्बसुधया दयया च शीते ।।१।।[2]

एकावली— चलतिकलितायासे श्वासे कफार्गलितेगले,
भ्रमतिनयनेभ्रान्तेस्वान्ते पिपासुषु चासुषु ।
त्वरयतिदयाजन्तौ हन्तोत्क्रमे भवती रमे ?
त्वमपि कृपणत्राणे प्राणेश्वरश्चपराङ्मुखम् ।।[3]

**श्लेष**—भुवनोत्तरसिन्धुभूषितो घनशैवालकवत् कचोध्रुवम् ।
सुरुचामहितीहिमालयोदितयोद्भासितमीनलक्षणः ।।१।।[4]

तवकचोघनोमेघः शैवालं जलनीलीकोब्रह्मा तद्वत् घनायेशिवस्यालका द्वन्द्वान्तेश्रूयमाणस्य वतः प्रत्येकेन सम्बन्धः । भुवनोत्तरसिन्धुभूषितः भुवनोत्तरेण लोकोत्तरेण सिन्धु भुवा-चन्द्रेण तदाख्यालंकारेणोषितः आश्रितः यद्वा भुवनोत्तरे-लोकेत्तरे समुद्रेत्वयिसन्तान प्रेम्णा भूषितः ।

सुरुचा शोभनकृष्णवर्णेन, महितः एवंहि निश्चयेन घनश्चोदितया मालया स्रजा उद्भासितो दीपितः मीनलक्षणः कामो येन । तथा च भुवनेन जले-नोत्तरस्य पूर्णस्य सिन्धोः समुद्रस्य भुवि उषितेः मालया राजिरूपेणोदितया सुरुचा विद्युता महितस्तथा उद्भासितं मुत्पादितम् मीनाःरक्ष्यन्ते येन तन्मीनलक्षणं जलवर्षणं येन । रलयोरेक्यात् ।

**शैवालश्च**—भुवनेन जलेनोत्तरस्यां सिन्धुभुविनदीभूमौ उषितं तथा मायाः लक्ष्म्याः आलयः कमलः तस्मा दुदितया सुरुचा महितः प्रकटितमत्स्यचिह्नः । सामानाधिकरण्यात् ।

**ब्रह्मा**—भुवनोत्तरे लोकोत्तरे सिन्धुभुविनदीजन्ये पद्मे आसनभूते उषितः । सुरुचा शोभमान तेजसामहित एव हिमालयादुदितः तयासरस्वत्यान-द्यावा उद्भासितकामः ।

---

१. लक्ष्मीसहस्रे ४।१०
२. तत्रैव ४।१३
३ तत्रैव ४। ६
४, तत्रैव ८६

उत्प्रेक्षा—सिन्दूरकान्तां जगदम्बमल्लीसाराभिरामांचिकुरावलिते ।
मन्यामहेदेवि कलिन्दकन्यां, गंगासरस्वत्युदितानुषंगः ।।१।।[१]
मनोजमातस्तवदेवि हासे, मन्येमधुध्वंसनकीर्तिभासम् ।
किम्वालसत्वद्रसनाग्रवृत्ते, व ग्देवतायाः वपुरशंपूरम् ।।२।।[२]

वक्रोक्तिः—बालेदेहिपयोधरं करतले प्रावृट्त्वया याच्यताम्,
आश्लेषाभिरुचिं विधेहि न शशीतस्यास्मि किन्तु स्वसा ।
आस्तामुत्तरमेतदीदृगधरं याचामि वाचा स्वयम्,
नास्त्यर्थेद्रि धरयांचयेति यदुभिः पद्मेधिनोषि श्रियम् ।।१।।[३]

काव्यलिंग—त्वमम्बदात्रीति किमत्रचित्रम्,
त्वद्वासदेशेऽपि न लोभ वार्ता ।
निदर्शनं तत्र भवन् निवासः
सर्वस्वदायी स वृषाद्रि-नाथः ।।१।।[४]

द्वादशस्तबकेचित्रमयीरचना चात्र। तथा च—

गोभूमिका—कमलेदेवदेवस्य महिषीत्वं स्तुता रमे ।
विमले देविदेहस्य ह्यहिमत्वं नतास्मते ।।१।।[५]

अर्द्धपादानुलमिप्रतिलोभ—
कालीनाननीलाका राघिताहिहिताधरा ।
या मा सा मनसामाया कापि दीपप्रदीपि का ।।१।।[६]

मुरज वन्धः—
इन्दिरा मासुरापद्ममन्दिराधधरापहा ।
हविरादयहरादृष्ट्या सापरामासुराहत ।।१।।

सर्वतोभद्रः—
रमासदादास मारमानन्दा-ननदानना ।
सदाशया या शदासदा नया ममयानया ।।१।।[७]

श्लेषोज्जीवित-रूपकम्—
अखिलजगन्मातोमा तमसा तापेन चाकुलानस्मान् ।
अनुगृहणात्वनुकम्पा सुधारयाहसितया च क्रियाण ।।१।।[८]

---

१. लक्ष्मीसहस्रे ८।११
२. तत्रैव ८।७१
३. तत्रैव ६।४४
४. तत्रैव १३।६
५. तत्रैव २२।३
६. तत्रैव २२।६
७. तत्रैव २२।२५
८. उमासहस्रे, १।१।१। पाण्डिचेरी, १६४३

**उल्लेख:**—दातुं प्रभुः सान्त्वयितुंसमर्थः, कर्तुं क्षमस्तर्जयितुं च शक्तः ।
सरक्षतां चते च सर्वबन्द्ये करस्तुषारांशुमृतागृहीतः ॥२॥[1]

**सारः**— अमृतांशु-बिम्बसारात् भूयोऽपि विनिर्गतोभृशं सूक्ष्मः ।
सारो गौरी बदनात् दरहासोऽहरतु दुःख जालनः ॥१॥[2]

**मालोपमाः**—वर्षा-पयोदपटलस्य सान्द्रतर-सूर्यतिमजोर्मि चयनिम्न तुगंता ।
कालाहि-भूमि-प्रतिदीर्घता च ते केशेषुभर्गभुवनेश्वरि त्रयम् ॥१॥[3]

**दृष्टान्तः**— छिन्नानि नो कति शरीरभृतां शिरांसि,
तत्पूज्यते जगति रेणुकमेवशीर्षम् ।
कृता कलेवरवतां कतिनामयो नः ।
चेतो धुनोति सुरभिर्मृगनाभिरेकः ॥१॥[4]

मृगनाभिचेतोधुन्वतो बिम्ब-प्रतिबिम्ब भावः ।

अनुमानालंकार—

विदितमहिमविश्वाधानादनेकविघाद्भुतम् ।
प्रथितचरितः शर्वालोक-प्रताप-विवर्धनात् ।
प्रकटितगुणः पाप-वान्तप्रसार निरोधतः,
प्रदिशतु शिवाहासो भासो निधिः कुशलानि मे ॥१॥[5]

अपह्नुति—

व्याप्येदमिन्दोः भुवनं य एव,
प्रायेण तस्यामलचन्द्रिकाभूत् ।
मन्दस्तवार्तिं स धुनोतु हासो-
निश्शेष - लोकेश्वर - बल्लभायाः ॥१॥[6]

इत्थं चोदाहृतोद्धरणेभ्यः स्पष्टमेवावगम्यतेयत्स्तोत्र-साहित्ये प्रायः समेषां प्रधानालंकाराणां प्रयोगोजातः । छन्दोदृष्टयाऽपिलघुदीर्घवृत्तानां प्रयोगोऽभूद्यथाऽनुष्टुप् मालिनी-हरिणी-शिखरिणी—भुजंग प्रयात बसन्त-तिलकमान्दा-क्रान्ता-तोटकरथोद्धतादिवृत्तानां प्रयोगोऽभूत् । रीतिषु गौडी-वैदर्भी-पांचालीनाम् प्रयोगः । गुणेषु प्रासादौजोगुणादीनाम् । लघुपदानां समासबहुलानां च प्रयोगः स्तोत्र-साहित्ये समुपलभ्यते । वाग्वैदग्ध्यमनल्परूपेण दृश्यते । तथा च —

१. उमासहस्रे २।१।१४
२. तत्रैव १।४।१
३. तत्रैव ३।२।५
४. तत्रैव ७।४।८
५. तत्रैव ६।२।१।३४
६. तत्रैव १०।३।१

हास्यं न लोके, मयिकिंचिदस्ति,
हास्यास्पदं यत्स्वयमेव जातः ।
किन्तुत्वदग्रे शरणागतानाम् ।
हास्यं हि लोकेषु महाननर्थः ॥१॥[1]

अन्यच्च—

स्वैरेवयद्यपिगतोऽहमधः कुकृत्यैः,
तत्रापिनाथतव नारम्यवलेपपात्रम् ।
दृप्तः पशुःपतति यदि स्वयमन्धकूपे।
नोपेक्षते तदपि करुणिको हिलोकः ॥१॥[2]

अन्यत्रापि—

अभूतपूर्वं मम भाविकिंबा, सर्वं सहेऽहं सहजंहि दुःखम् ।
किन्तुत्वदग्रेशरणागतानाम्, पराभवो देव न तेऽनुरूपम् ॥१॥[3]

## स्तोत्रेषुदार्शनिक-पक्षाः

पूर्वाध्यायानां साधारण-दृष्ट्याऽपि विवेचनेनेदम् सम्यक्रूपेणज्ञातुंशक्यते यत्स्तोत्राणां रचनासु व्यक्तिविशेषाणां विशिष्टप्रवृत्तिर्भवति । सा चार्तजिज्ञासुअर्थिज्ञानिभेदाच्चतुर्विधा । तत्रापि कानिचिद् व्यक्ति-विशिष्ट-रचितानि काव्यमयानि । तत्रस्तोत्रत्वापेक्षया काव्यपक्षस्य प्रधानता कानिचिच्चपुराण-पठितानि तत्र प्रकरणागत कथासम्बद्धानि । तार्तीयकानि च स्तोत्राणि-व्यक्तिप्रधानानि । कानिचिच्चाचार्यविशेषरचितानि यत्र भक्त्या साकं तत्तत्सम्प्रदायाचार्याणाम् मतानामुल्लेखोविशेषेण । यथा चार्य-शंकर यामुनवल्लभरामानुजरामानन्दादीनामाचार्यवराणाम् । तत्र च सम्प्रदाय प्रवर्तकाचार्याणाम् रचनासुतत्तद्दार्शनिकमतोपलब्धिनस्वाभाविकी । खण्डनमण्डने स्वतन्त्र-रूपेण वाऽन्येषांस्तोत्र-काराणाम् मतेष्वपित्तत्तन्मतानुकुलं सांख्यन्यायवैशेषिकादीनाम् शैव-शाक्तादीनां चे मतानि नामतः स्वरूपतो वा चर्चितानि ।

एवं चात्र प्रकरणे संक्षिप्तसरण्या स्तोत्र निर्दिष्टदार्शनिकपक्षाः संकेतितव्याः भविष्यन्ति । तत्रादौ बहुजनसमादृत-प्रचारित-व्याप्तिचिन्तनदृष्टया प्रधानत्वेनाद्वैतमतमेव समुस्थाप्यते । अद्वैताचार्याणां आचार्यशंकराणाम् स्तोत्रसाहित्येऽपि महत्त्वपूर्णं स्थानमिति नाविदितं कस्यचित्सचतसस्तेषाम् ७४ स्तोत्र-

---

१. जगदीशतके ७६ श्लोक स्तोत्रार्णवे
२. संस्कृत साहित्य इतिहास, श्री बलदेव उपाध्याय, पृ० १
१. स्तोत्ररत्ने

मणि—प्रकाशितानि किन्तु शतद्वयं यावत्सन्तीति[1] शोधकर्तारस्तत्तद्ग्रन्थेषु निर्दिष्टमतोऽप्यादावद्वैतमेव चर्च्यते ।

अद्वैतवादः—

न द्वैतं भेद इत्यद्वैतमेतत्सिद्धान्तानुसार जगतः परमतत्त्वमेकमेव । तच्च ब्रह्मशब्देनाभिधीयते । तथा च—

"तेषां द्वैतिनां द्वैतदृष्टिः । अस्माकमद्वैतदृष्टि स्तैरस्मदीयोऽयं वैदिकः सर्वानन्यत्वात् । आत्मैकत्वदर्शनपक्षो न विरुद्ध्यते यथा स्वहस्तपादादिभिरिति ।"[2]

आचार्य शंकर-मते यथा मृदः विभिन्न वस्तूनि घटादीनि उत्पाद्यन्ते यथैकस्यैव स्वर्णस्य विकाराः कटकांगद मुद्रिकादयस्तथैवैकस्यैव परमात्मनोब्रह्मणो-विवर्त जगत् । तथा च—

"यतो वा इमानि भूतानिजायन्ते ये न जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्ब्रह्मेति ।"

विवर्तः— अतत्वतोऽन्यथा प्रथा विवर्तइत्युदाहृतः ।

अध्यासः "अतस्मिस्तद्बुद्धिः"

इदमत्रं यत्र तत्र सर्वत्र स्तोत्रेषूपलभ्यते यद्यपि भक्तिद्वैते एव विशेषेण सम्भवति तथापि श्रीमत्पूज्यपादाचार्य-शंकरो ज्ञानप्राप्तयेऽद्वैतबोधाय भक्तिः निर्बाधरूपेणं स्वीचकार । एकस्मादेव निर्गुण-निर्विकार-निर्विकल्पकब्रह्मणो जगदेतदव्यवर्तत । तथा च गणेशाष्टके—

यतोऽनन्त शक्तेरेनन्ताश्च जीवाः, यतो निर्गुणादप्रमेयाः गुणास्ते ।
यतो भाति सर्वं त्रिघा भेदभिन्नं, सदा तं गणेशं नमामोभजामः ।।१।।
यतोवेदवाचोऽतिकुण्ठामनोभिः सदा नेतिनेनीति यत्ताःगृणन्ति ।
परब्रह्म रूपं चिदानन्द भूतं सदा तंगणेशं नमामोभजामः ।।२।।[3]

गणपतिस्तवे च ब्रह्मणः स्वरूपमद्वैतमुक्तम् ।

अजनिर्विकल्पंनिराधारामेकं, निरानन्दमानन्दमद्वैत-पूर्णम् ।
परंनिर्गुणं निर्विशेषंनिरीहं, परब्रह्मरूपं गणेशं भजामः ।।१।।[4]

एवमेवगणेशमहिम्निस्तोत्रे प्रथमश्लोके[5] वीरेश्वरस्तोत्रे प्रथम-तृतीययोर्न-केवलमेकस्माद्ब्रह्मणो, जगतः विवर्तोऽपि तु भ्रमस्य स्वरूपमपि शंकराचार्य मतानुसारं प्रतिपादितम् तथा च—

---

१. शंकर का मायावाद, डा० राममूर्ति, रचना प्रकरणे
२. माण्डूक्यकारिकाभाष्य ३।१७-१८
३. बृहत्स्तोत्ररत्नाकरे गणेशाष्टके १, ७
४. बृहत्स्तोत्ररत्नाकरे, गणपतिस्तवे, १, २
५. तत्रैव, पृ० ६

रज्जौसर्प: शुक्तिकायां च रौप्यं, पय: पूरस्तन्मृगाख्येमरीचौ,
यद्वत्विष्वभेवप्रपंचो यस्मिंज्ञाते तं प्रपद्ये महेशम् ।।१।।[1]

विष्णु-महिम-शिवमहिमस्तोत्रयोश्च समेषां दर्शनानाम् नामग्रहपूर्वक-मुल्लेखकृत्वैकत्वं प्रतिपादितम् । तथा च—

यदाहुर्ब्रह्मैकेपुरुषमितरेकर्मच परेऽपरेबुद्धं चान्ये शिवमहिमधातारमपरे ।
तथा शक्ति केचित् गणपतिमुतार्कं च सुधियोमतीनां वै भेदात् त्वमसि तदशेषंमम मति: ।।१।।[2]

शिवमहिम्नि च प्रसिद्धश्लोक: "त्रयी सांख्य योग:"[3] अध्यात्मरामायणीयरामगीतायां चाद्वैतमेव बहुधा संक्षिप्तरूपेणोपन्यस्तम् । प्रथमं तावत्कर्मापेक्षयाज्ञानस्यप्रधान्यम् कर्मनाशश्च विद्ययैवभवति । तथा च—

क्रियाशरीरोद्भवहेतुराहता, प्रियाप्रियौ तौ भवत: सुरागिण: ।
धर्मेतरौतत्रपुन: शरीरकं पुन: त्रिधा चक्रवदीर्यते मन: ।।१।।
अज्ञानमेवास्यहिमूल-कारणं तद्धानमेवात्रविधौविधीयते ।
विद्यैवतन्नाशविधौपटीयसी, न कर्मतज्जं सविरोधमीरितम् ।।२।।[4]

**कर्मत्याग:**—

तस्मात्यजेत्कार्यमशेषत: सुधी:, विद्याविरोधान्नतु संप्रयोगत: ।
आत्मानुसंधानपरायण: सदा, निवृत्तसर्वेन्द्रियवृत्तगोचर: ।।१।।[5]

कर्मत्यागे त्तैतरीय वाजसनेयो: श्रुत्योरपि प्रमाणम् तथा च—

सा तैत्तरीयाश्रुतिराहसादरं न्यासं, प्रशस्ताखिलकर्मणां स्फुटम् ।
एतावदित्यहि च वाजिनां श्रुतिर्ज्ञानं, विमोक्षाय न कर्मसाधनं ।।१।।[6]

तैत्तरीये—"न कर्मणा न प्रजया धेनन त्यागेनैक अमृतत्वमानशु: ।"[7]
वाजसनेमे—"एतावदरेखल्वभूतत्वम् ।"[8]

तत्वमसीत्यादिवाक्यविचारोऽप्यद्वैतरीत्याध्यात्मरामायणीय-स्तोत्रे पदार्थ वाक्यार्थलक्षणादि विवादास्तथा च—

श्रद्धान्वितस्तत्त्वमसीति वाक्यत:, गुरो: प्रसादादपिशुद्धमानस: ।
विज्ञायचैकात्म्यमथात्मजीवयो:, सुखीभवेन्मेरुरिवप्रकम्पन: ।।१।।

---

१. बृहत्स्तोत्ररत्नाकरे, पृ० ५७, श्लोक ३ वीरेश्वर स्तोत्रे
२. तत्रैव, पृ० ६५, विष्णुमहिम्न
३. शिवमहिम्न, श्लो० ७
४. अध्यात्मरामायणे ८, ९ श्लोक रामगीतायां आ० १७४
५. तत्रैव १७
६. अध्यात्मरामायणे २१
७. तै० आ०, प० १०।१०
८. बृ० उ० ४।५।१५

आदौ पदार्थावगतिर्हि कारणं, वाक्यार्थविज्ञानविधौ विधानतः ।
तत्त्वं पदार्थौ परमार्थ-जीव कावसीति, चैकात्म्यमथानयोर्भवेत् ।।२।।
एकात्मकत्वाज्जहती नसम्भवे, तथा जहल्लक्षणताविरोधतः ।
सोऽयं पदार्थोविभागलक्षणा, युज्येत्तत्वं पदयोरदोषतः ।।३।।[१]

एकमेव २८ तममारभ्य पंचीकरणोपाधिवाधोऽध्यासादि निरुपणं ४२तमे यावत् । तत्राध्यासो यथा—

यदन्यदन्यत्रविभाव्यतेभ्रमादध्यासमित्याहुरमुंविपश्चितः ।
असर्पभूतेऽहिविभावनं यथा, रज्ज्वादिकेतद्वदपीश्वरे जगत् ।।१।।[२]

तत आत्मचिन्तने ४७तमे यावत् । ओंकार-स्वरूप निर्णयः ५५ तमतः ५८ तमं यावत् ।

भागवतीयगर्भस्तोत्रेपाकशासनकृत-श्रीकृष्णस्तोत्रे विप्रपत्नीकृत श्रीकृष्ण स्तोत्रे चैकात्म्योपदेशः श्रीशंकराचार्य कृतानि निर्वाणदशकनिर्वाणषद्कात्मपंचक-कौपीनपंचकादीनि । तत्त्वमसीत्यादिस्तोत्रेषु अद्वैतवादो चकास्ति । तथा च—

अहंनिर्विकल्पः निराकाररूपः, विभुत्वाच्च सर्वत्रसर्वेन्द्रियाणाम् ।
न चासंगतिर्नैवमुक्तिर्नमेयश्चिदानन्दरूपः शिवोऽहम् ।।१।।[३]

भ्रमोयथा—

रज्जवज्ञानवद्भातिरज्जुर्यथाहिः,
स्वात्मज्ञानादात्मनो जीवभावः ।
आप्तोक्त्याहि भ्रान्तिनाशे स रज्जुः,
जीवोनाहं दैशिकोक्त्या शिवोऽहम् ।।१।।[४]

श्रीशंकर कवचेऽपि—

महेशः परमं ब्रह्म शान्तः सूक्ष्मः परात्परः ।
सर्वान्तरः सर्वसाक्षी, चिन्मयस्तमसः परः ।।१।।[५]

श्रीजीवदेवरचित भक्तिवैजयन्तीस्तोत्रे—

सत्यं ज्ञानमनन्तमेकममलं ज्योतिः स्वतोभास्वरम् ।
ब्रह्मानन्दघनं परं गुरुमुखाद्विज्ञायवेदान्ततः
सद्यः स्मेरसरोजसुन्दररसं, लक्ष्म्याः मुदोपासितम् ।
तद्विष्णोः परमं पदं हृदि, सदापश्यन्ति यत्सूरयः ।। १।।[६]

---

१. रामगीतायाम् २४।२७
२. तत्रैव ३७
३. निर्वाणाष्टके, ६ श्लो०
४. आत्मपंचके २
५. स्तोत्रार्णवे, पृ० ११६, श्लो० १८
६. तत्रैव, पृ० ४७७, श्लो० ६

श्रीगणेशपूर्वशतके--

जगतः सर्गादाद्यात् प्रागप्येकस्त्वमेवभासि विभो ।
तस्माद्गणप भवन्तं निखिलनिदानं गदन्तिनिगमान्ताः ।।१।।
त्वमतो मायातीतं सकलजगत्कल्पनाद्यधिष्ठानम् ।
अद्वैतसीमभूतमवाङ्मनसागोचरं परं ब्रह्म ।।२।।[1]

श्रीभक्तिसम्वर्धनस्तोत्रे—

जातं जातं खलुजगदहोचित्रमेतत्समस्तम,
क्षीणं क्षीणं मुहुरपिपरादृश्यते यत्प्रभावात् ।
तस्मैसाक्षात्स्वरसपरमानन्दवीचिमयाय,
ब्रह्माख्याय त्रिभुवनपते देव तुभ्य नमोऽस्तु ।।१।।[2]

श्रीकृष्णमंगलस्तोत्रे च—

सर्वेवेदाः सांग-कलापाः परमेण,
प्राहुस्तात्पर्येण यदद्वैतमखण्डम् ।
ब्रह्मासंगं प्रत्यगभिन्नं पुरुषाख्यम्,
तस्मैश्रीकृष्णाय नमो मंगलधाम्ने ।।१।।[3]

एवं यत्र तत्र सर्वत्र स्तोत्रेष्वद्वैतवेदान्त-प्रतिपाद्यसिद्धान्तानां निर्देशाः सन्ति ।

विशिष्टाद्वैतम्--

विशिष्टं चतदद्वैतमिति चेतनाचेतनविशिष्टब्रह्मणएकत्वमितिभावार्थः । इत्थं च न केवलं ब्रह्मणोऽपितु जीवात्मनोजगतश्चापि सत्यतेत्यर्थः । तत्वमसीति महावाक्ये तस्य त्वमिति षष्ठी-तत्पुरुष समासो जीवब्रह्मणोरंशांशिभाव-सम्बन्धः । तथा च यामुनाचार्य-कृत-स्तोत्र-रत्ने—

न धर्मनिष्ठोऽस्मि न चात्मवेदी, न भक्तिमांस्त्वच्चरणारविन्दे ।
अकिंचनोऽनन्यगतिः शरण्यं, त्वत्पादमूलं शरणं प्रपद्ये ।।१।।
ननिन्दितं कर्मतदस्ति लोके, सहस्रशोयन्ममयाव्यधायि ।
सोऽहं विपाकावसरे मुकुन्द, क्रन्दामिसम्प्रत्यगतिस्तवाग्रे ।।२।।
अभूतपूर्वं ममभाविकिंवा, सर्वसहेऽहं सहजं हि दुःखम् ।
किन्तु त्वदग्रे शरणागतानां, पराभवो देव न तेऽनुरूपम् ।।३।।
ननु प्रपन्नः सकृदेव नाथ, तवाहमस्मीति च याचमानः ।
तवानुकम्प्यः स्मरतः प्रतिज्ञां मदेकवर्जंकिमिति व्रजंते ।।४।।[4]

---

१. स्तोत्रार्णवे, पृ० ५१३, श्लोक ४,५
२. तत्रैव, पृ० ५६३, श्लो० १
३. तत्रैव ५६४, श्लोक १
४. स्तोत्ररत्ने (यामुनाचार्य) १९-२२

अत्र मते शरणागतेः (प्रपत्तेः) आवश्यकत्वं सा च भक्तेरनिवार्यमंगम् अन्यत्र च रामानुजाचार्यः—

पितरम् मातरम्, दारान् पुत्रान्बन्धून्सखीन्गुरुन् ।
रत्नानि धन-धान्यानि, क्षेत्राणि च गृहाणि च ॥१॥
सर्वधर्माश्चं संत्यज्य, सर्वकामांश्च साक्षरान् ।
लोकविक्रान्तचरणौ, शरणं तेऽव्रज मविभो ॥२॥[1]

भगवतो भक्तिरेव मुक्तिस्तथा च मुकुन्दमालायाम्—

मुकुन्द मूर्ध्ना प्रणिपत्य याचे, भवन्तमेकान्तप्रियन्तमर्थम् ।
अविस्मृतिस्त्वच्चरणारविन्दे, भवे भवे मेऽस्तु तवप्रसादात् ॥
आनन्दगोबिन्दमुकुन्दराम, नारायणानन्तनिरामयेति ।
वक्तुं समर्थोऽपि न वक्तिकश्चित्, अहोजनानां व्यसनानिमोक्षे ॥[2]

अन्यत्रापि—

यो राज्यपालनकृते मणिपादुके स्वे
दत्वा नताय भरताय च सान्त्वपूर्वम् ।
पुर्य्यां निवर्त्यमभूत् परम-प्रहृष्टः,
तं राम मार्तिहरणं शरणं भजामि ॥१॥
यः पुष्पकं समधिरुह्य वधूसहायः,
साकं निजानुजविभीषणभानुसूभिः ।
अन्यैः हरीन्द्रनिकरैः स्वपुरीं प्रतस्थे,
तं राममार्तिहरणं शरणं प्रपद्ये ॥२॥[3]

द्वैताद्वैतवादः—

श्री निम्बार्काचार्य प्रवर्तिकेऽस्मिन्सम्प्रदाये द्वैताद्वैतभेदाभेद-वाद एवास्योपलब्धिः निम्बार्क सम्प्रदायीयस्तोत्रेषूपलभ्यते । तथा च—

ज्ञानस्वरूपं च हरेरधीनम्, शरीर संयोगवियोगयोग्यम् ।
अणुं हिजीवं प्रतिदेहभिन्नम्, ज्ञातृत्ववन्तं यमनन्तमाहुः ॥[4]

विशुद्धाद्वैतम्—

आचार्य वल्लभोऽस्य प्रवर्तकः पुष्टिमार्ग इत्यपरनाम्ना प्रख्यातमत्रब्रह्म-साकारं सर्वशक्तिमत् सच्चिदानन्दरूपश्रीकृष्णस्य सायुज्यमेवमुक्तिः दाम्पत्यभावे-नाराधना । साम्प्रदायिकाचार्य-प्रणीतस्तोत्रेषु मतमिमुपलभ्यते यथा रासक्रीडा-

---

१. हिन्दुत्वे, पृ० ६५६, रामदास गौड़
२. बृहत्स्तोत्ररत्नाकरे, मुकुन्दमालायाम् ४ तथा २१
३. स्तोत्रार्णवे, पृ० ३१३, श्रीरामप्रपत्तिशतके २६,८७
४. हिन्दुत्वे, पृ० ६७१, निम्बार्काचार्यरचिते

गोपी-युगलगीतेषु श्रीकृष्ण-प्रेमामृत-रसायन-स्तोत्रेषु च—

सुधानिर्यासनयनः सुन्दरः श्यामलाकृतिः ।
नवयौवनसम्पन्नः श्यामामृतरसार्णवः ॥१॥
व्रजयोषित्सदाहृद्यो, गोपीलोचन-तारकः ।
जीवनानन्दरसिकः, पूर्णानन्द-कुतूहलः ॥२॥
बल्लवीवदनाम्भोजः, - मधुपानमधुव्रतः ।
निगूढरसवद्गोपी, चित्ताह्लाद कलानिधिः ॥३॥[1]

अचिन्त्यभेदाभेदवादः—

चैतन्यसम्प्रदायस्यनामान्तरमिदं चैतन्य-महाप्रभुर्नकेवलमस्य प्रवर्तकत्वेनापितु श्रीकृष्णभगवतः प्रेमावतारत्वेन प्रसिद्धः । रूपगोस्वामि-जीवगोस्वामि-सनातनगोस्वामिप्रभृतीनां स्तोत्रेष्विदं समुपलभ्यते । श्रीस्तव-कल्पद्रुमे मतस्यास्य-स्तोत्रबहुलम् । यथा चैतन्याष्टकगौरांगाष्टकम् श्रीकृष्ण चैतन्यनामस्तोत्रम्, श्रीकृष्ण चैतन्यसहस्रनामस्तोत्रादीनि । यथा—

यस्यानुकम्पासुखदा जनानां, संसार कूपाद्रघुनाथदासम् ।
उद्धृत्य गुंजाशिलयाददौ यस्तं गौरचन्द्रं प्रणमामिनित्यम् ॥१॥[2]

अन्यच्च— मधुरमधुरमेतद्वैष्णवानां चरित्रम् ।
कलिमतकृतहीनान् दोषबुद्ध्या न जग्मुः ।
सकल-निगमसारं नामदातुं चतत्र ।
प्रबल-करुणया श्री गौरचन्द्रोऽवतीर्णः ॥१॥[3]

रामानन्द-सम्प्रदायः—

विशिष्टाद्वैतपदे विशिष्टे च विशिष्टे च विशिष्टे तयोरद्वैतमिति विगृह्य-ब्रह्मशब्देनभगवान्रामएव मननीयः नरहरिदासादीनां स्तोत्रेषु दृश्यतेऽयं वादः । तथा च—

ओं चिदाकारो धाता, परम सुखदः पावनतनुः ।
मुनीन्द्रैर्योगीन्द्रैर्यतिपतिसुरेन्द्रैर्हनुमता ।
सदा सेव्यः पूर्णः जनकतनयागंरसुदगुरु ।
रमानाथो रामो रमतु ममचित्ते तु सततम् ॥१॥[4]

अन्यत्रापि— निष्प्रपंचनिर्विकल्पं निर्मलं निरामयम् ।
चिदेकरूपं सततम् भजेऽहं राममद्वयम् ॥२॥[5]

---

१. श्रीस्तवकल्पद्रुमे श्रीकृष्णप्रेमामृतस्तोत्रे ६,२५,२७
२. श्रीस्तवकल्पद्रुमे गौरांगलीलास्मरणमंगलस्तोत्रे श्लोकः ९४
३. तत्रैव श्री चैतन्ये शतके, पृ० २११, श्लो० ४५
४. बृहत्स्तोत्ररत्नाकरे, श्री रामचन्द्राष्टके १, पृ० १८६
५. बृहत्स्तोत्ररत्नाकरे, श्रीराम चन्द्राष्टके, पृ० १८८

एवमेव सीतारामाष्टके राम-कर्मनामाष्टाविंशत्युत्तर-शतस्तोत्रे श्रीरामतारावल्यादिस्तोत्रेषु श्रीमद् वाल्मीकीयपरिभवघ्नस्तोत्रे तथा च—

परमात्मा परब्रह्म सच्चिदानन्द विग्रहः।
मायामयमहालीलः स्वयम्भूर्विष्णुरव्ययः ।।१।।[1]

अन्यदर्शनानि—

**न्यायः**—वेदान्तवादस्तु स्तोत्रेषु पदेपदेऽवाप्यते परमन्यदार्शनिकपक्षा-अपि समुपलभ्यन्ते एव तथा च न्यायदर्शनम् विशमहिम्नस्तोत्रे—

किमीहः किंकायः सखलु किमुपायस्त्रिभुवनम् ।
किमाधारो धाता सृजति किमुपादान इति च ।
अतर्क्यैश्वर्ये त्वय्यनवसर-दुःस्थोहतधियः,
कुतर्कोऽयं कांश्चिन्मुखरयति मोहाय जगताम् ।।१।।
अजन्मानोलोकाः किमवयवन्तोऽपि जगताम्,
अधिष्ठातारं किं भवविधरनादृत्य भवति ।
अनीशो वा कुर्या द्भुवनजनने कः परिकरः,
यतोमन्दास्त्वां प्रत्यमरवरसंशेरत इमे ।।२।।[2]

अत्रानुमानेन "क्षित्यंकुरादिकं कर्तृजन्यं कार्यत्वाद् घटवादित्यनुमानानुसारमीश्वर-सिद्धिः कृता।"

**सांख्यम्**—नमोमूलप्रकृतये नित्याय परमात्मने ।[3]

अन्यत्रतत्वानां चर्याऽपि—

पृथिवीपातु मेधांमे पातुमे रसना जलम् ।
रूपं हुताशनं पातुस्पर्शो पातु च मारुतम् ।।१।।
श्रोत्रमाकाशमप्येतु मनोवैकारिकं पुनः ।
इन्द्रियाण्यपि संयान्तु स्वांस्वां योनिं यथायथम् ।।२।।[4]
पृथिवी पातु सलीलमापोऽग्निमनलोऽनिलम् ।
वायुराकाशमप्येतु मनश्चाकाश एव च ।।१।।
अहंकारं मनो पातु मोहनं सर्वदेहिनाम् ।
अहंकारस्ततोबुद्धि बुद्धिरव्यक्तमेव च ।।२।।
प्रधानेप्रकृतिं याते, गुणसाम्ये व्यवस्थिते ।
वियोगः सर्बकरणैः गुणभूतैस्तु मे भवेत् ।।३।।[5]

१. श्रीस्तोत्रार्णवे, पृ० २३२, श्रीरामकर्मनामाष्टाविंशत्युत्तरशतस्तोत्रे
२. शिवमहिम्नस्तोत्रे ५,३
३. स्तोत्रार्णवे, पृ० २५३, श्रीरामविश्वरूपस्तवे, श्लो० ३२
४. स्तोत्रार्णवे, पृ० ३४३, कृष्णानुस्मृति स्तोत्रे ५०-५१
५. तत्रैव ३४६, कृष्णनुस्मृतौ श्लो० ५२, ५५

योगः—

नोद्घघाटयति कपाटं स्वाम्यादेशंविना प्रवेशाय।
तद्वन्नोदघाटयति स्वाधिष्ठानादि निज-कपाटानि ।।१।।
सर्व शरीरि शरीरमूलाधारस्थिताहि कुण्डलिनी।
आवृत्यसर्वाधारान् मृद्भाण्डमिवास्तिमूलवह्नेयां ।।२[1]

एवं च दिङ्मात्रोदाहरणैरेव स्पष्टं प्रतीयते यत्स्तोत्रसाहित्ये प्रायः सर्वदर्शनानि-सन्ति । न केवल नाम मात्रेणःपितुमान्यताऽपि स्पष्टीकृता ।

## केचनस्तोत्रकाराः

प्रत्यहंजायमानानुसन्धानग्रन्थानाम्बाहुल्येऽपि महान्खेदकरोऽयं विषयोयतस्तोत्र कर्तृणां विषय इतिहासो मौनमेवालम्बते कतिपयनिजमहिम्नाख्यातिमागतेभ्य आचार्येभ्य ऋते । केषांचित्स्तोत्रकाराणांवृत्तमत्र प्रस्तूयते ।

### १. श्रीमयूरः

सस्कृत-साहित्येगद्य-शाखायाः मूर्धन्यवाणभट्टस्यश्वसुरः श्यालको वा काशीतःपूर्वोत्तरस्थगोरखपुर जनपदे लब्धजनिरयमद्यापितत्रास्य वंशजाः सन्ति । सप्तमशताब्दीयोऽयम् ६०६-६४८ ।[2] कुष्ठरोगाभिभूतः सूर्यं तुष्टावसंस्कृतसाहित्ये प्रसिद्धं प्रौढस्तोत्र-काव्यमिदम्। संस्कृतभाषायां कवेरप्रतिमाप्रतिभा ध्वन्यते । गौडीया रीतिरोजोगुणोनुप्रास-प्रासितं अत्र सन्ति श्लोकाः १०० । सूर्यकिरण-रथाश्व-विम्बवर्णनेन साकम् ब्रह्म विष्ण्वादिभिरस्य तुलना कृता । अनुप्रासयमकोपमोत्प्रेक्षादीपकतुल्ययोगिताव्यतिरेक - विरोधादीनांसमवायोऽत्रमनोहरः ।

### २. श्रीहर्षः

संस्कृत-साहित्ये परमां ख्यातिमागतस्यास्य विषये न किमपि बहु वक्तव्यम् । वाणमयूरादयोऽस्यैवसभासदा आसन् समयश्चास्य ६०६-६४८ । सुप्रभातस्तोत्रं अष्टमहर्षि-चैतन्यस्तोत्रं चास्य प्रधानग्रन्थौ ।

### ३. श्रीवाणभट्टः

स्वरुचिरवर्ण-पदात्मिकायाः रसभाव-समुज्ज्वलायाः जगन्मनोहारिण्याः मधुरायाः रचनायाः कृते प्रसिद्धोऽयं चण्डीशतकमस्य-प्रसिद्धः स्तोत्रग्रन्थः स्रग्धरा-

---

१. तत्रैव गणेशपूर्वशनके, पृ० ५,१७, श्लो० ६५,६६
२. संस्कृत साहित्य का इतिहास, पृ० २६४, श्री बलदेव उपाध्याय, १६४८, काशी

वृत्तैःभगवत्याः दुर्गायाः मनोहारिवर्णनम् समासानालम्बायमानताकर्णकुहरानाध्याय-मानोच्चोत्प्रेक्षा मनोहरति। तथा च—

विद्वाणेरुद्रवृन्दे सवितरि, तरले वज्रिणि ध्वस्तवज्रे,
जाताशंके शशांके विरमति मरुति त्यक्तवैरेकुबेरे।
वैकुण्ठे कुण्ठितास्त्रे महिषमतिरुषं पौरुषोपघ्ननिघ्नम्।
निर्विघ्नं निघ्नतीव शमयतु, दुरितं भूरिभावाभवानी ॥१॥[1]

## ४. आचार्य शंकरः

स्वदर्शनभक्ति-सम्बलितग्रन्थशतैरापामारप्रसिद्धिगतानामाचार्य - वराणामैतिह्यं वृत्तं न निर्विवादम्। सामान्य-जनानां प्रवृत्तिर्यशोमूलिकाभवत्यतस्ते विस्तरेण स्वरचनायां स्वजीवनवृत्तमुल्लिखन्ति। आचार्यवराश्च नैतादृशोऽत-स्तेषां कालनिर्धारणे महान्वादश्चलति। तथा चास्य समय—

| | |
|---|---|
| १. अस्य समयः[2] | ७०० ई० |
| २. केरलोत्पत्ति ग्रन्थानुसारम्[3] | ४०० ई० |
| ३. द्वारिकाकांचीकामकोटि पीठानुसारम्[4] | ५०० |
| ४. तैलंग दृष्ट्या[5] | ६०० |
| ५. सर आर० वी० भण्डारकर मतानुसारम्[6] | ६८० |
| ६. वर्नेल सिर्वेलाचार्यः[7] | ७०० |
| ७. लोबिसरिस मतम्[8] | ७४० |
| ८. मोक्षमूलरमेकाडानलप्रभृतयः[9] | ७८८ |
| ९. वेंकटेश्वराचार्याणाम् मते[10] | ८०५-८९७ |

स्तोत्राणि—आचार्यप्रवर-रचित स्तोत्राणां संख्या २४० यावत्सन्ति परं प्रकाशित रूपेण ७० गणेशस्य ४ शिवस्य १८ देव्याः १९, विष्णोः १०, युगल-देवतायाः ५, नदीतीर्थादीनाम् ५ साधारणानि ९। स्तोत्रप्रकरणे दर्शितानि, चर्पटपंजरिकाद्वादशपंजरिका षट्पदी, मनीषापंचकसौन्दर्य लहरी-सोपानपंचका-दीनि च।

---

१. सं० सा० इतिहास, पृ० २९५, ब दे० उपाध्याय
२. तत्रैव
३.-४. शंकराचार्य डा० राममूर्ति शर्मा मेरठ १९६४, पृ० ९
५. तत्रैव १-४
६. रिपोतार्ज आफ दि रिसर्च फार संस्कृत मेन्स्क्रिप्ट, १८८२, पृ० १५
७. साउथ इण्डिया पैलग्राफी, पृ० ३७
८. तत्रैव, पृ० १०
९. तत्रैव, पृ० १०
१०. रिपोतार्ज आफ दि रिसर्च फार संस्कृत मेन्स्क्रिप्ट १८८२, पृ० १५

## ५. आनन्दवर्धनः

अस्य नाम संस्कृतसाहित्ये स्वर्णाक्षरैर्लेख्यम् ध्वन्यालोकमस्य साहित्यशास्त्र मालोकयति । देवी-शतकमस्य प्रसिद्धस्तोत्रग्रन्थः समयश्चास्य ८५५-८८३ ।[1]

## ६. लीलाशुकः

अष्टमशताब्दीकस्यशुद्धाद्वैत प्रवर्तकेषु मूर्धन्यभावस्य द्वितीयस्य श्री विष्णु-स्वामिनः शिष्यः[2] दक्षिणप्रदेशेवीणानद्याः तटवासी श्रीरामदासस्य पुत्रोऽस्यप्रसिद्धः[3] स्तोत्रग्रन्थः श्रीकृष्णकर्णामृतम् । गोविन्ददामोदरस्तोत्रमच । द्वितीयंश्रीस्तवकल्पः द्रुमे मुद्रितम् प्रथमं च पृथक् प्रकाशितम् । अस्य व्याख्यानंशुकदेवप्रदत एवायं लीलाशुकव्यपदेशभोक् ।

श्रीकृष्णकर्णामृते महाप्रभु-चैतन्यदेवस्य परमं प्रियं स्तोत्रमासीदिति संस्कृतसाहित्येतिहासः ।[4] श्रीकृष्ण दशन-कामनाऽनेनानन्यभावेनव्यक्तीकृता तथा च—

यावन्न मेनरदशा दशमी दृशोऽपि,
रन्ध्रादुदेति तिमिरीकृत-सर्वभावा ।
लावण्यकेलिभवनं तव तावदेतु ।
लक्ष्म्याः समुत्क्वणित-वेणुमुखेन्दुबिम्बम् ।।१।।[5]

भगवतः श्रीकृष्णस्य ब्रह्मरूपेणे चर्चा तथा च—

श्री जानकी-जीवनरामचन्द्र निशाचरारे भरताग्रजेश ।
जिह्वे पिवस्वामृतमेतदेव गोविन्ददामोदरमाधवेति ।।१।।
नारायणानन्त हरेनृसिंह प्रह्लादबाधाहर हे कृपालो ।
जिह्वे पिवस्वामृतमेतदेव, गोविन्द दामोदर माधवेति ।।२।।[6]

## ७. कुलशेखरः

अयं त्रिवांकुर-राज्यस्य भूपतिरासीद् दशम-शताब्दिको[7] वैष्णवश्च धर्मस्यप्राचीनेष्वन्यतमोऽनुयायी । केरलवास्तव्यः केरलनरेशस्य दृढव्रतस्यपुत्रः

---

१. सं० सा० इतिहास, पृ० ३५० उपाध्याय काशी
२. हिन्दुत्वे, पृ० ६७५
३. संस्कृति अंके १४७, गीता प्रेस गोरखपुर १९५५
४. सं० सा० इति० उपाध्याय
५. श्रीकृष्णकर्णामृते १।३८, संस्कृति अंक १४७
६. श्रीस्तव कल्पद्रुमे, पृ० ३९८, श्लो० ६७-६८
७. सं० सा० इति० उपाध्याय, पृ० २९५

रंत्रक्षेत्राभिजनः तिरुपतिनिवासी[1] "मुकुन्द माला" स्तोत्रग्रन्थोऽस्य । वैष्णवस्तोत्रेषु मुकुदायमानः श्लोकाः ६०श्रीस्तवकल्पद्रुमे संग्रहीत ।[2] परमं हृदयावर्जकम् ।

हे गोपालक है कृपा-जलनिधेहे सिन्धुकन्यापते ।
हे कंसान्तक हे गजेन्द्र, करुणा-पारीण हे माधव ।
हे रामानुज हे जगत्त्रयगुरो, हे पुण्डरीकाक्ष माम् ।
हे गोपीजन-नाथ पालय परं, जानामि न त्वां विना ॥१॥[3]

## ८. पुष्पदन्तः

भगवतः शंकरस्य शंकरेषु स्तोत्रेषु शिरोमणिमिव राजतेऽस्य "शिवमहिम्न-स्तोत्रम्" राजशेखरेण स्वकाव्यमीमांसायामस्य श्लोकोधृतः । शिखरिणीशिखरी कृतम् भावपूर्णम् संक्षिप्तैरेव शब्दैगभ्मीरार्थबोधनपरम् । दार्शनिकमस्य कालः दशम-शतकात्पूर्वम् ।[4]

## ९. यामुनाचार्यः

वैष्णवसम्प्रदायस्य प्रधानाचार्य-नाथ-मुनेः पौत्र ईश्वरमुनेः पुत्रश्चासीदयम् अस्य जन्म १०१० वीरनारायणपुरे (मदुरायां) अभवदंस्यालमन्दारस्तोत्रमतीवप्रसिद्धम् । आचार्य-रामानुजस्य गुरुरयम् श्रीस्तोत्ररत्नमपरंनाम— तथा च—

न धर्मनिष्ठो न चात्मवेदी, न भक्तिमांस्त्वच्चारणारविन्दे ।
अकिंचनोऽनन्यगतिः शरण्यं, त्वत्पादमूलं शरणं प्रपद्ये ॥१॥
न निन्दितं कर्मतदस्तिलोके, सहस्रशो यन्नमयाव्यधायि
सोहंविपाकावसरे मुकुन्द, क्रन्दामिसम्प्रत्यगतिस्तयाग्रे ॥१॥[5]

## १०. उत्पलदेवाचार्यः

शैवागमाकाशेकश्मीरेऽनेका आचार्यतारा: जातास्तत्रोत्पलदेवोमुख्यः यश्चेश्वीयनवम्याः शताब्दयाः उत्तरार्द्धवर्ती । अस्य कृतिषु नवग्रन्थाः प्रसिद्धिमागताः तत्र 'शिवस्तोत्रावली' स्तोत्रग्रन्थः । अद्वैतदर्शनस्यमूलाधारमुपलक्ष्मीकृत्यभक्तिभावस्य चरमाभिव्यक्तिरत्र । अयमाचार्यः शैव-शास्त्रस्य सिद्धान्तागमयौरु-

---

१. हि० सं० अंक, पृ० १७३. गीता प्रेस गोरखपुर १९५५ तथा हिन्दुत्व, पृ० ६४३
२. श्रीस्तवकल्पद्रुमे, पृ० ३६३
३. तत्रैव ३७१
४. सन्त अंक, गीता प्रेस, गोरखपुर, पृ० १५२
५. आलमन्दारस्तोत्र, श्लोकः २५, २६

भयोरपिपक्षयोर्ज्ञातासीत् । प्रत्येकस्तोत्रेवर्णनशैली विलक्षणा । नवीनाचात्र विंशतिः स्तोत्राणाम् । तत्र भक्तिविलाससर्वातिमपरिभावनप्रणय-प्रसाद सरसोद्दलविजय-विधुरादीनि मुख्यानि ।[१] योगाद्यपेक्षयात्रभक्तेः प्रशंसाविहिता । तथा च—

न योगो न तपोनार्चा, क्रमः कोऽपि प्रणीयते ।
अत्राध शिवमार्गेऽस्मिन्, भक्तिरेकाप्रशस्यते ॥१॥[२]

## ११. रामानुजाचार्यः

विशिष्टाद्वैतसिद्धान्तभास्कराणं भगवच्चरणारविन्दमकरन्दानामाचार्य-वराणां जन्म-दक्षिणभारते श्रीपरेम्बुघरग्रामे जातमस्य पितुर्नाम केशवसोमया-जीमातुश्च कान्तिमती देवी आसीत् । कांचीनगरे श्री यादव-प्रकाश सन्निधौ-वेदान्तविद्यामध्यैष्ट । परमासन्निमेस्वगुरोरद्वैतवादस्य-विरोधिनः । एषां स्तोत्र-ग्रन्थः "गद्यत्रयम् । विष्णु विग्रहदर्शनस्तोत्रं रामपटलम् ।"[३] कालश्चास्य १०७४ वि० स० ।[४]

## १२. श्री निम्बार्काचार्यः

अस्यान्यन्नामनियमानन्द आसीदस्य जीवनादिविषयेसन्त्यनेकमतानि । निम्बार्कसम्प्रदायमतानुसारमस्य कालः पंचम-शताब्दी वर्तमानानुसन्धानपरायणा-नांमते चैकादशशताब्दी दक्षिणभारते गोदावर्यास्तटे वैदुर्यपत्तनान्तिकेऽरुणाश्रमेऽयं स्वजन्मलेभे । अस्य पितुर्नामारुणोमुनिर्जगन्नाथोवास्यस्तोत्रग्रन्थ 'श्रीकृष्ण-स्तवराजः सरलया गिरात्र भगवतः श्रीकृष्णस्य गुण-वर्णनम् गुण-वर्णन-प्रसंगे चाबं स्वदर्शनमपि स्पष्टी चकार अणुवादोऽस्य प्रधानं मतम् ।
तथा च—

ज्ञानस्वरूपं च हरेरधीनम्
शरीरसंयोग-वियोग-जन्यम् ।
अणुंहिजीवं प्रतिदेहभिन्नम्
ज्ञातृत्ववन्तं यदनन्तमाहुः ॥१॥[५]

## १३. श्रीकृष्णमिश्रयतिः

एकादशशताब्दीकः प्रबोधचन्द्रोदय-नाटकस्यभक्तिपरकस्य रचयिता ।

---

२. शिवस्तोत्रावल्याम् १९६४, चौ० सं० प्रे० वाराणसी
३. तत्रैव श्लो० १।१८
१. हिन्दुत्वे, ज्ञानमण्डल काशी, पृ० ६५२
२. तत्रैव, पृ० ६४८
३. तत्रैव, पृ० ६७१, १५५ सं० अंक

सन्यासग्रहणानन्तरं श्रीकृष्णानन्दयतिरस्य नाम यातम्।[१] बहूनां स्तोत्राणां रचयिता "निगमसारसंग्रह, तत्त्वमामसित्यादीनाम् बृहत्स्तोत्ररत्नाकरेऽस्य नाम्नाऽनेकस्तोत्राणि धृतानि।"[२]

## १४. श्री माध्वाचार्यः

द्वैतमत-प्रवर्तकस्य जगद्गुरोराचार्य-माध्वस्य जन्म १२५५ वैक्रमीये सन्तांकेलिखितम्[३] हिन्दुत्वे तु १२५६।[४] अस्यापरं नामान्दतीर्थः। अस्यपितुर्नाम मधि जीभद्रो मातुश्च वेदवतीत्यासीत्। ग्रामश्च मद्रास-प्रान्ते 'वेलिः' वायोर्देवस्यावतारभूतोऽयमिति। वासुदेवाचार्याविदमधीतवानयं" द्वादशस्तोत्रमस्यग्रन्थः।

## १५. श्री वेंकटनाथवेदान्ताचार्यः

आचार्यरामानुजस्य ७४ शिष्येष्वन्यतमोऽनन्तस्तस्य पौत्रोऽवन्तसूरिरस्य पिता तोतारम्बा च माता। वेदान्ताचार्यस्यास्याविर्भावः १३२५ वैक्रमीये वत्सरेऽभवत्। ग्रामश्चास्य कानुच्यन्तिके धूपिलग्रामे अद्वैताचार्यविद्यारण्यस्यायं सहपाठी। तिरुपाहिन्द्रपुरेऽयम् बहुभिरन्यग्रन्थैसहानेकस्तोत्रग्रन्थानलिखत् तत्राच्युतशतकं, गरुडपंचशती, त्यादीनि अस्य मृत्युश्च १४२६ वैक्रमीये भवत्। वैराग्यस्य मूर्तिमान् रूपः परमभक्तो निरहंकारः दार्शनिकताकवित्वयोः परिपाकोऽस्मिन्नवभासते।[५]

## १६. जगद्धरभट्टः

संस्कृतसाहित्य-परिशीलन-मनस्कामानां सहृदयानां नास्त्यविदितं यत्कश्मीरप्रान्तोऽत्र महद्वैशिष्ट्यंवहति विशेषतस्तन्त्रसाहित्यव्याकरणशैवदर्शनादि-विषयेषु। भट्टोऽपि स्वजन्मनैनमेव प्रान्तविशेषमलंचकार। अस्य पितामहः श्री गौरधरः पिता च रत्नधरः। भगवतः शंकरस्यानन्यभक्तः सर्वतन्त्रस्वतन्त्रश्चासीदयम्। तथा च—

अनन्तसिद्धान्त प्रथान्तगामिनः, समस्त शास्त्रार्णवपारदृश्वनः।
ऋजुर्यजुर्वेदपदार्थवर्णना व्यनवित, यस्यादृभुतविश्रुतंश्रुतम् ॥१॥[६]

---

१. हिन्दुत्वे ६१४, सं० अ० १७२
२. बृहत्स्तोत्ररत्नाकरे २०३, पृ० काशी संस्करणे
३. संत अंके पृ० १५७, गीता प्रेस, गोरखपुर
४. हिन्दुत्वे, पृ० ६६३
५. तत्रैव ६५८-६०
६. स्तुति कुसुमांजली, काशी २०२१, ३६-१

अस्यस्थितिकालः १३५० ई० आसीत्। स्वपुत्रंयशोधरभट्टमध्यागयितुं-व्याकरणग्रन्थमपिव्यलिखत् बालबोधिनी कातन्त्रवृत्तिनाम्ना। कस्यचित्सद्गुरोः करुणायाप्रेरितोभूत्वा स्वशिष्ये शक्तिपातमकरोत्। येनायं ज्ञान-शक्ति-क्रिया शक्त्योः भाजनं जातः। तथा च—

कारं कारमकारिवारितशमैरक्षैररक्षैरिदम्,
विघ्ने विघ्नित-शम्भुसेवनसुखाभोगोपभोगं मनः।
किन्तु क्वापि कदापि कापि, पतिता सा माधुर्यदृष्टिर्यतः।
प्राप्तः सूक्तिबपु र्जितोर्जितसुधा स्वादः प्रसादः प्रभोः॥[1]

अयं स्वरचनायाम् भगवतो गुणानुवादमेवाकरोत् हिन्दीभाषायाः प्रधान कविस्तुलसीदासोऽस्यानुकरणं कृत्वाबहुशोरचनामकरोत् तथा च—

उष्णंनिःश्वसिति क्षितिंविलिखति प्रस्तौति न प्रेयसः,
प्रीतिं सूक्तिभिरीशितुं करतले धत्तेकपोलस्थलम्।
वाग्देवी हृदयज्वरेण गुरुणा क्रान्ताहताशैर्वृथा,
नीताविष्कृतकोपनिष्कृप, नृपस्तोत्रमपापान्तताम्॥१॥[2]

तुलसीदासः "कीन्हे प्राकृत जनगुनगाना सिरधुनि गिरालागिपछिताना।"

अन्यच्च— एताः पूर्वकविप्रणीत-विविधग्रन्थामृतास्वादन-
क्रीडादुर्ललितम् हरन्ति, हृदयं वाचः कथं धीमताम्।
केषांचित्पुनरीश्वरस्तुतिपद-व्याहार हेवाकिनाम्
यास्यन्ति स्पृहणीयतां भुवि भवक्लेशस्पृशो मादृशाम्॥१॥[3]

तुलसीदासः— भनिति मोर सबगुनरहित, विश्वविदितगुन एक।
सोविचारिसुनिहहिसुमन, जिनके विमलविवेका॥

स्तोत्रापेक्षया काव्यत्वमस्यप्रधानम्। भगवत्स्तोत्रं पापराशीमुन्मूलयति तथा च—

मणिःसुसूक्ष्मोऽपि यथोल्वणंविषं कृशोऽपिवह्निः सुमहद्यथातृणम्।
शिशुर्मृगेन्द्रोऽपि यथागजव्रजं, तनुः प्रदीपोऽपि यथातमो-भरम्॥१॥
यथाल्पमप्यौषधमुन्मदं गदं, यथामृतं स्तोकमपिक्षयाद्भयम्,
ध्रुवंतथैवाणुरपिस्तवः प्रमोक्षणादघंदीर्घमपिव्यपोहति॥२॥[4]

अस्यभक्तिर्द्रष्टव्या—

---

१. स्तुतिकुसुमांजलो काशी २०२१, ३६।१५
२. तत्रैव ५।३४
३. तत्रैव ५।३६
४. स्तुतिकुसुमांजलो ७।९-१०

पापः खलोऽहमिति नार्हसि मां विहातुम्
किं रक्षया कृतमतेरकुतोभयस्य ।
यस्मादसाधुरधमोऽहमपुण्यकर्मा
तस्मात्तवास्मि सुतरामनुकम्पनीयः ।।१।।[१]

केचिदलंकाराः—(यमकः)

भानुनातुहिनभानुनावृहद्भानुना च विनिर्वर्तितंन यत् ।
तेनतज्झटितिशान्तिमान्तरे, ध्वान्तमिति तदुपास्महेमहः ।।१।।[२]

शब्दश्लेषमूलकोध्वनिः —

अम्बरेण गगनेन सम्वृतं, जीवनंशिरसिवर्णितम् श्रितम् ।
भोगिभिश्चभुजगैर्विभूषितं, शंकरंशुभकरं भजामहे ।।१।।[३]

एवमेव पंचविंशतिमस्तोत्रे चित्रकाव्ययमकादीनि । अस्य कविताः भक्ति-परिपूरितहृदयस्योद्गाराः अत्र श्लेषांनुप्रास-यमकानां सम्मेलनम् । सरसा-सरला-करुणारसाप्लाविता ।

## १७. श्रीचेतन्योमहाप्रभुः

गौडीयवैष्णव सम्प्रदायस्य प्रवर्तकोऽस्य मतम् अचिन्त्यभेदाभेदवादमूलकम्। कालान्तेरणायमेवास्य सम्प्रदायस्योपास्यदेवः समजनि । श्रीकृष्णस्यावतार इति साम्प्रदायिका आविर्भावः १४०७ तिरोभावः १४५५ शकाब्दः ।[४]

श्रीकृष्णसंकीर्तनपराः श्लोकाः—

'चेतोदर्पणमार्जनं भवमहादावाग्निनिर्वापणम्,
श्रेयः कैरवचन्द्रिका वितरणे, विद्यावधूजीवनम् ।
आनन्दाम्बुधिवर्धनं प्रतिपदं, पूर्णामृतास्वादनम्,
सर्वात्मस्नापनं परंविजयते, श्रीकृष्णसंकीर्तनम् ।।१।।[५]

## १८. श्रीसनातनगोस्वामी

श्री महाप्रभुचैतन्यदेवस्य प्रधानोऽनुयायी जन्म सम्वतं १४८८ ई० पितुर्नामकुमार देवोमातुश्च रेवती भारद्राजगोत्रीयः मृत्युः १५५८।[६] वंगीयोऽयं रूपगोस्वामिनो भ्राता । एकदा झंझावातसमन्वितेमेघाच्छनेनभसिबहिर्जगाम ।

---

१. तत्रैव ११।३७
२. तत्रैव १।७
३. तत्रैव १।२१
१. सन्त अंक १६३, गीता प्रेस, गोरखपुर
२. तत्रैव, पृ० १६३
३. तत्रैव, पृ० १६५

पथिविवदमानयोश्चाण्डालदम्पत्योः स्त्री-प्रोवाचास्मिन्कालेदुर्दिने श्वादासो वार्बहिर्गच्छति नेतरः आकरार्येदम्वृत्तान्तमस्य हृदिवैराग्यमजायत् ।[1] अस्यश्रीकृष्ण-लीलास्तवः श्रीस्तवकल्पद्रुमे प्रकाशितः। श्लोकाश्चात्र ४३ । स्तोत्रमिदं भागवतस्य संक्षिप्तवर्णनानुसारि ।[2]

## १९. श्रीमद्रूपगोस्वामी

श्रीसनातनगोस्वामिनोलघुभ्राता जन्मकाल: १४९९, पिता कुमारदेवो माता च रेवती । भारद्वाजगोत्रीयोमृत्यु कालः १५६३ ई० । अचिन्त्याभेदमतात्मक श्री गौडीय-सम्प्रदायस्य प्रकाण्डोविद्वान् ।[3] आदौ मुस्लिमराज्ञः कर्मकरः श्री चैतन्य महाप्रभुसम्पर्कतो विरक्तोऽभूत् । अस्यानेकस्तोत्राणि श्रीस्तवकल्पद्रुमे प्रकाशितानि तेषु कानिचित् आनन्दाख्यस्तोत्रमुकुन्दमुक्तावलीगोविन्दविरुदावली-राधिकाष्टकादीनि । ललित-ललितरसभरितम् सानुप्रासम् श्रीकृष्ण-गुणकीर्तन-परमिदम् ।

## २०. श्रीलक्ष्मीधरः

अस्य स्थितिकालः १५ शशताब्दीतः किंचित्पूर्वं । अस्यपितुर्नामश्रीनृसिंहः । अच्युतानन्द-परमहंसस्यशिष्योऽयं[4] भगवतः श्रीकृष्णस्य नाम महिमपरमस्य स्तोत्रम् । भाषा सुललिता प्रसादा सरला प्रवाहमयी रचना । तथा च—

'नयनानन्दकरं करम्बितकरं हैयगंवीनैर्नवैः,
शोभामादधतं नवीनजलदे, मीलत्सुधांशोः स्फुटम् ।
भक्तानां हृदयस्थितं सततमप्याभीर दृग्गोचरम्,
गोपालं भजतां मनो मम सदा संसार-विच्छित्तये ॥१॥[5]

## २१. श्रीवासुदेवाचार्यः

चैतन्यमहाप्रभोः प्रसिद्धोऽनुयामिनोमहेश्वरविशारदस्य पुत्रः श्रीमधुसूदन वाचस्पतेर्भ्राता । स्थितिकालश्चास्य १५ शताब्दी । नवद्वीप मण्डले विद्यानगराख्येऽस्य वसतिः । ब्राह्मणोविष्णुस्तोत्रेषु वासुदेवसरस्वती नाम्नानेकं स्तोत्राणि । तथा च—

---

१. हिन्दुत्वे ६७९-८०
२. श्रीस्तवकल्पद्रुमे ४२६, वृन्दावन मथुरा वि० २०१६
३. सन्त अंके १६६
४. सन्त अंके १४६
५. सन्त अंके १४६ भगवन्नाम कौमुदीतः

'नाहं विप्रो न च नरपतिर्नापि वैश्यो न शूद्रो,
नाहंवर्णी न च गृहपतिर्नो वनस्थो यतिर्वा।
किन्तु प्रोद्यन्नौखिलपरमानन्द पूर्णामृताब्धेः
गोपीभर्तुः पद-कमलयोर्दासदासानुदासः ।।१।।'[1]

## २२. श्री नृसिंहसरस्वती

अयं श्री सदानन्दयोगीन्द्र-रचित-वेदान्त-सारस्य टीका कर्ता। टीकेयं १५१८ शकाब्दे लिखितानेकस्तोत्राणां रचयिता श्री विन्दुमाधवाष्टकवेंकटेश्वर-शतकादीनाम्। अस्यत्तैत्तरीयाशाखा वैखानसं सूत्रंगौतमं गोत्रं यजुर्वेदः पद्मनाभी-दरस्य पिताऽनन्तार्यश्चगुरुः।[2] तचा च—

'शाखा यस्य तुतैत्तरीयविहिता सूत्रं च वैखानसम्,
गोत्रं गौतममाहुतिश्च हविषा यागाश्रुतिर्याजुषी।
कालोऽरं निगमागमप्रवचनैर्विद्यार्थिनां यापितः,
स्वाचार्यस्तु पिता पितामहनिभः श्री पद्मनाभाह्वयः ।।१।।
श्रीमद्गौतम - गोत्रजस्य विदुषोऽनन्तार्यनाम्नः गुरोः,
तस्या-हं नरसिंह-नामविदितः, शिष्यस्तुरीयोऽनुजः
श्रीमद्वेंकटनायकास्पदमिदं हृद्यंसतां शृरावताम्
पद्यानां शतकं चकार विदुषां विद्यानवद्यात्मनाम् ।।२।।[3]

भाषा काव्यमयी समासबहुला क्वचित्सरलाप्रसादमयी सानुप्रासा।

## २३. श्री अप्पयदीक्षितः

भगवताचार्यशकरेण प्रवर्तिताद्वैतसम्प्रदायेमहानाचार्यः। अलंकार-व्याकरणदर्शनादि-विषयाणाम् महनीयोविद्वान्। अकबरजहांगीरयोः समका-लीनोऽस्यपितामहः श्रीदीक्षितः पिता च रंगराजाध्वरिः जन्मसंवत्सरः १५५० ई० मृत्युश्च १६२२। महान् शिवभक्तः स्तोत्रग्रन्थो वरदराजस्तवः।[4]

## २४. श्रीनारायणभट्टः

अस्य स्तोत्रग्रन्थोनारायणीयम् नारायणेन प्रणीतत्वान्नारायणमधिकृत्य प्रणीतत्वाच्च द्विधार्थः संगच्छते। तथा च—

'अज्ञात्वा ते महत्वं यदिह निगदितं विश्वनाथ क्षमेथाः,
स्तोत्रञ्चैतत्सहस्रोत्तरमधिकतरंत्वत्प्रसादाय भूयात्।

१. सन्त अंक १६५
२. हिन्दुत्वे, पृ० ६२६
३. स्तोत्रार्णवे, पृ० ४४६, श्लो० ६७-६८, वेंकटेश्वर शतके
४. सन्त अंके, पृ० १४८

द्वेधानारायणीयं श्रुतिषु जनुषा स्तुत्यता-वर्णनेन ।
स्फीतं लीलावतारैरिदमिह कुरुतामायुरारोग्यसौख्यम् ।।[१]

स्तोत्रञ्चैतच्छ्री गुरुवायुपुरकृतसन्निधानस्यश्री नारायणस्य गुणगणानां-प्रतिपादकम् । सुगृहीत-नाम्ना कविवरेण भट्टपादेन प्रणीतम् । ग्रन्थकर्ता च केरलप्रान्तीयः "चन्दनक्काव" देवी क्षेत्रस्य "मेप्पतूर" ग्रामनिवासी ग्रासीत् यद्यप्यधुनाऽय ग्रामः न तत्र वरीर्वात परं चन्दनवनालयायाः देव्याः क्षेत्रं तु वर्तते एव । ग्रस्येतिवृत्तेन शक्यते वक्तुं सम्यक् । परं भूमिकानुसारमस्य ग्रन्थस्य रचना १६श शताब्द्यामभूत् ।

ग्रयं वाल्येविद्ययाननुहीतः पाण्डित्यरहितो यौनोदये सांसारिकसुखमेव-परं मन्यमानः श्वसुरगृह्यध्यवसत् । कोऽपि विपश्चिदस्य बुद्धि-वैलक्षण्येन तुष्टोऽस्य कुशाग्रबुद्धितांविद्या वैमुख्यं चावलोक्यभृशंदयमानचित्त इमं काव्य-नाटकादि विषयानध्यापयामास । वैदुष्यस्य परांकोटिमनीयतेमम् । स च विद्वान्द्विजेतरग्रासीदेवं कथ्यते यत्सवेदानधिकाणिमप्येनं वेदानध्यापयन्वाताक्रान्तो-जातः ।

ग्रस्मिन्स्तोत्र-चक्रवर्तिनिनारायाणीये गंगा-तरंग-भंगीमिवप्रकटयन्ती-शब्दसम्पत् पाठक-मनः-पुण्डरीकेषु भाक्तिकारुण-किरण-केलिमिव प्रकाशयन्ती रीतिगुणालंकारादिचातुरीः जनयन्ती निस्सीमगुणगणैः जनान् भक्तिभावुका-न्मोदयति । तथा च—

सान्द्रानन्दावबोधातमकनुपमितं कालदेशावधिभ्याम्
निर्मुक्तं नित्यमुक्तं निगम-शत-सहस्रेण निर्मास्यमानम् ।
ग्रस्पष्टं दृष्टमात्रे पुनरुपपुरुषार्थात्मकं ब्रह्मतत्त्वम्
तत्तावद् भांति साक्षाद्गुरुपवनपुरे हन्तभाग्ये जनानाम् ।।१।।[२]

भगवन्नाममहिमा—

ग्रजामिलोनाममहीसुरः पुरा चरन्विभोऽधर्मपथागृहाश्रमी ।
गुरोगिरः काननमेत्य दृष्टवान् सुधृष्टशीलां कुलटां मदाकुलाम् ।।१।।
विष्णोर्वीर्याणि कोवा कथयतुधरणेः कश्चरेणून्मिमीते ।[३]
यस्यैवांध्रत्रयेण जगदभिमतं मोदते पूर्ण-सम्पत् ।
योऽस्मै विश्वं विधत्ते प्रियमिहपरमं धामतस्यापि धानम्,
त्वद्भक्ताः यत्र माद्यन्त्यमृतरसमरन्दस्य यत्र प्रवाहः ।।२।।[४]

---

१. श्रीमदनारायणीये, शिवपुरस्थमंगलोदय प्रकाशन १९५१, श्लोक १०।६६
२. नारायणीये १।१
३. नारायणीये २२।२२२
४, तत्रैव ६६।१०१४

'नाहं विप्रो न च नरपतिर्नापि वैश्यो न शूद्रो,
नाहंवर्णी न च गृहपतिर्नो वनस्थो यतिर्वा।
किन्तु प्रोद्यन्नौखिलपरमानन्द पूर्णामृताब्धेः
गोपीभर्तुः पद-कमलयोर्दासदासानुदासः ॥१॥'[1]

## २२. श्री नृसिंहसरस्वती

अयं श्री सदानन्दयोगीन्द्र-रचित-वेदान्त-सारस्य टीका कर्ता। टीकेयं १५१८ शकाब्दे लिखितानेकस्तोत्राणां रचयिता श्री विन्दुमाधवाष्टकवेंकटेश्वर-शतकादीनाम्। अस्यत्तैत्तरीयाशाखा वैखानसं सूत्रंगौतमं गोत्रं यजुर्वेदः पद्मनाभी-दरस्य पिताऽनन्तार्यश्चगुरुः।[2] तचा च—

'शाखा यस्य तुतैत्तरीयविहिता सूत्रं च वैखानसम्,
गोत्रं गौतममाहुतिश्च हविषा यागाश्रुतिर्याजुषी।
कालोऽयं निगमागमप्रवचनैर्विद्यार्थिनां यापितः,
स्वाचार्यस्तु पिता पितामहनिभः श्री पद्मनाभाह्वयः ॥१॥
श्रीमद्गौतम - गोत्रजस्य विदुषोऽनन्तार्यनाम्नः गुरोः,
तस्या-हं नरसिंह-नामविदितः, शिष्यस्तुरीयोऽनुजः
श्रीमद्वेंकटनायकास्पदमिदं हृद्यंसतां श्रृरावताम्
पद्यानां शतकं चकार विदुषां विद्यानवद्यातमनाम् ॥२॥[3]

भाषा काव्यमयी समासबहुला क्वचित्सरलाप्रसादमयी सानुप्रासा।

## २३. श्री अप्पयदीक्षितः

भगवताचार्यशकरेण प्रवर्तिताद्वैतसम्प्रदायेमहानाचार्यः। अलंकार-व्याकरणदर्शनादि-विषयाणाम् महनीयोविद्वान्। अकबरजहांगीरयोः समका-लीनोऽस्यपितामहः श्रीदीक्षितः पिता च रंगराजाध्वरिः जन्मसंवत्सरः १५५० ई० मृत्युश्च १६२२। महान् शिवभक्तः स्तोत्रग्रन्थो वरदराजस्तवः।[4]

## २४. श्रीनारायणभट्टः

अस्य स्तोत्रग्रन्थोनारायणीयम् नारायणेन प्रणीतत्वान्नारायणमधिकृत्य प्रणीतत्वाच्च द्विधार्थः संगच्छते। तथा च—

'अज्ञात्वा ते महत्वं यदिह निगदितं विश्वनाथ क्षमेथाः,
स्तोत्रञ्चैतत्सहस्रोत्तरमधिकतरंत्वत्प्रसादाय भूयात्।

---

१. सन्त अंक १६५
२. हिन्दुत्वे, पृ० ६२६
३. स्तोत्रार्णवे, पृ० ४४६, श्लो० ९७-९८, वेंकटेश्वर शतके
४. सन्त अंके, पृ० १४८

द्वेधानारायणीयं श्रुतिषु जनुषा स्तुत्यता-वर्णनेन ।
स्फीतं लीलावतारैरिदमिह कुरुतामायुरारोग्यसौख्यम् ॥[1]

स्तोत्रञ्चैतच्छी गुरुवायुपुरकृतसन्निधानस्यश्री नारायणस्य गुणगणानां-प्रतिपादकम् । सुगृहीत-नाम्ना कविवरेण भट्टपादेन प्रणीतम् । ग्रन्थकर्ता च केरलप्रान्तीयः "चन्दनक्काव" देवी क्षेत्रस्य "मेप्पतूर" ग्रामनिवासी आसीत् यद्यप्यधुनाऽय ग्रामः न तत्र वरीवर्ति परं चन्दनवनालयायाः देव्याः क्षेत्रं तु वर्तते एव । अस्येतिवृत्तेन शक्यते वक्तुं सम्यक् । परं भूमिकानुसारमस्य ग्रन्थस्य रचना १६श शताब्द्यामभूत् ।

अयं बाल्येविद्ययाननुहीतः पाण्डित्यरहितो यौनोदये सांसारिकसुखमेव-परं मन्यमानः श्वसुरगृह्यध्यवसत् । कोऽपि विपश्चिदस्य बुद्धि-वैलक्षण्येन तुष्टोऽस्य कुशाग्रबुद्धितांविद्या वैमुख्यं चावलोक्यभृशंदयमानचित्त इमं काव्य-नाटकादि विषयानध्यापयामास । वैदुष्यस्य परांकोटिमनीयतेमम् । स च विद्वान्द्विजेतरआसीदेवं कथ्यते यत्सवेदानधिकाणिमप्येनं वेदानध्यापयन्वाताक्रान्तो-जातः ।

अस्मिन्स्तोत्र-चक्रवर्तिनिनारायाणीये गंगा-तरंग-भंगीमिवप्रकटयन्ती-शब्दसम्पत् पाठक-मनः-पुण्डरीकेषु भाक्तिकारुण-किरण-केलिमिव प्रकाशयन्ती रीतिगुणालंकारादिचातुरीः जनयन्ती निस्सीमगुणगणैः जनान् भक्तिभावुका-न्मोदयति । तथा च—

सान्द्रानन्दावबोधात्मकनुपमितं कालदेशावधिभ्याम्
निर्मुक्तं नित्यमुक्तं निगम-शत-सहस्रेण निर्भास्यमानम् ।
अस्पष्टं दृष्टमात्रे पुनरुपपुरुषार्थात्मकं ब्रह्मतत्त्वम्
तत्तावद् भांति साक्षाद्गुरुपवनपुरे हन्तभाग्ये जनानाम् ॥१॥[2]

भगवन्नाममहिमा—

अजामिलोनाममहीसुरः पुरा चरन्विभोऽधर्मपथागृहाश्रमी ।
गुरोगिरः काननमेत्य दृष्टवान् सुधृष्टशीलां कुलटां मदाकुलाम् ॥१॥
विष्णोर्वीर्याणि कोवा कथयतुधरणेः कश्चरेणून्मिमीते ।[3]
यस्यैवांघ्रत्रयेण जगदभिमतं मोदते पूर्ण-सम्पत् ।
योऽस्मै विश्वं विधत्ते प्रियमिहपरमं धामतस्यापि धानम्,
त्वद्भक्ताः यत्र माद्यन्त्यमृतरसमरन्दस्य यत्र प्रवाहः ॥२॥[4]

---

१. श्रीमदनारायणीये, शिवपुरस्थमंगलोदय प्रकाशन १९५१, श्लोक १०।९९
२. नारायणीये १।१
३. नारायणीये २२।२२२
४, तत्रैव ९९।१०१४

## २५. श्रीजीवगोस्वामी

श्री सनातन श्री रूपगोस्वामिनाऽनुजस्यानुपमस्यश्री वल्लभेतिनामान्तरस्य पुत्रः षोडश-शताब्दीकः गौडीयवैष्णवसम्प्रदायीयोऽयं। अस्य गुरुरपि श्री सनातन एवासीत् वृन्दावने राधादामोदरमन्दिरंकारयामास। अस्यानेकस्तोत्राणि श्रीस्तवकल्पद्रुमे मुद्रितानि। तेषु कानिचित्-श्री कृष्णाष्टकमयम् श्री गोपालविरुदावल्यादीनि। सरले संगीतमयमनुप्राससम्वलितम्। तथा च—

अमितभवदवाब्धौ दह्यमानं चिरान्मे.
कथमपि कलयित्वा पूर्ण कारुण्यमूर्तिः।
निजसहजजनान्ते स्वीचकारेश्वरो यः,
तमिहमहित-रूपं कृष्णदेवं निषेवे ॥१॥[1]

## २६. श्री ब्रह्मानन्द-सरस्वती

अयमद्वैतसिद्धेष्टीकाकारोमधुसूदनसमकालीनः। षोडश-शताब्द्या उत्तरार्द्धवर्ती सप्तदशशताब्दयाः पूर्वार्द्धम् च। अद्वैतवादस्य प्रबल-समर्थकोऽयं अनेकानिस्तोत्राणि व्यरचयत्। बृहत्स्तोत्ररत्नाकरे संकलितानि। तेषु कानिचित्। तथा च—

रामाष्टकदीनबन्धवष्टकहरिनामाष्टक - गोबिन्दाष्टकरमापत्यष्टकादीनिस्तोत्राणि। स्तोत्र-प्रकरणेविवेचितानि च।

## २७. आचार्य-मधुसूदन-सरस्वती

अयमद्वैतसम्प्रायप्रधानेष्वन्यतमः अस्यस्थिति-कालनिर्णयो जटिलः षोडशशताब्द्या पूर्वार्द्ध-वर्तीति मतंनिश्चीयत ऐतिह्यैः। तथा चायं हिन्दीभाषायाः कवितुलसीदास-समकालीनः। एवं किम्वदन्त्यनुश्रूयते यत्तुलसी दासस्य—

हरिहरयशसुरवरगिरा, वरणहि सन्त सुजान।
हाड़ी हाटक चारुरुचि राधे स्वाद-समान ॥१॥

अस्योत्तरे मधुसूदनाचार्योऽलिखत्।

आनन्द-काननेह्यस्मिन् तुलसीजंगमस्तरुः।
कविता-मंजरी यस्य रामभ्रमरभूषिता ॥१॥[2]

स्ववार्धक्ये नवद्वीपे गदाधर-भट्टाचार्यमप्यमिलत् तथा च—

नवद्वीपे समायाते मधुसूदन-सरस्वतौ,
चकम्पे तर्क-वागीशः, कातरोऽभूत् गदाधरः।[3]

---

१. श्रीस्तवकल्पद्रुमे १।१, श्रीकृष्णाष्टके

२. रसायने, पृ० ८, आ० मधुसूदन, सम्पादित अनन्त शास्त्री फडके, काशी, २०१८ सं०

३. भारतीय साहित्यशास्त्रे, आचार्य बलदेव उपाध्याय १९६३, पृ० ११८

सम्राजोऽकबरस्य राजसभायामप्याहूतोऽयमिइतीतिहासप्रमाणैः षोडशशताब्दीकोऽयमिति समायाति ।

वंशीविभूषितकरान्नवनीरदाभात्, पीताम्बरादरुणबिम्बफलाधरोष्ठात् ।
पूर्णेन्दुसुन्दरमुखादरबिन्दनेत्रात्, कृष्णातत्परंकिमपितत्त्वमहंन जाने ॥१॥[१]

वागीचः फरीदपुर-मण्डले कोटलिया ग्रामवासी ग्रासीदयमाचार्यवरः ।

## २८. पण्डितराजजगन्नाथः

ग्रयमप्पयदीक्षितसमकालीनो राज्ञः शाहजहांख्यस्य प्रशंसायां लिखितश्लोकेनास्य समय १७ शशताब्दी-मध्यभागः । ग्रयं पंचलहरीः गंगा करुणालक्ष्मीसुधादी ग्रलिखत् । तैलंगः । दिल्ली राज्ञा पण्डितराजेत्युपाध्य सम्मानितः । ग्रप्रतिमप्रतिभा-सम्पन्नः । स्वाभाविकीचास्य कविता । भगवतः श्रीकृष्णस्य चरणारविन्दयोरस्य प्रगाढाभक्तिरासीत् । द्राक्षापाकस्य समचितमधुरिमा स्वकाव्ये तथा च—

स्मृतापितरुणातपं करुणयाहरन्तीनृणाम्
ग्रभंगुरतनुत्विषांवलयिताशतैर्विद्युताम् ।
कलिन्दगिरिनन्दिनी तट-सुरद्रुमालम्बिनी ।
मदीयमति-चुम्बिनी भवतु कापिकादम्बिनी ॥१॥[२]

## २९. श्री रामभद्रदीक्षितः

ग्रयमृग्वेदीयो विप्रग्रासीत् कौण्डिन्यगोत्रः 'तंजोर' जनपदान्तर्गत 'नानूलाल' तालुकानिवासी यज्ञरामोऽस्य पिता साहित्य-व्याकरण-वेदान्तादीनां विषयाणाम् प्रमुखो विद्वान् । ग्रस्य वाल्यं नाम कोण्डरामनिकम् । चन्दनावत्याः देव्या निकटे शाहवीजापुरमस्य निवासः । कालश्च १६६३[३] स्तोत्रग्रन्थाः श्रीरामकर्णरसायनस्तवः, वर्णमालास्तवः रामप्रसादस्तवो रामचित्रस्तवो विश्वगर्भस्तवः एषु रामकर्णरसायनस्तवः श्री कृष्ण-कर्णामृतमित्यस्य प्रतिक्रियायाम् छायायांवा । ग्रस्य स्तोत्रेषु व्याकरण-साहित्ययोः समन्वयः । ग्रयं रामस्यानन्योभक्तः । तथा च—

मौलौनिधेहिमुकुटं, त्यजबर्हिवर्हम्,
पाणौमृहाणधनुषा सहमुंचवेणुम् ।
शारवामृगैर्विहर संत्यजगोपवालान्
रामोयदूद्वहभवत्वमथवाश्रयेत्वाम् ॥१॥[४]

---

१. रसायने, १

२. सं० सा० इतिहासे, पृ० ३०३, श्री बलदेव उपाध्यायः

३. स्तवमणिमालायाम् (सम्पादक पं० सुब्रह्मण्य शास्त्री तंजापुरम् १६३२)

४. स्तवमणिमालायाम्

## ३०. श्रीवेंकटाध्वरिः

मद्रप्रान्तीयः श्रीवैष्णवआसीत् । अयं स्वविश्वगुणादर्शचम्पूकाव्ये-आंग्लानां दुराचारवर्णनमकरोत् । अतोऽस्यस्थितिकालः १७श शताब्दी । आत्रेय-गोत्रस्यालंकारनीति-शास्त्र-विदुषः श्री श्रीनिवासाध्वरिणोनप्त्रारामचन्द्र-चरणाऽजरसिकरघुनाथपुत्रेणश्री रामोनुजार्यमतानुयायिर्श्री-वेंकटाचार्य.शिष्येणा-नेनभाव्यम् । तथा च—

पौत्रेणात्रेयेगोत्राभरणनयपण-श्रीनिवासाध्वरीन्दोः
श्रीमद्रामोंध्रिभक्तिप्रमुदितरघुनाथार्यज्वात्मजेन ।
वेदान्ताचार्यपादाम्बुजनिहितहृदा वेंकटार्येणक्लृप्ता ।
रम्म्यंलक्ष्मीसहस्रं पठन्दृढतरंनित्यकल्याणकामः ।।१।।[1]

रोगपरिहारार्थं निर्गुणस्यापि परमात्मनः परमैश्वर्यसम्पादकम् । उच्चा-वच्चप्रपंचोपादानविषयंश्रीरमादेव्याख्यं दैवतमेवास्य कुशलाकुशलनिर्वर्तकतया श्रीस्तोत्ररचितमनेन । स्तबकानांचात्र पंचविंशतिः । श्लोकाश्च १०१४ ।

अत्र गौडीवैदर्भी च रीतिः । आरभटीवृत्तिः कविरयं विशिष्टाद्वैत-सिद्धान्तानुयायी ।

रूपकभ्रान्तिमद्विभावनाकाव्यलिंगोत्प्रेक्षार्थान्तरन्यासाद्यलंकाराः प्रयुक्ताः । शार्दूलविक्रीडितमालिनीमन्दाक्रान्तादिछन्दांसि दीर्घ-समासपदानि । तथा च—

देविश्री - वृषशैलदेवदयिते दाक्षिरायपरायक्षिते ।
मातःसाहसतस्तवस्तवमिमं कर्तुं प्रवृत्तस्य मे ।
उन्मीलन्तुपरं गिरस्तव करालं हुंकार-पंकेरुहात् ।
प्रेंखत्तुंगषडध्रिसंधविसरं झंकारशंकाकृते ।।१।।[2]

## ३१. श्रीविश्वनाथः

आचार्य विश्वनाथचक्रवर्तिनो जन्म वंगप्रान्तेऽभवत् । कालश्चास्याष्टा-दशशताब्दी ।[3] अयंनिम्बार्कमतावलम्बी आसीत् । अस्य स्वप्नविलासामृताष्ट-कम् श्रीरूपचिन्तामणिः श्री राधिकाध्यानामृतस्तोत्रम् अन्यानि च श्रीस्तव-कल्पद्रुमे प्रकाशितानि । सरसासानुप्रासा सरला प्रवाहमयी भाषा । तथा च—

नवेन्दूपमेपत्रपाश्याप्रभाते, सुलीलालकालीवृत्तेचारुभाले ।
मदेनान्तराचित्रितं चित्रकं तत्, विभात्यच्युततृप्तनेत्रैक सम्पत् ।।१।।[4]

---

१, लक्ष्मीसहस्रे २५०।८, चौ० सं० सी०, वाराणसी, १६०४
२. तत्रैव १।२२
३. हिन्दुत्वे, पृ० ६७४
४. श्रीस्तवकल्पद्रुमे, पृ० ५६७, श्लो० ४

वासःसूत्रं मणिमेखलां च, नाभिदलाम्भोदररोमवल्ल्यौ ।
पीनौ कुचौ कंचुलिकांचितौ च, कण्ठाभ्ररेखं मणि-हेममहारम् ॥२॥[1]

## ३२. श्री रघुनाथदासगोस्वामी

अयं महाप्रभोश्चैतन्यस्यानुयायी हुगली जनपदनिवासी कृष्णपुरभूस्वामिनः श्री गोवर्धनदासस्य पुत्र आसीत्स्तोत्रग्रन्थाः[2] राधिकाष्टकम् श्रीनवाष्टकम् श्रीराधिकाष्टोत्तरशतनामादीनि श्रीस्तवे मुद्रितानि ।

## ३३. श्रीवासिष्ठगणपतिमुनिः

अयं विशाखापट्टनप्रदेशान्तर्गत "कलवरा" ग्राम निवासी आसीत् इत्यस्यानुपदं वक्ष्यमाणप्रशंसापत्रतोज्ञायते अस्यपितुर्नाम श्रीनरसिंहशास्त्री । "उमासहस्रमस्य स्तोत्रग्रन्थः ।"

उमासहस्रेतिमहतः स्तोत्रग्रन्थस्य प्रणेता काव्यकण्ठपदलांछनोभगवान्-वासिष्ठगाणपतमुनिः । अस्य जीवनम् वेदाः शास्त्राणि कवितादीनि च निसर्ग ज्वलितां प्रज्ञां समुज्ज्वाल्यापूरयत् । अस्य त्रयोभ्रातरआसन् तेष्वयं द्वितीयः । जन्मनः प्रागस्यपितास्वप्नेपश्यद्यत् विघ्नेश्वर-सन्निधौ स्थितस्य तस्योपकण्ठं कोऽपि शिशुः गणपते निर्गत्येमंमुपागत्य अन्तर्व्यलीयत् । अतएवास्य गाणपतेत्याख्या । बाल्येमूर्च्छारोगाक्रान्तः षष्ठेऽब्देनीरुक्जातः । दशमे वर्षे पंचागं गणितुप्राभवत् । द्वादशे मृगसन्देशकाव्यमलिखत् । तथा च—

इहकेषांचिदेषा चेन्न सन्तोषाय का क्षतिः ।
किमानन्दाय काकानां बालकोकिलकाकली ॥१॥[3]

अधीतव्याकरणादिशास्त्रस्तीर्थयात्राप्रसंगतः काश्यामागत्यमहामहोपाध्यायश्री शिवकुमारशास्त्रिणममिलत् । तत्रैव वसंश्चविश्रुतनवद्वीपनगरे पाण्डित्यपरीक्षायैप्रचलन्त्यां पण्डितपरिषदि सुहृत्प्रेरणयागतः । तत्र च समस्यापूर्त्या सर्वान् चमत्कृतवानयम् । प्रशंसा-पत्रं च लब्धवान् । तत्प्रतिलिपिश्चेत्थम् ।

श्रीमद्-गणपति-शास्त्रिन्संसारे खल्वस्मिन् कवित्वमित्यसमुद्रसमुत्थममृतम्—

सुदुर्लभंचैतत् लोकाधिक-सौभाग्यवशात् सुप्रसन्नदेवानुकम्पया वा यः कश्चिदिह समधि कुरुते । स च भूस्थोऽपि स्वर्गीय इतिसस्पृहमालोक्यमानो गुणपक्षपातिभिर्विद्वद्भिर्नितरामाद्रियते ।

अन्ते यदद्यभवद्भिरसाधारण-कवित्वमिह प्रकटय्य सुधियस्सर्वे सन्तोषमापादिताः । तेनैव च चरितार्थाः नवद्वीपवासिनः कोविदाः वयमशेषगुणैकधाम्ने

---

१. तत्रैव, पृ० ६८५, श्लोक २७
२. सन्त अंके, पृ० १६८
३. उमासहस्रे १, अरविन्दाश्रम पाण्डिचेरी, १९६२

विशाख-पट्टन प्रदेशान्तर्गत "कलवराई" ग्राम-वसतये श्रीमद्गणपतिशास्त्रिणे तुभ्यमाशीर्वादपूर्वकमिमं श्लोकमुपहरामः।

प्राचीनैस्तै कविकुलवरैः कालिदासादिभिर्या
लब्धा कीर्तिर्मदनुगता, सैवभूयादिदानीम्।
सद्भिर्दत्तो य इह रुचिरः काव्य-कण्ठोपहारः
तेन श्रीमानिहभुवि भवानुज्ज्वलंश्चापिभूयाः ॥१॥[1]

१८२३ शकाब्दीये सौरज्येष्ठमासास्याष्टमदिवसे श्रीयुत-तारानन कृष्णतर्क पंचाननः। उपहारस्याधस्तात् चतुर्दश पण्डितानां नामानि स्वहस्त-लिखितानि।

अत्र स्तोत्रकाव्ये दशशतकानि प्रतिशतकं च चत्वारस्तवकाः प्रतिस्तबकं पंचविंशतिः श्लोकाः।

वेदवेदान्त-योगतन्त्रादि-रहस्यानि भेषजानिमधुराण्युपनिर्माय स्तोत्र-साहित्येन रोचयन्साधुलोकं-वीतशोकं विदधानोरमयति रमणशिष्यः। सर्वैश्वर्याः अनुग्रहार्थं लीलाचारित्रकीर्तनैः काव्यशोभापोषकैः व्युत्पित्सूनां साहित्यसरणि-बोधाय व्युत्पन्नानां प्रमोदाय च प्रभुरयं रसोज्ज्वल-साहित्य सन्दर्भः। तथा चात्रोमादेव्याः पर्वतराजपुत्र्याः सम्भवबालपरिणय-शृंगार-कथाःश्रूयन्ते।

मन्दस्मित-कृपा कटाक्ष-नाम-वैभवानि रसावहाभिः वाग्भिः वर्णिताः। ओजः प्रासादमाधुर्यैरर्थतः शब्दतश्च समुन्नतः च व्याप्तान्येतानि पद्यानि। तथा च—

अत्रापि गुण-लेशाश्चेदालंकारिकसम्मता।
सप्रतापः सरस्वत्यां, निर्गच्छन्त्या अनर्गलम् ॥१॥[2]

बहुषु स्तबकेषु प्रवहनकाव्यरसौ रसिकानाप्लावयन् विलसति। प्रशस्तेऽस्मिन् स्तोत्र-काव्ये एकैकः श्लोकः रसभरभरितस्तदिदम्।

अभिनवमननीयं निदर्शनं च स्तोत्र-साहित्यस्यामूल्यं फलं। विवदिक्षूणामनल्पवलं। भक्तलोकस्य सहृदयानां साधूनां च हृदयान्यावर्जयन्मुदावहम्। केचिदलंकाराः—

अखिल-जगन्मातोमा, तमसातापेन चाकुलानस्मान्।
अनुगृह्णात्वनुकम्पासुधार्द्रयाहसितचन्द्रिकया ॥१॥[3]

श्लेषोज्जीवितरूपकम्—

---

१. उमासहस्रे, भूमिकायाम्
२. तत्रैव
३. उमासहस्रे, भूमिकायाम् १।१।१

मदीयमम्बिकाखिलस्य विष्टपस्य दुष्टधी ।
दविष्ठ-पादपंकजा, धुनोति कष्टजालकम् ।
इमे च कोमलैः पदैः, अमूल्यतल्प-शालिनः
तदीयमंचरूपतां, भजन्तु पंच-चामराः ।।१।।[1]

इत्यमिह दिङ्मात्रम् प्रमुखानां स्तोत्रकाराणां परिचयो दत्तो विस्तृत-विवेचनन्तु पृथक् पुस्तकप्रणयन-साध्यमिति ।

१. तत्रैव १।२।२५

# परिशिष्टम्-१

गन्थेऽत्रपञ्च देवानां स्तोत्राणम् विशिष्टसामान्यभेदेन शोधो जातः। विशिष्टस्तोत्रवत्सामान्यस्तोत्राणामपि, अध्ययनमपेक्षितमासीदिति जानताऽपि मयका ग्रन्थपृष्ठ संख्या द्विसहस्रतोऽप्यधिका स्यादितिभिया नाकारि। आशुतोषस्य भगवतः कृपया कालेन साध्यं भवेदिति आशासेऽहम्। तथापि सामान्य-स्तोत्र प्रकरणे बृहत्काव्यरूपेण ग्रंथितानां ग्रन्थानां, पुराणतः संकलितपुस्तकेषु प्रकाशितानां च केषांचित्स्तोत्राणां स्थालीपुलाकन्यायेनाध्ययनमत्रांक्यते।

(क) गणेशस्य भगवतः सामान्य स्तोत्रेषु २, ४, ५, ६, ८, १६, २०, ३४, संख्याकानां संग्रहो बृहत्स्तोत्ररत्नाकरतः काशीसंस्करणतः कृतस्तदऽश्रित्यैवाध्ययनमेषां सामान्यतः प्रस्तूयते, ३, ७, २१, २४, २५, २७, २८ संख्याकानां च स्तोत्रार्णवे प्रकाशितानां मद्रासविश्वविद्यालये ताडपत्रेषूधृतानामध्ययनञ्चापि तदाश्रित्य प्रस्तूयते।

(२) अत्रानुष्टुप्छन्दःपौराणिकी भाषा सानुप्रासा, सरला, सप्रसादा नामगणनात्मकं चेदमत्रस्तोत्रे गणपतिर्व्यासभ्राता शुकदेवपितृव्यश्च समीरितः। "व्यासभ्रात्रे शुकस्य पितृव्यायेति, तच्चेदं स्तोत्रं देवाः गजासुरवधानन्तरं चक्रुः।"

(४) अत्रद्विरदादिनामभिः स्तवनम्। गणेशोऽत्रविनायकः यतः न कोऽपि तत्परः तस्मादधिकश्च नायकोऽस्ति त्रिभुवने विगतोनायको यस्य चस्मादिति बहुव्रीहिसमासः। यथा वलिनिग्रहे वामनस्त्रिपुरदहने च शिवःख्यातस्तथैव विघ्नव्रजदलने गणेशः प्रसिद्धः।

(५) वासुदेव सरस्वती रचितमेतदत्र निर्विघ्नतासिद्धये हरीशादिदेवैरपि गणेशोऽर्चनीय इति कथितः। दूर्वांकुरलाजाद्यैः पूजनेन।स्यैहिकामुष्मिकभोगप्राप्तिर्न दुर्लभा।

(६) वासुदेव सरस्वती रचित मेतदत्रानुष्टुप्छन्दोऽस्य प्रणामेन विघ्नाः क्षयं यान्ति। कवित्वशक्तिकारकमिदं स्तोत्रम्।

(८) गणेशपुराणोत्तरखण्डतः संकलनेऽत्रधृतम्श्लोकानाञ्चात्र सप्तविंशतिः गणेशःयुगानुरूपं रूपं विभिन्न वर्णकम्। अस्य विभिन्न नामभिरंगरक्षादिग्रक्षादिकमत्र निरूपितम्।

(१६) श्लोकानामत्र नवकम् पद्मपुराणस्योत्तर खण्डतः, संकलितम्

मालतीछन्दोवद्धं सुललितमस्य पाठेन दुःख नाशः ।

व्यासाष्टकमिदं पुरायं, गणेशस्तवनं नृणाम् ।
पठतां दुःखनाशाय, विद्यां सश्रियमश्नुते ।।

(२०) गणेशपुराणत उद्धृतमत्र श्लोकाः १३ । अद्वैत वेदान्त मत-स्थापन पुरस्सरमत्र गाणपत्यं ब्रह्मेति साधितम् । गणेशश्च नेति-नेति शब्दैरेव निवर्चनीयः ।

(३४) संकष्ट-हरणगणेशाष्टकमत्र तन्त्रात्मकरीत्या, "वं, वं, वं, तुं, तुं, तुं, लौं, लौं शैल्या भगवान् गणेशः संस्तुतः । राजानोऽपि स्तोत्रस्यास्य प्रभावतो वश्यतां यान्ति ।

राजानस्तस्यभृत्याइव, युवतिकुलदासवत्सर्वदास्तेच लक्ष्मीः सर्वांग-युक्ताश्रयति च सदनं, किं करा, सर्वलोकाः ।"

**अधस्तनानि च स्तोत्रार्णव**

(३) ताडपत्रीयमेतत्सर्वप्रथमं मद्रासतः स्तोत्रार्णवे प्रकाशितम् । श्लोकाश्चात्र ३२ । अनुष्टुप्छन्दः । सरसा, सप्रसादा, भाषा पौराणिकी । सौभाग्यवर्द्धनपुरस्सरम् समस्तेप्सितदम् । वक्ता महादेवः श्रोत्री पार्वती ।

इति मन्त्रावलिस्तोत्रं, कथितं तव सुन्दरि ।
समस्तमीप्सितं तेन, सम्पादय शिवे शिवम् ।।

(७) श्रीकृष्णलीलाशुकमुनिविरचितमिदमत्र ४० श्लोकाः शार्दूल विक्रीडितानुष्टुप् मालनी छन्दोवद्धम् । शब्दशय्या मनोरमा, ललिता पदपंक्तिः प्रवाहश्चाविच्छिन्नः । तथा च—

आस्तेघोरसमुद्रवासवदिशा पारस्थली गोपुरात्,
बाह्ये वामकरार्थकामविषयमाद्य महान्पिप्पलः ।
आस्थानंयदुपान्तधन्य धरणीमास्थाय देवःस्वयम्,
दन्तीन्द्राननविग्रहस्त्रिभुवनं पुष्णाति तैस्तैर्वरैः ।।१।।
निरवधि मदधारा निर्झरो भ्राम्यमाण—
भ्रमर-समर-लीला - धीरणीदत्त दृष्टिः ।
अभिमतवरदानव्यग्रहस्तारविन्दे
करिकमलमुखी नः कामधेनुं धिनोति ।।

(२१) श्रीगणशाष्टकमेतत्स्तोत्रार्णवेधृतमत्र श्लोकानाम् नवकम् । अत्र भगवतोगणेशस्य स्वरूपवर्णनमतीवरोचकं, स्तोत्रस्यास्य पाठेन सर्वकार्याणि सिद्ध्यन्ति—

गणेशाष्टकमिदं पुरायं, यः पठेत्सततं नरः ।
सिद्ध्यन्ति सर्वकार्याणि, विद्यावान्धनवान्भवेत् ।।

(२६) श्रीविघ्नेश्वरगीतम् शैवतन्त्रेऽतिरहस्ये आकाश भैरव कल्पे

शंकर विरचिते श्रीविद्यागणेशाष्टोत्तरशतनाम स्तोत्रं सम्पूर्णमिति पुष्पिकायां निर्देशः। श्लोकाश्चात्र ५। संगीतमय्या शैल्या गणेशस्वरूपप्रतिपादनम्। फलं च विघ्नविदारणम्।

(२५) श्री विनायकस्तोत्रम् श्लोकानां नवकम्। सानुप्रासा संगीत-मयी सरसा, सरला, सप्रसादा भाषा, वसन्ततिलका छन्दो रक्षापरम्।

तन्वी नः शुभमतिं तरुणारूणश्रीः,
दायादकाय रुचिरिन्दुवतंससूनुः।
प्रत्यूहभंगपटुभिः सहितो बधूभि,
रामोदमुख्यनिजपारिषदः समेतः॥

(२७-२८) अत्रस्तोत्रद्वये पूर्वोत्तरशतकाख्ये त्रयोविंशत्यधिक शतद्वयेन-श्लोकेन भगवतः गणेशस्याभ्यर्थना। गणेशादेव निखिल-ब्रह्माण्डस्योत्पत्तिः। ब्रह्मादिदेवा अपि गणेशादेवोद्बभूवुः। गणेशएव ब्रह्म। तथा च—

'अव्याकृतं तुरीयं ब्रह्म, त्रिगुणात्मकं गणेशाख्यम्,
विद्यात्मकं गणपते, सततं दूरी करोतु मम दुरितम्॥

श्वेतविनामकस्य यस्यार्चनं चतुर्मुखादयोऽपि देवाः कुर्वन्ति चर्चाम्। अस्य स्तोत्रशतकस्य रचयिता नीलकण्ठ शास्त्री शांकरमतानुयायीषट्दर्शनी अस्ति कलेरब्दे ५०१७ चकार—

इति नीलकण्ठ शास्त्री, विद्वद्रत्नोपनामवान् विबुधः।
शंकरभगवत्पादस्थापित - षटदर्शनी सुसारज्ञः॥

(ख) भगवत्याः शक्तेः सामान्य-स्तोत्राणं संख्या शतत्रयंप्रायोऽतः काव्यात्मक उमालक्ष्मी सहस्रयोः पौराणिकानां चाल्पशः चर्चा चर्च्यते॥ तत्र पूर्वं पौराणिकानाम्—१५९, १६०, १६३, १६५, १६६, १६७, १७५, १७६, २००, २०७, २४०, २४६, २६४ संख्याकानाम्।

**१५९—याज्ञवल्क्यकृत-वाग्देवीस्तोत्रम्**

ब्रह्मवैवर्ते २य खण्डे पञ्चमेऽध्याये ६ष्ठश्लोकमारभ्य ३५ तमं श्लोकं यावत् श्लोकाः ३०।

गुरुशापाद् भ्रष्ट तेजाः। याज्ञवल्क्यः सूर्यनिर्दिष्टं स्तोत्रमिदम् स्तोत्रम-कार्षीत्। वर्षमेकं पाठेन दुर्मेधाः महामूर्खोऽपि मेधावी कविर्भवति पण्डितश्च जायते।

महामूर्खश्च दुर्मेधा, वर्षमेकं च यः पठेत्।
स पाण्डतश्च मेधावी, सुकविश्च भवेद्ध्रुवम्॥

अत्र याज्ञवल्क्यः स्वस्य दुरवस्थां गुरुशापं जगन्मात्रे निवेद्य कविता-निर्माणशक्तिं प्रार्थयत् तस्याः स्वरूपं च वर्णयामास। तच्च—

हिमचन्दनकुन्देन्दु कुमुदाम्भोजसन्निभा ।

**१६०—योगनिद्रोक्तकवचन्यासः**

ब्रह्मवैवर्ते कृष्णजन्मखण्डे नारायण-नारदसंवादे संकट भञ्जन योग-निद्रोक्तकवचंनाम द्वादशाध्याये। श्लोकाश्चात्र २६।१७ शश्लोकमारम्य ४२ तमं यावत् । यः स्वर्णगुटिकायां कृत्वा कण्ठे दक्षिणे बाहौवाबध्नाति तस्य जलाग्नि-शत्रुभ्योभयं न जायते । कवचस्यास्यप्रभावतएव भगवाञ्च्छंकरस्त्रिपुरं नाशयामास । तथा च—

'सुवर्णगुटिकायां च, कृत्वेदं कवचं परम् ।
कण्ठे वा दक्षिणो बाहौ, बध्नीयाद्यः सुधीःसदा ॥
बद्धेवदं कवचं कण्ठे, शंकरस्त्रिपुरं पुरा,
जघान लीलामात्रेण, दुरन्तमसुरेश्वरम् ॥

**१६३—राधाकवचम्**

ब्रह्मवैवर्ते प्रकृतिखण्डे ५६।१-५९ श्लोकाः ५९ । शिवः पार्वतीं कथयामास ।

कवचस्यास्य पाठेन नरोजीवन्मुक्तोभूत्वा विष्णु तुल्यतांयाति। यज्ञव्रतो-पवास प्रदक्षिण चतुर्वेदपारायणजन्य-फलं लभते । तथा च —

'नित्यं पठति भक्त्येदं, तन्मन्त्रोपासकश्च यः।
विष्णुतुल्यं भवेन्नित्यं, राजसूयफलं लभेत् ॥

**१६५—राधिकाकृत पार्वतीस्तोत्रम्**

ब्रह्मवैवर्ते ४।२२।७९-११४ श्लोकं यावत् ३५ श्लोकाः—

स्तोत्रस्यास्य पाठेन नरः हरिभक्तिं दास्यं च लभते। नारी श्रीकृष्ण-तुल्यंपतिं विन्दति । प्रसादानुप्राससमन्विता भाषार्थज्ञानं विनापि पाठकानां मनांसि रञ्जयति। भगवत्याः विविधानि नामानि पद्ममुखी, सावित्री, कालिका, कमलेत्यादीनि ।

**१६६—राधाषोडशीनाम स्तोत्रम्**

ब्रह्मवैवर्ते १७।२१६-२४७ । श्लोकाः ४२ नारदेन पृष्ठोभगवान् स्वयमाह ।

त्रिसन्ध्यमस्यपाठेन राधामाधवयोः पादाब्जे भक्तिः जायते। अणिमाद्याः सिद्धीश्चप्राप्नोति ।

'यावज्जीवं स्तोत्रं त्रिसन्ध्यं यः पठेन्नरः।
राधामाधवयोपादपद्मेभक्तिर्भवेदिह ॥
सर्वेषां यज्ञतीर्थानां करणैर्विधिनोदितैः,
प्रादक्षिण्येन भूमेश्च, कृत्स्नायाः एव सप्तधा ॥
तदेव स्तोत्र पाठस्य, कलांनर्हन्तिषोडशीम्।
स्तोत्रस्यास्य प्रभावेण, जीवन्मुक्तो भवेन्नरः॥

**१६७—राधास्तोत्रम्**

ब्रह्मवैवर्ते ४।९२।६४-९३। श्लोकाः ३०।

कृष्णसन्देशमादायागतेनोद्धवेन रुदन्ती रक्तवदना शोक-मूर्च्छितताराधा-स्तुता। स्तोत्रस्यास्य पाठेन सुखभोगपूर्वकं हरिलोकप्राप्तिः। तस्य बन्धुविच्छेदः, रोगशोकादयः न भवन्ति। तथा च—

इदमुद्धवकृतं स्तोत्रं, यः पठेत भक्तिपूर्वकम्।
इहलोके सुखं भुक्त्वा, यात्यन्ते हरिमन्दिरम् ॥

**१७५—लक्ष्मीस्तोत्रम्**

ब्रह्मवैवर्ते २।३९।५२-८० यावत् श्लोकाः २९, ब्रह्मणा प्रदत्तेनानेन स्तोत्रेणेन्द्रस्त्रैलोक्यलक्ष्मीं बुभुजे। त्रिसन्ध्यमस्य पाठेन कुवेरतुल्यंराज राजेश्वरो नरोभवति।

'इदं स्तोत्रं महापुण्यं, त्रिसन्ध्यं यः पठेन्नरः,
कुवेरतुल्यः सभवे, द्राजराजेश्वरो महान् ॥१॥
सिद्धिस्तोत्रं यदि पठे, न्मासमेकं च संयतः।
महासुखी च राजेन्द्रः, भविष्यति न संशय ॥२॥

आदावत्रानुष्ठुप्छन्दोभिः चतुर्थ्यन्तनामभिः नमोऽन्तैः स्तोत्रं एकैव लक्ष्मीविविधाधारभेदात् विभिन्ननाम भजते। गृहदेवता, अदितिः, स्वाहा, स्वधा, वसुन्धरादि, अनया विना जगत्सर्वम् मृतवत् भवति।

**१७६—लक्ष्मीस्तोत्रकवचम्**

ब्रह्मवैवर्ते ३ २२।१-३९ यावत् श्लोकाः ३९ गौतमशापात् निःश्री-कमिन्द्रं मधुसूदनःप्राह। कवचेऽत्र सरलयागिरा अनुष्टुप्छन्दसा माहात्म्यकथन-पुरस्सरं यन्त्रविनियोगांगन्यासकरन्यासादिकम्। षोडशाक्षरोमन्त्रः। 'ओं ह्रीं श्रीं क्लीं नमो महालक्ष्म्यै स्वाहेति।' भगवती लक्ष्मी श्वेतचम्पकवर्णाभाशतचन्द्र समप्रभा बह्निशुद्धांशुकाधाना, रत्नभूषणाभूपिता ईषद्धास्यप्रसन्ना सा

मालतीमाल्यशोभिता कवरी भारंविभ्रती साकारा निराकारा च। महा-लक्ष्मीदम्।

'इदं स्तोत्रं महापुरायं, पूजाकालेच यः पठेत्।
महालक्ष्मीः गृहंतस्य, न जहाति कदाचन ॥१॥
इत्येवं कथितं वत्स, पद्मायाश्च शुभावहम्।
सुखदं मोक्षदंसारम् शुभदंसम्पदः पदम् ॥२॥

## २००—शिवकृत पार्वतीस्तोत्रम्

ब्रह्मवैवर्ते ४।३७।४१-४९ यावत् श्लोकाः ९ अत्रापराधक्षमापनमिष्टम्। सरला सप्रसादा सरस सानुप्रास भाषा स्तोत्रस्यास्य पाठेन विपदग्रस्तो विपद्भ्यो-मुच्यते, मित्रभेदं दूरंगच्छेत्। परितुष्टा पार्वती च तद्गृहं नैवत्यजेत्!

'इत्येवं पार्वतीस्तोत्रं, शंकरेण कृतंपुरा।
यः पठेत् विपदाग्रस्तः, स भयादेव मुच्यते ॥१॥
मित्रभेदो भवेद्दूरं, तत्संप्रीतिर्भवेत्पुरा।
पार्वती परितुष्टा च न, त्यजेत्तस्यमास्करम् ॥२॥

## २०७—शिवकृत प्रकृतिस्तोत्रम्

ब्रह्मवैवर्ते ४।४३।७४-१०८ यावत् श्लोकाः ३५। भगवता नारायणेन प्रतिबोधितः शिवः स्वीय शापापनोदाय प्रकृतिं तुष्टाव। अत्र प्रकृतिः ब्राह्मी, भद्रा, भद्रपदा, दुर्गा, निद्रा, तन्द्रा, क्षमा, श्रद्धा, तुष्टिः पुष्टिः, लज्जा, मेधा, वेदस्वरूपा, वेददायिनी महामाया, विष्णुरूपा च कथिता। धर्मार्थकाम मोक्षदम्।

'इदं शिवकृतं स्तोत्रं, प्रकृत्या यः पठेन्नरः
न भवेत्कामिनीभेदः, तस्यजन्मनिजन्मनि ॥१॥

## २४०—श्रीस्तोत्रम्

अग्निपुराणे २३७।२-१९ यावत् श्लोकाः १८ स्तोत्रकर्तेन्द्रः, अत्रानुष्टुप् छन्दः, सदलाभाषा, अर्थाविबोधः सुकरः, श्रीसूक्तस्य स्फुटः प्रभावः। स्तोत्रस्यास्य-प्रभावेण लक्ष्मीः सुस्थिरा। मुक्तिभुत्त्यादयश्च करतले स्थिताः।

राज्यलक्ष्मीस्थिरत्वाय, यथेन्द्रेण पुराश्रियः।
स्तुतिः कृता तथा राजा, जयार्थं जपमाचरेत् ॥

## २४९.—सरस्वतीकवचम्

ब्रह्मवैवर्ते २।४।६१-९१ यावत् श्लोकाः ३१, ब्रह्मा प्रवक्ता भृगुः श्रोता,

स्तोत्रस्यास्य पाठेन पञ्चलक्षजपेन च नरः बृहस्पतिसमोभवति। सर्वंजेतुं च शक्नोति। आदौ कवचस्यास्येतिहासः, प्रभावः कथितः, अंगरक्षापरो मन्त्रः प्रोक्तः, विश्वविजयकवचमिति नामान्तरम्। तथा च—

पञ्चलक्षजपेनैव, सिद्धं तु कवचं भवेत्।
यदि स्यात् सिद्धकवचः, बृहस्पति समोभवत् ॥१॥
इति ते कथितं विप्र, सर्वमन्त्रौध-विग्रहम्।
इदं विश्व जपं नाम, कवचंब्रह्मरूपकम् ॥२॥

## ६—उमासहस्रम्

वसिष्ठगणपतिमुनिप्रगीतमिदमत्र १००० श्लोकाः प्रथमंमुद्रणम् १९४३ संवत्सरे द्वितीयं च १९६२ अरविन्दाश्रम मुद्रणालय पाण्डिचेरीतोमुद्रितम्। अस्यविशिष्टमध्ययनं पृथक् ग्रन्थप्रणयनसाध्यम्। काव्यात्मकेऽत्रालंकार रसछन्द-सांविस्तशोविवेचनन्तत्रैव संभाव्यते किञ्चिद्दिग्दर्शनं च सप्तमाध्याये रचयितु-जींवनादिविषयकं कृतम् वर्तते। महदिदं स्तोत्र-काव्यम् उमादेवी माश्रित्य रचितम्। सन्त्यत्र दशशतकानि। प्रतिशतके च चत्वारः स्तवकाः। प्रतिस्तवकं च पञ्चविंशतिः श्लोकनाम्। एकैकः स्तवकः एकवृत्तनिबद्धः। सर्ग प्रकारश्चेत्थं सर्वेश्वर्याः परमार्थस्वरूपं, वैदिकतान्त्रिकदेवतानां स्वरूपाणि देवतानुग्रहोपायः, देव्याः प्रसादयोगानुभूतयः, दशमहाविद्यानां तत्त्वम्, तासामुपासनाविधिफलानि, औपनिषद्यविद्यादयः तथा च—

दर्शितं रमणस्यर्षे र्यावद्वाक्यं मिताक्षरैः।
यावच्चपितृपादानां, विज्ञातमुपदेशतः ॥१॥
तन्त्रेभ्योऽवगतं यावत्, प्राचामाचारशासिनाम्।
यावत्परमपुरायासु, कुलगोष्ठीषु च श्रुतम् ॥१॥
विदितं विविधंयावदितिहासविलोकनात्।
यावदप्यात्मना दृष्टं, तपता विपुलंतपः ॥२॥
अधिकृत्यमहामायां, भुवनानामधीश्वरीम्।
अत्रस्तोत्रप्रसंगेषु, समस्तं तत्प्रदर्शितम् ॥३॥

अयं रसोज्ज्वलः, साहित्य-सन्दर्भः, ओजः प्रासादमाधुर्यैरर्थतः शब्दतश्च समन्ततश्च व्याप्तः बहुषु स्तोत्रेषुप्रवहन् काव्यरसः रसिकानाप्लावयन् विलसति। तदिदं सहस्रम् अभिनवं मननीयम् निदर्शनं स्तोत्रसाहित्यस्य, अमूल्यफलं, विवदिषूणां अनल्पबलं सहृदयानां साधूनां हृदयान्यावर्जयत् मुदावहं काव्यमिदं, स्तवकेषुवृत्तानि चेत्थम्—

प्रथमस्तवके-आर्या, द्वितीये पञ्चचामरं, तृतीये तनुमध्या, चतुर्थे गीतिः, पञ्चम उपजातिः, षष्ठे मदलेखा, सप्तमे वसन्ततिलकाः, अष्टमेऽनुष्टुप्, नवमे आर्या,

दशमे ललिता, एकादशे आर्या, द्वादशे रथोद्धता, त्रयोदशे त्रिष्टुप्, चतुर्दशे उपगीतिः, पञ्चदशे स्वागता, षोडशे कुमारललिता, सप्तदशे चम्पकमाला, अष्टादशे प्रहर्षिणी, एकोनविंशतितमे प्रमाणिका, विंशतितमे मणिबन्धः, एकविंशतितमेऽनुष्टुप्, द्वाविंशतितमे वियोगिनी, त्रयोविंशतितमे नर मनोरमा, चतुर्विंशतितमे सुप्रतिष्ठा, पञ्चविंशतितमे इन्द्रवज्रा, षड्विंशतितमे दोधकम्, सप्तविंशतितमे शिखरिणी, अष्टाविंशतितमे वसन्ततिलका, एकोनत्रिंशे मदलेखा, त्रिंशत्तमे प्रमाणिका, एकत्रिंशत्तमे उपजातिः, द्वात्रिंशत्तमे आर्यागीतिः, त्रयस्त्रिंशत्तमे वंशस्थम्, चतुस्त्रिंशत्तमे हरिणी, पञ्चत्रिंशत्तमे इन्दुवन्दना, षट्त्रिंशत्तमे अनिशक्वरी, सप्तत्रिंशत्तमेऽनुष्टुप्, अष्टत्रिंशत्तमे पादाकुलकम्, एकोनचत्त्वारिंशत्तमे इन्द्रवज्रा, अन्तिमे च पादाकुलकमिति ।

वरार्यविषयाश्चेत्थम् क्रमशः—

व्योमस्वरूपोमा, सर्गवर्णनम्, सशरीरिणयाः भगवत्याः साधनम्, आध्यात्मिकाः विभूतयः, परिणयः, महाभाग्यता, व्योमरूपायामातृकायाः विभूतयः चरित्रत्रयम्, मन्दहासः, केशादिपादान्तवर्णनम्, पादादिकेशांतवर्णनम् शृंगारः कटाक्षः, काली गौरीकुण्डलिनी, आध्यात्मं वैभवम् मदकरी शक्तिः, रूपविशेषः कुण्डलिनीसमुल्लासश्च, ध्येयलीला रूपम्, सर्वसारमयी, अर्धनारीश्वरः, हरकुटुम्बकम्, प्रकीर्णकम् गायत्रीगर्भितम् प्रकीर्णकम्, क्षेत्रमाला, अपीतकुचाम्बा, प्रचण्डचण्डी, रेणृकादिकाः नवविधभजनम्, मानसपूजा, नामवैभवम्, भक्तियोगः, अर्पणं, प्रार्थना, प्रकीर्णकम्, तत्त्वविचारः, दशमहाविद्या, व्योमशरीरा, दैवगीतम् ।

## १८१—लक्ष्मीसहस्रम्

आत्रेयगोत्रस्यालंकारनीतिशास्त्रविदुषः श्रीनिवासाध्वरिणः नप्त्रा रामचन्द्रचरणाब्जरसिकेन रघुनाथदासपुत्रेण रामानुजार्यमतानुयायिनः वेंकटाचार्यशिष्येण श्रीमता वेंकटाचार्येणरचितम् । अनिर्वाच्यव्याधिसमापन्नतया बहुतरनिर्वेदमुपजग्मुषा तत्परिहारार्थं निर्गुणस्यापि परमात्मनः परमैश्वर्य सम्पादकम्, उच्चावच्चप्रपञ्चोपादान-विषयकम् श्री रमादेव्याख्यम् दैवतमेवास्य कुशलाकुशलनिर्वतकतया लक्ष्मीस्तोत्रसहस्रकमरचयत । अत्र श्लोकानां सहस्रकम् स्तवकानां च पञ्चविंशतिः स्तबकाश्च —

आरम्भ वक्षस्थल मंगलशृंगारक्षान्त्यौदार्यनक्षत्रमालाविभावकारुण्य प्रयत्नसौन्दर्यैश्वर्योत्सवयमकविचित्रवैभवपरिसंख्यादशावतारचित्रसंकीर्णनिर्वेदफलाख्याः ।

अत्रगौडीया वैदर्भीच रीतिः आरभटीवृत्तिः विविधयमकरूपकोत्प्रेक्षाश्लेष परिसंख्या विभावना काव्यलिंगोदात्तविरोधाभासादीनांमलंकारणां प्रयोगोऽलंकारे विशेषेणक्षारुचिवानयं कविः । छन्दःसु शार्दूलविक्रीडितमन्दाक्रान्तावसन्ततिलका

शिखरिणीहरिणी मालिनीनां विशेषत: प्रयोगो जात:। विशिष्टाद्वैतमतानुयायी परमविद्वान् वाचांविचक्षण: कवि:। तथा च—

शय्या शब्दगुणानुशासनचणश्छन्दोमयंवाहनम्,
सोदर्यस्तु कलानिधिस्तवरमेसूनुश्चवाणिपति:।
तस्यास्ते पुरत: स्तवं मितमति: प्रोञ्जम्भितं श्रावयन्,
गुञ्जाविक्रयिण: श्रयामि, पदवीं माणिक्यपुञ्जापणे ॥१॥

(ग) शिवस्तोत्रेषु केषाञ्चिदत्र विवेचनम् प्रदर्श्यतेऽल्पश: समेषामसम्भवात् अव्यवहार्य्यत्वाच्च। (५६-५७, ६४, ६८, ११३, १४० संख्याकानाम्।

**५६-५७—मुनिकृतशिवस्तोत्रम्**

लिंग पुराणे ३२।१-१६ यावत् श्लोका: १६ स्तोत्रकर्तारोमुनय: गाणपत्य कारकम्—

य: पठेच्छृणुयाद्वापि, युष्माभि: कीर्तितंस्तवम्।
श्रावयेद्वाद्विजान्विप्र: गाणपत्यमवाप्नुयात् ॥१॥

चतुर्थ्यन्तकतिपयनाममि: स्तवनम् कानिचिदप्रसिद्धान्यपि नामानि यथा कटंकट:, भगवांच्छिव: सर्वभूतानात्मा।

**६४— रुद्रस्तोत्रम्**

देवीभागवते १०।४।३-१२ यावत् श्लोका: ६, विन्ध्यपीडिता: देवा ब्रह्माणं पुरस्कृत्य भगवन्तं शंकरं तुष्टुवु:, अनुष्टुप् छन्दोऽनुप्रासोपेतम्। स्तोत्रस्यास्य पाठेन सर्वमनोरथासिद्धि:। तथा च—

जयदेवगणाध्यक्ष,] उमालालितपंकज।
अष्टसिद्धिविभूतीनां, दात्रे भक्तजनायते ॥१॥

**६८—लिंगोभद्वस्तव:**

वायुपुराणे ५५।३०-६८ यावत् श्लोका: २६। स्तोत्रकर्ताब्रह्मा। फलं चास्य सर्वकामप्राप्ति: पापनिर्वृत्तिश्च तथा च—

इमं स्तवं पठेद्यस्तु ईश्वरस्यमहात्मन:।
कामांस्तु लभते सर्वान्, पापेभ्यस्तु विमुच्यते ॥१॥

भगवान शिवोऽत्राव्यक्तोऽज: निर्विकार: यज्ञादि रूप: समेषां महत्तत्त्वानां विषयोऽयमेव लोकान्सृजतयत्तिपालयति च। पिनाकपाणि: शायकचक्रधारी हिरण्यवासश्चायम्।

नमोऽस्तु रुद्र पिनाक पाणये, नमोऽस्तु ते शायकचक्रधारिणे,
नमोऽस्तु तेभस्मविभूषितांग, नमोऽस्तुते कामशरीरनाशिने ।।

## ११३—शिवस्तोत्रम्

सौरपुराणे ३४।५२-६८ । यावत् श्लोकाः १७ । स्तोत्रकर्ता विष्णुः फलं चास्य सर्वकामोपलब्धिः, ।

य इमं प्रातरुत्थाय, शुचिर्भूत्वा पठेनरः ।
शृणुयाद्वा स्तवंपुण्यं, सर्वान्कामानवाप्नुयात् ।।१।।

अनुष्टुप् छन्दोवद्धम्, सरलं सानुप्रासम् ।

नमः सर्वात्मनेतुभ्यं, शंकरायार्तिहारिणे ।
रुद्राय नीलकण्ठाय, कद्रुद्राय चेतसे ।।१।।

## १४०—हनुमत्कवचम्

आनन्द रामायणे ८।१३।१-४० यावत् श्लोका, ४०, रामदासो विष्णुदासमकथयदितः पूर्वं शिवः पार्वतीमकथयत् मध्यरात्रेजलेस्थित्वा कवचस्यास्य पाठेन नरः सर्वान् रिपून् जेतुं समर्थोभवति, सप्तरात्रपाठमात्रेण क्षयापस्मार कुष्टादितापत्रचविनाशनम् जायते। तथा च—

त्रिकालमेककालं वा, पठेन्मासत्रयं नरः ।
सर्वान्रिपून् क्षणं जित्वा, सपुमान् श्रियमाप्नुयात् ।।१।।

अत तान्त्रिकरीत्या प्रथमं विनियोगांगन्यासकरन्यासादिकम् ततोध्यानम् । अत्ररुद्ररूपस्य हनुमतः स्वरूपवर्णनम् । तथा च—

उद्यन्मार्तण्डकोटिप्रकटरुचियुतम् चारु वीरासनस्थम्,
मौञ्जीयज्ञोपवीताभरणरुचिशिखं शोभितं कुण्डलांकम् ।
भक्तानामिष्टदं तं प्रणतमुनिजनं वेदनादप्रमोदम्,
ध्यायेद्देवंविधेयं, प्लवगकुलपतिं गोष्पदीभूतवार्धिम् ।।१।।

## १४२. हनुमत्कवचम्

नारदपुराणे ७८ । १-५२ । श्लोकाः ५२ । सनत्कुमारो वक्ता नारदः श्रोता । आदावत्र सनत्कुमारस्य रामान्ति के गमनम् रामादेव च रावणवधकथाश्रवणानन्तरं हनुमत्कवचप्राप्तिकथनम् ततोदिग्भ्रमणं ततोऽगंरक्षावर्णनपुरस्सरं भूतादिभयनिवृत्तिप्रार्थनात्रहनुमान् ब्रह्मविष्णुशिवरूपः कथितः फलं चास्य असाध्यसाधनम् यस्मै कस्मै न दातव्यम् । तथा च—

इत्येतत्कथितं विप्र, मारुतेः कवचं शिवम् ।
यस्मै कस्मै न दातव्यं, रक्षणीयं प्रयत्नतः ।।१।।

स्वयं ब्रह्मा स्वयं विष्णुः, साक्षाद्देवोमहेश्वरः।
सूर्यमण्डलगः श्रीदः, पातु कालत्रयेऽपि माम् ।।२।।

(घ) न केवलं संकलनग्रन्थेषु, अपितु तन्त्रागमपुराणादिषु सर्वत्रान्यदेवापेक्षयाविष्णोः स्तोत्र संख्या महती । सामान्यस्तोत्रे चापि केवलं स्तोत्र चतुष्टयस्यैवात्र चर्चा विस्तरभिया

## ७५. नारायणीयम्

मेप्पत्तूर निवासि नारायणभट्टपादैः प्रणीतमिदं श्लिष्टार्थाभिधानं नारायणेनप्रणीतम् नारायणमधिकृत्यकृतञ्चेति शिवपुरस्थ मंगलोदयेप्रकाशनतः प्रकाशितम् श्लोकाश्च १०३४, दशकानि सप्तविंशतिः ।

वातरोगाक्रान्तः कविस्तोत्रामिदमरचयत । अस्यस्तोत्रस्य रोगापहारित्वं प्रसिद्धम् । आयुरारोग्यदं च—

दशकानाम् वरार्यविषयानुसारिनाम । तथा च महिमावर्णनं रूपवर्णनम्, भक्तस्वरूपाष्टांगयोगविराटजगदात्मत्वहिरण्यगर्भोत्पत्ति प्रलयसृष्टिः जगत्सृष्टिः सृष्टिभेदाः हिरण्यकशिपोरुत्पत्तिः, वाराहावतरणम्, हिरण्याक्ष युद्धं, कपिलोपाख्यानं, नरनारायणावतारः ध्रुवस्य प्रचेतस् ऋषभादीनां कथा, जम्ब्वादिद्विपेषुभगवदुपासनाजामिलोपाख्यानचित्रकेतूपाख्यान-प्रह्लादचरितनृसिंहाद्यवतारचरित कृष्णचरितादीनांकथा ।

पाठकमनः पुण्डरीकेषु प्राभातिकारुणकिरणकेलिमिव प्रकाशयती रीतिगुणालंकारादिचातुरीः जनयन्ती असंख्येयगुणगणैः जनान् भक्तिभावुकान् कुर्वन्ती चातितरांरोचतेऽस्याः कथा । तथा च—

सूर्य स्पर्धिकिरीटमुर्ध्वतिलकप्रोद्भासिकालान्तरम्,
कारुण्याकुलनेत्रमार्द्रहसितोल्लासं सुनासापुटम् ।
गण्डोद्यन्मकराभकुण्डलयुगं, कण्ठेज्वलत्कौस्तुभम्,
तद्रूपं वनमाल्यहारपटलं, श्रीवत्सदीपं भजे ।।१।।

## ७८. नृपकृतंविष्णुस्तोत्रम्

लिंगपुराणे ३६।४-१६ यावत् श्लोकाः १२ स्तोत्रं क्षुपनामा नृपः दध्यञ्चमृषिसतमं जेतुं कृतवान् सरला भाषा अनुष्टुप्छन्दः भगवान्विष्णुः आदिरनादिश्च प्रकृति पुरुषरूपः विश्वेशः परमात्मा परंधामजगन्नाथः संकर्षणप्रद्युम्नानिरुद्धादयोऽस्यैव नामान्तराणि ।

संकर्षण महाभाग, प्रद्युम्नपुरुषोत्तम ।
अनिरुद्ध महाविष्णो, सदाविष्णोनमोऽस्तुते ।।

अस्यनाभेरुर्ध्वं भूरादयः सप्तलोका अधश्च सप्तपातालाः द्यौर्मूधा सूर्य-

चन्द्रादयोऽशाः । स्तोत्रस्यास्य पाठेत सर्वपापानि क्षयं यान्ति ।

इदं तु वैष्णवेस्तोत्रं, सर्वपापप्रणाशनम् ।
यः पठेच्छृणुयाद्वापि, क्षुपेणपरिकीर्तितम् ।।१।।
श्रावयेद्वाद्विजान्भक्त्या, विष्णुलोकंसगच्छति ।

## ९५. पापप्रशमनस्तोत्रम्

वा० पुराणे ८७।१-४९ यावत् श्लोकाः ४९ स्तोत्रकर्तापुलस्त्यः वामन प्रादुर्भाव प्रकरणे । भगवान् विष्णुः सर्वान् भूतान् भावयति । सरले सप्रसादेऽत्रानुष्टुप् समलंकृते नमोऽन्तचतुर्थ्यन्तपदैः विष्णोर्नामानुकीर्तनम् ।

जयध्वजनमस्तुभ्यं, धर्मध्वज नमोऽस्तुते ।
तालध्वज नमस्तेऽस्तु, गरुडध्वज नमोस्तुते ।।

## १००. स्तवमणिमाला

आचार्य रामचन्द्रदीक्षित-कृतः स्तोत्रग्रन्थसमुच्चयरूपः सम्पादितश्च पं० सुब्रह्मण्यशास्त्रिणा, रचयिता, ऋग्वेदीयःकालश्च १६९३ ख्रीस्ताब्दम् । **अयं** महाविद्वान् तथा च—

लब्धैःसाधु कविप्रबन्धजलधिष्वन्तश्चिरं मज्जताम्,
शब्दार्थैर्मणिभिः पतञ्जलिवचः शाणोपलैर्तार्जितैः ।
यत्नेनग्रथिता मयासुमतिभिः, सर्वोऽपिकौतूहलादा-
चार्य स्तवराजभूषणमिदं पश्यन्तु हृष्यन्तु च ।।१।।

अत्र निम्नलिखिताः स्तवाः सन्ति-रामकर्णरसायनस्तवः वर्णमालास्तवः, रामप्रसादस्तवः, विश्वगर्भस्तवः, रामचित्रस्तवः, रामाष्टप्रासस्तवः, रामचापस्तवः, रामतूणीर स्तवः, रामायणसंग्रहस्तोत्रम्, चेति । रामकर्णरसायनस्तवस्तु लीलाशुककवेः कृष्णचरितामृतस्य प्रतिक्रियायां रचितः यद्यप्यत्रकृष्णचरितामृतवत्काव्यसौन्दर्यभरो न विद्यते तथापिव्याकरण साहित्ययो; समन्वयः समवलोक्यते ।

मौलौनिधेहिमुकुटं, त्यजबर्हिवर्हम्,
वाणं गृहाणधनुषा, सहमुञ्चवेणुम् ।
शाखामृगैर्विहर, संत्यजगोपबालान्,
रामो यदूद्वह भव, त्वमथाश्रये त्वाम् ।

अत्रचत्वारः निस्पन्दास्तत्र पर्याय निस्पन्दश्चतुर्थः किन्त्वत्रत्रिषु निःस्यन्देष्वेव स्तवाः । अत्र संकलने सर्वोत्तमः रामचरितस्तवः । यमकप्रपञ्चप्रपञ्चिता रचना ।

(ङ) सूर्यस्य सन्ति स्तोत्राणि सामान्यस्तोत्रपूल्लिखितानि तत्र कानिचिदत्र विविच्यन्ते । ४, ८, १३, १४, १५, २१ ।

**४- सूर्यकवचम्**

श्लोकाः १८ कवचमिदं ब्रह्मयामलतःप्रकाशितम्, भगवता सूर्येणोपदिष्टमत्र भाषा पौराणिकी सरला सप्रवाहा, सुसंवेद्या, आदौफलकथनम् ततोऽगंरक्षादिकम् प्रोक्तम्। अष्टाक्षरो मन्त्रः। ओंघृणि ह्रीं सूर्याय नमः इत्युस्योपदेशः। भूर्जपत्रे लिखित्वाधारणेन रवौ संक्रान्तिदिनेऽथवा नरः सूर्यप्रियोभवेत्।

इदंकवचमज्ञात्वा सूर्यमन्त्र जपादिकं निरर्थकम्। तथा च—

यज्ज्ञात्वा मन्त्रवित्सम्यक्, फलं प्राप्नोति निश्चितम्,
यद्धृत्वा च महादेवो, गणानामधियोऽभवत्।
अज्ञात्वा कवचं दिव्यं योजपेन्सूर्यमुत्तमम्,
सिद्धिर्नजायतेतस्य, कल्पकोटि शतैरपि ॥१॥

**८. सूर्यशतकम्**

कोदण्डरामार्यकृतमिदमत्रश्लोकाश्च १०७ स्तोत्रार्णवे ५९६ पृष्ठे धृतम्। अतीव ललितमिन्द्रवज्रोपेन्द्रवज्राबद्धम्। सप्रसादं सरलं सुबोधम् भगवतः सूर्यस्य-महिमप्रतिपादन परम्। सानुप्रासम्।

श्रिया समेतं, श्रितपारिजातम्, वियत्प्रदीपं वितत प्रभावम्।
नयप्रचारं नगराजधीरम्, दयासमुद्रं तपनं नमामि ॥१॥

शब्दचयनं युग्मकं समध्वनिध्वननं, रणनं संगीतमयत्वं चातीव मनोहारि, कर्णाल्हादकारि यच्छ्रुत्वा विरसोऽपि सरसो जायते।

मित्रं पवित्रं नलिनी कलत्रम्, हिरण्यमात्रं, हिम वीतिहोत्रम्।
तमोलतादात्रममर्त्यचैत्रम्। विशालनेत्रं रबिमाश्रयेऽहम् ॥१॥

अत्र त्रान्ता शब्दाः सोदर्या इवाकस्मान्मनोहरन्ति, कमप्यमन्दमानन्दं च कर्णकुहरे व्याप्नोति। स्तोत्रेऽत्रमनुं सूर्यवंशीयमाह—

यस्यात्मजो धर्मविदां वरिष्ठः, वर्णाश्रमाचारविधानकर्ता।
नृपालवंशादिमबीजभूतो, मनुस्तमम्भोजहितं नमामः।

प्रातर्मध्यन्दिनास्तमयेषु सूर्यनमस्कारणं विभिन्ननामभिर्यथोचितमाह।

नमःप्रभाते विधिरूपकाय, मध्यन्दिने माधवरूपकाय।
दिनावसाने हरिरूपकाय, निशासु सर्वासुचिदात्मकाय ॥

भगवान्सूर्यः सर्वैःस्वसम्प्रदायविद्भिरूपोष्यः

यं योगिनः सांख्य विदश्चपाञ्च
रात्रव्रता पाशुपतागमज्ञाः।
वेदान्तविद्या निरताः भजन्तः
प्रयान्ति मुक्तिं तपनं भजेऽहम् ॥१॥

फलं चास्य पुत्रकलत्रप्राप्तिस्तथा च।

कोदण्डरामार्य कृतां स्तुतिं ये,
पठन्ति शृण्वन्ति च भक्तियुक्ताः ॥
तेषां श्रियं पुत्रकलत्रसौख्यम्,
स्वर्गंच मोक्षंच दिननाथ देहि ॥२॥

## १३. सूर्यस्तोत्रम्

वासुदेवसरस्वतीरचितं बृहत्स्तोत्ररत्नाकरे धृतम् काशीसंस्करणे श्लोकाश्चात्र ७। सरलं भावगभीरं ध्वनिमयम् सानुप्रासम् अनुष्टुप्, छन्दोबद्धम्। भगवान् सूर्य एव जगतः कालस्य दिशश्च कार्यकारणम्। प्राणादीनां स्थितिरनया विना न संभाव्या। जगदान्ध्यमनेनैव प्रणश्यति। ब्रह्मादयो देवा अस्मादेव। सूर्योपस्थानमन्त्राणं प्रभावोऽत्र परिलक्ष्यते।

अतश्चन्द्रो न भिन्नोऽस्मात्, स सूर्यः सकलात्मकः।
यं विना जगदान्ध्यं हि, स देवः केन पूज्यते ॥१॥

## १४. सूर्याष्टकम्

बृहत्स्तोत्र रत्नाकरे बाम्बे संस्करणे २०८ पृष्ठे धृतम् श्लोकाश्चात्र ११। सम्बपुराणीयमिदमिति प्रतीयते। स्तोत्रकर्ता साम्बः, अत्र रवेर्दिने स्त्रीतैल मधुमांससादीनि परित्याज्यानीति कथितम्। ग्रहपीडाविनाशकम् व्याधिनाशकञ्चेति। तथा च—

सूर्याष्टकं पठेन्नित्यं, ग्रहपीडा प्रणानाशनम्।
अपुत्रो लभते पुत्रं, दरिद्रोधनवान्भवेत् ॥१॥
आमिषं मधुपानंच, न करोति रवेर्दिने,
न व्याधिशोकदारिद्र्यम्, सूर्यलोकं सगच्छति ॥२॥

## १५. सूर्याष्टकम्

पण्डितरघुनाथ शर्मरचितमिदमत्रश्लोकाः १०। १९१९ संवत्सरे लिखितम्। अस्य पठनेन-धर्मार्थ काममोक्षाख्यचतुर्वर्गप्राप्तिः सुकरा। रचनया प्रतीयते यद्रचयिता महान् वैयाकरणः। माससंक्रान्तिमादायाप्यनेके श्लोकाः तत्प्रभावश्चर्वणितः। तथा च—

वृषात्पञ्चस्वेत्यौऽढयति, दिनमामन्द गमनः,
तथा बृद्धिरात्रौ प्रकटयति कीटाज्जव गतिः।
तुले मेषे यातो रचयति समानं दिननिशम्,
तमहं नमामि श्रो सूर्यं, तिमिर हरणं शान्तशरणम् ॥१॥

नन्देन्द्वंक क्षितावब्दे, मार्गमासे शुभे दले,
सूर्याष्टकमिदं प्रोक्तं, दशम्यां रविवासरे ।।२।।

## २१. सूर्यास्तोत्रम्

याज्ञवल्क्यरचितमिदमत्र श्लोकाश्च १२, काशी संस्करणे बृहत्स्तोत्र रत्नाकरे धृतम् । आर्याछन्दोवद्धम् । फलं चास्य स्तोत्रकर्तु:गृहं पद्मा न मुञ्चति ।

आर्या: सप्त सदा यस्तु, सप्तम्यां सप्तधा जपेत् ।
तस्य गेहं च देहं च, पद्मा सत्या न मुञ्चति ।।१।।
निधिरेष दरिद्राणां रोगिणां परमौषधम् ।
सिद्धि: सकलकार्याणां, गाथेयं संस्मृता रवे: ।।२।।

# सङ्ग्रन्थावलिः

## १. वैदिकवाङ्मये


१. अथर्ववेदः, विश्वेश्वरानन्द वैदिक शोधसंस्थानम्, होशियारपुरम्, २०१८ तथा संस्कृत संस्थान बरेली, १९६२।

२. अष्टाविंशत्युपनिषदः, श्री द्वारिकाप्रसाद शास्त्रिसम्पादिता, प्रथम संस्करणे, प्राच्य-भारतीय-प्रकाशनम्, वाराणसी, १९६५.

३. अश्वलायनगृह्यसूत्रम्, श्रीस्वामिरवितीर्थसम्पादितम्, एडियार मद्रासतः १९४४ शकाब्दे।

४. ईशादि नवोपनिषदः, गीताप्रेस गोरखपुरतः, चतुर्थ संस्करणम्, २०१९, व्याख्याकारः हरिदास गोयन्दका।

५. ईशोपनिषद्, पूर्वलिखितायाः।

६. उपनिषदां समुच्चयः, आनन्दाश्रम पूनातः, १९२१ ई०।

७. ऋग्वेद-संहिता (प्रथम खण्ड) पं० रामगोबिन्द त्रिवेदि व्याख्यायुता, वैदिक पुस्तकमाला कृष्णगंजे सुलतानपुरं, भागलपुरे १९२१ ई०।

८. ऋग्वेद-संहिता, द्वितीय खण्डात्मिका श्री राम गोबिन्द त्रिवेदि व्याख्यायुता, वैदिकमाला कृष्णगंज सुलतानपुरतः भागलपुरे १९९२ वि०।

९. ऐतरेयोपनिषद्, अष्टाविंशत्युपनिषत्तः।

१०. कठोपनिषद्, पूर्वोक्तोपनिषतः।

११. कात्यायनगृह्यसूत्रम्, दयानन्द विद्यालय लाहौरतः विलियम् सम्पादितम्, १९८१ वि० सं०।

१२. काण्वसंहिता, श्रीपाददामोदर सातवेल्कर सम्पादिता, स्वाध्यायमण्डल सूरत पारोडी, १९९७

१३. काठकगृह्य-सूत्रम्, विश्वेश्वरानन्द वैदिक शोध संस्थानतः होशियारपुरे, १९८१ वि० सं०।

१४. कात्यायन संहिता, श्री अ० चिन्नस्वामि सम्पादिता, सरलाविवृतियुता अच्युतग्रन्थमाला काशीतः। १९८७ सं०।

१५. कौण्डियायन कालोनास्ति।

१६. गणेशथिवशीर्योपनिषद्, गुर्जरलिप्याम् श्री पाददामोदर सातवेल्कर सम्पादिता, स्वाध्याय मण्डल पारोडी, सूरत।

१७. गोपथब्राह्मणम्, दि० वि० विद्यालय, पुस्तकालये ।
१८. गोपालोत्तरतापिन्युषद्, उपनिषदांसमुच्चयेपूर्वनिर्दिष्टे ।
१९. गोभिलगृह्यसूत्रम्, श्री चिन्तामणि भट्टाचार्य सम्पादिता कालिकातः, १८३६ ई० ।
२०. छान्दोग्योपनिषद्, श्री हरिनारायण आप्टे सम्पादिता, आनन्दाश्रम, पूना, १८३७ शकाब्दे ।
२१. ताण्डायनम्, श्री अ० चिन्नस्वामिसम्पादितम्, जयकृष्णदास हरिदास प्रकाशितम्, १९३६ ई० ।
२२. ताण्डायनब्राह्मणम्, श्री अ० चिन्नस्वामी सम्पादितम्, जयकृष्णदास हरिदास सम्पादितम्, वाराणसीतः १९३५ ई० ।
२३. तैत्तरीय ब्राह्मणम्, श्री हरिनारायण आप्टे सम्पादितम्, आनन्दाश्रम पूनातः १८२० शकाब्दे ।
२४. तैत्तरीयसंहिता, श्री हरिनारायण आप्टे सम्पादिता, आनन्दाश्रम पूनातः १८२३ ।
२५. त्रिपुरतापिन्युपनिषद्, श्री अ० महादेव सम्पादिता, अडियार पुस्तकालयतः, १९२५ शकाब्दे । (शाक्तोपनिषदि संकलिता) ।
२६. देव्युपनिषद्, तत्रैव ।
२७. नृसिंहतापिन्युपनिषद् ।
२८. उपनिषदा समुच्चयेसंगृहीता । पारस्करगृह्यसूत्र, गंगाविष्णु श्रीकृष्णदास मुम्बई, १९९४ शाके ।
२९. बह्वृचोपनिषद्, अष्टाविंशत्युपनिषदि संकलिता ।
३०. बृहदारण्यकोपनिषद्, गीताप्रेस गोरक्षपुरतः २०१२ वैक्रमीये ।
३१, बृहत्पराशर स्मृतिः, वाराणसी ।
३२. बृहद्देवता, श्री रामकुमारराय सम्पादिता, चौ० सं० सी० याराणसी, २०२० ।
३३. बोधायनगृह्यसूत्रम् ।
३४. भावनोपनिषद्, शाक्तोपनिषदि संकलिता ।
३५. महानारायणीयोपनिषद् श्री विमलानन्द सूरि सम्पादिता मद्रास, १९५७
३६. मैत्रायणी संहिता, श्रीपाद दामोदर सातवेल्कर सम्पादिता १९९८, स्वाध्याय मण्डल, पारडी सूरत ।
३७. मुण्डकोपनिषद्, अष्टाविंशत्युपनिषदि, संकलिता, पृ० ३० ।
३८. मैत्र्युपनिषद्, उपनिषदंके कल्याणे गीता प्रेस गोरक्षपुरतः प्रकाशिते संकलिता ।

३९. यजुर्वेद संहिता, श्रीपादसातवेल्कर सम्पादिता १९८४ वि०, भारत मुद्रणालय स्वाध्याय मण्डल औध (सतारा)।
४०. याज्ञवल्क्यस्मृतिः, पंचमसंस्करणात्मिका, निर्णय सागर प्रेस बम्बई (१९४१)।
४१. याज्ञवल्क्यस्मृतेराचाराध्यायः, दिल्ली विश्वविद्यालय पुस्तकालये ७८३५८। कालोनास्ति।
४२, लाट्यायनम्, श्री मुकुन्दशास्त्रिसम्पादितम्, वाराणसीतः प्रकाशितम्, १९८९।
४३. वाजसनेयसंहिता, यजुर्वेदे पूर्वलिखिते।
४४. शतपथ ब्राह्मणम्, श्री डा० रघुवीर सम्पादितम्, मोतीलाल बनारसीदास, १९३९ ई०।
४५. शाखायनश्रौतसूत्रम्, कालिकाता-प्रकाशनम्, १८९७ शके।
४६. शाक्तोपनिषदः,श्री अ० महादेव शास्त्रि सम्पादिता,अडियार पुस्तकालयतः १९२५।
४७. श्वेताश्वतरोपनिषद्, अष्टाविंशत्युपनिषदि संकलिता।
४८. श्रीसूक्तं, नवीनाह्निकसूत्रावल्यां २०५ पृष्ठे श्री विद्याधर-गौडसंकलितायाम्, श्री ठाकुरदास गुप्तप्रकाशिता कालोनास्ति। काशीतः प्रकाशितायाम्।
४९. सर्वानुक्रमणी।
५०. सामवेदसंहिता, श्रीपाद सातवेल्कर सम्पादिता, स्वाध्याय मण्डल पारडी, तृतीयावृत्तिः २०१५ वि० सं।
५१. सूर्योपनिषदः अप्रकाशिता उपनिषदः मद्रास १९३३, नवीनाह्निक-सूत्रावल्यां-धृतोपनिषदंके च।

## २. पुराणादिग्रन्थाः

५२. अग्निपुराणम् मनसुखराय मोरद्वारा प्रकाशितम्, क्लाइव रोड, कलकत्ता, २०१४।
५३. अध्यात्मरामायणम्, श्री नरोत्तम चक्रवर्ती सम्पादितम्, कालिकाता (१९३५)।
५४. आनन्दरामायणम्, पं० रामतेज पाण्डेय सम्पादितम्, पण्डितपुस्तकालय, काशीतः १९५८ शकाब्दे।
५५. कल्किपुराणम्।
५६. कूर्मपुराणम्, श्री मनसुख राय मोर द्वारा सम्पादितम्, ५ क्लाइव रोड कलकत्ता, २०१८ सम्वत्।

५७. गरुडपुराणम्, श्री रामतेज पाण्डेय-सम्पादितम्, पण्डित पुस्तकालय, काशीतः प्रकाशितम् (१९६३)।

५८. गणेशपुराणम्,अप्राप्यम्, श्रीभगवत्तत्वे पुराणविमर्शे, बृहत्स्तोत्ररत्नाकरादिषुचास्य केचनांशाश्च संकलिताः।

५९. गर्गसंहिता, गंगा विष्णुदास सम्पादितम्, मुम्बईतः। १९४२ वि० सं०।

६०. देवीभागवतम् भागद्वयम्, श्रीमनसुखराय मोर प्रकाशितम्, ५ क्लाइव-रोड कलकत्ता २०१७।

६१. नारदपुराणम्, खेमराज श्रीकृष्णदास मुम्बईतः प्रकाशितम् १८६२ वि० सं०।

६२. नीलमतपुराणम्, वाचस्पत्येनिर्दिष्टम्, अन्यत्रचोपनिर्दिष्टम्, दुर्लभम्।

६३. नृसिंहपुराणम्, दुर्लभमेतत्स्तोत्रसंग्रहेऽस्यांशां उपलभ्यन्ते।

६४. पद्मपुराणम् पंच खण्डात्मकम्, मनसुखराय मोर, क्लाइव रोड, कालिकाता-प्रकाशनम्, प्रथमम् २०१३। द्वितीयम् २०१४ तृतीयम् २०१५ चतुर्थम् २०१५, पंचयम् २०१५।

६५. ब्रह्मवैवर्तपुराणम् (कृष्ण खण्डम्), वेंकटेश्वर प्रेस, मुम्बईतोमुद्रितम्. १९६६ सम्व० वि०।

६६. ब्रह्मवैवर्तम् भा० १, श्री विनायक गणेश आप्टे द्वारा सम्पादितम्, आनन्दाश्रम, पूना, १९३५ ई०।

६७. ब्रह्ममहापुराणम्, खेमराज श्रीकृष्णदासप्रकाशितम्, मुम्बईतः १९६३, वि० सं०।

६८. ब्रह्माण्ड-पुराणम्, खेमराज श्रीकृष्णदाससम्पादितम्, मुम्बईतः १९६३ वि० सं०।

६९. भविष्यपुराणम्, खेमराज श्रीकृष्णदास द्वारा प्रकाशितम्, मुम्बईतः १९५९ सं० वि०।

७०. भविष्योत्तरपुराणम्, बृहत्स्तोत्ररत्नाकरेनिर्दिष्टम्।

७१. भागवतमहापुराणम् मूलमात्रम्। गीता प्रेस गोरक्षपुरतः प्रकाशितम् २०१८।

७२. मत्स्यपुराणम्, श्रीमनसुखराय मोर द्वारा प्रकाशितम्, ५ क्लाइव रोड कलकत्ता, २०११ वि० सं०।

७३. महाभारतम्, गीता प्रेस गोरक्षपुरतः।

७४. मार्कण्डेयपुराणम्, श्री मनसुखराय मोर द्वारा प्रकाशितम्, ५ क्लाइव रोड, कालिकाता २०१८।

७५. मुद्गल-पुराणम्, दुर्लभमेतत्, बृहत्स्तोत्ररत्नाकरयोः पुराणविमर्शे भगवत्तत्वादिषु केचनश्लोका अस्योद्धृताः। स्तोत्राणि च संकलितानि हिन्दु

त्वे पुस्तकेचाप्यस्यनिर्देशः ४०६ पृष्ठे ।
७६. रामायणम्, श्री अचिन्नस्वामि सम्पादितम्, वाराणसीतः १९५८, तथा गीता प्रेस गोरखपुरतः ।
७७. लिंगपुराणम्, वेंकटेश्वर प्रेस मुम्बईतोमुद्रितम्, १८६३ सं० ।
७८. वामनपुराणम्, खेमराज श्रीकृष्णदास प्रकाशने बम्बई १८६० शकाब्दे ।
७९. वाराहपुराणम्, खेमराज श्रीकृष्णदास प्रकाशितम्, मुम्बईतः १९५९ वि० सं० ।
८०. वायुपुराणम्, मारवाड़ी पुस्तकालय दिल्ली कालो नास्ति, प्र० सं० १२, २१ । मुम्बईतः प्रकाशितम, आनन्दाश्रम पूनातः १८२७ ।
८१. विष्णुपुराणम्, गीताप्रेस गोरक्षपुरतः ।
८२. शिवपुराणम्, पं० रामतेज शास्त्रिसम्पादितम्, पण्डित पुस्तकालय, काशीतः प्रकाशितम्, २०२० ।
८३. स्कन्द-पुराणम् षट् भागात्मकम्, मनसुखराय मोर द्वारा प्रकाशितम्, ५ क्लाइव रोड, कलकत्ता । १म भागः २०१६ द्वितीः २०१७ तृतीयः २०१८, चतुर्थः २०१८, पंचमेः २०१९, पंचमः (ख) २०१९ ।
८४. साम्बपुराणम् खेमराज श्रीकृष्णदास प्रकाशने प्रकाशितम्, मुम्बईतः । कालोनास्ति दि० वि० वि० पु० सं० १८१२९ ।
८५. सौरपुराणम्, आनन्दाश्रम पूना १८११ शकाब्दे ।
८६. हरिवंशः—नीलकण्ठकृतटीकायुतः, पूनातः प्रकाशितम्, १९३६ ई० ।

## ३. व्याकरण साहित्य-ग्रन्थाः

८७. अभिनव भारती, श्रीरामकृष्ण कवि सम्पादिता, ओरियण्टल पुस्तकालय, बड़ौदा १९५६ ।
८८. अभिज्ञान शाकुन्तलम्, श्री जीवानन्द विद्यासागरकृत टीकोपेतम्, कालिकातातः प्रकाशितम्, १९१४ ।
८९. उज्ज्वलनीलमणिः, बम्बईतः प्रकाशितम्, १९३२ ।
९०. उत्तरामचरितम् मोतीलाल बनारसीदासप्रकाशितम्, १९४० ।
९१. काव्य-प्रकाशः, नागेश्वरीटीकोपेतः 'चौखम्बा संस्कृतपुस्तकालय, वाराणसीतः, २००८ ।
९२. काव्यादर्शः, श्री वी० नारायण एय्यर सम्पादितः, बाविला प्रेस मद्रासतः १९६४ ।
९३. काव्यानुशासनम्, श्रीवामनशर्मकुलकर्णिसम्पादितम्, २य संस्करणम्, बाम्बे, १९६४ ।

९४. कुमारसम्भवम्, पण्डित पुस्तकालय, काशीतोमुद्रितम्, हिन्दीटीकोपतम्, १९५९ ।

९५. नैषधमहाकाव्यम्, चौखम्बा सं० पु० वाराणसी, २०१० ।

९६. वाक्य-पदीयम्, ब्रह्मकाण्डम्, चौखम्बा प्र० वाराणसी, १९६१ ।

९७. भक्तिरसायनम्, श्रीमुकुन्दशास्त्रिसम्पादितम्, वाराणसीतः प्रकाशितम्, १०१८ ।

९८. मनोरमा, चौखम्बा सं० प्र० वाराणसी, १९६१ ।

९९. पातंजलिमहाभाष्यम् (नवाह्निकम्), श्री शिवदत्त शर्मा टीकोपेतम्, निर्णय सागर प्रेस, बम्बईतः प्रकाशितम्, १८३९ शके ।

१००. मेघदूतम्, स्वर्गीय एम० ग्रार० केला, टीकोपेतम्, महेण्डला बिल्डिग बम्बईतोमुद्रितम्, कालोनास्ति ।

१०१. रसगंगाधरः, श्री बदरीनाथ झाकृतव्याख्योपेतः, चौखम्बा स० प्र० वाराणसीतः प्रकाशितम्, १९५५ ।

१०२ रघुवंशमहाकाव्यम्, कालिदासकृतम्, संज्जीवन्युपेतम्, वाराणसीतः प्रकाशितम्, खेमराज मुम्बईतश्च १९६९ ।

१०३. विक्रमोर्वशीयम्, महेण्डला बिल्डिग बाम्बे १९५९ ।

१०४. वैदिकवाङ्मयस्येतिहासः श्रीभागवद्दत्तलिखित· १९८४, दिल्ली ।

१०५. शंकरदिग्विजयः, वाराणसी चौखम्बा प्रकाशन ।

१०६. शिशुपालवधम्, सर्वकषयोपेतम् वाराणसीतः प्रकाशितम्, २०१२ ।

१०७. साहित्यदर्पणः, लक्ष्मी सहितः चौ० सं० सी० वाराणसीतः प्रकाशितम्, १९५५, २य संस्करणम् ।

१०८. सिद्धान्त कौमुदी, बालमनोरमोपेता मोतीलाल बनारसीदास, १९६१, १९६४, १९६० ।

## ४. कोश-ग्रन्थाः

१०९. ग्रमर-कोशः, श्री गुरुप्रसादशास्त्रिर्भिनिध्यातः, ग्रानन्द सागर प्रेस, गाय-घाट, वाराणसी, १९५० ई० ।

११०. निरुक्तम्, खेमराज श्रीकृष्णदास, बाम्बे, दुर्गादासीय भाष्योपेतम्, कालोभग्नः ।

१११. उपनिद्षवाक्यकोशः, प्रथम संस्करणे ।

११२. वैदिककोशः प्रथमोभागः, प्रथम संस्करणम्, श्री हंसराजसंग्रहीतः, एंग्लो इण्डियन प्रेस, चेम्बरलियन रोड. लाहौर १९८२ ।

११३. वैदिक इण्डेक्स हिन्दी संस्करणम् ।

११४. शब्द कल्पद्रुमः चतुर्थ भागः पंचमभागः, राजा राधाकान्तसम्पादितः १९६१।
११५. शब्दवाचस्पत्यम्, ३, ४, ५, ६ भागः,तर्क वाचस्पति तारानाथ संकलितम्, चौ० सं० पु० वाराणसीतः प्रकाशितः १९६२।
११६. संस्कृतशब्दार्थ कौस्तुभः, श्रीद्वारिकाप्रसाद चतुर्वेदी सम्पादितः प्रयागतः प्रकाशितः १९५७।
११७. संस्कृत इंगलिश कोशः, श्रीवामनशिवराम आप्टे कृतः १९६३, मोतीलाल बनारसीदास दिल्ली प्रकाशनम्।
११८. हलायुधकोशः, सूचना-विभागोत्तरप्रदेशतः प्रकाशितम्, श्रीजोशी सम्पादितः, १८७९।

## ५. तन्त्रागमादि-ग्रन्थाः

११९. उड्डीशतन्त्रम् बृहत्स्तोत्ररत्नाकरादिषु, हिन्दुत्वे, पृ० ४८४।
१२०. अन्यत्र चास्य चर्चा, उद्धारकोशतन्त्रम्, देवीरहस्ये, पृ० ५२२-५३८।
१२१. कमलात्मिकातन्त्रम्, शाक्तप्रमोदे, पृ० ३५५-३७२ यावत् संकलितम्।
१२२. कपिलतन्त्रम्, हिन्दुत्वपुस्तके धृतम् पृ० ४८४। 'क्यों' माधवाचार्यकृते धर्म प्रेस कमलानगर दिल्लीः प्रकाशिते, २००९ तथा २०१४ उद्धरणम्।
१२३. कालीतन्त्रम्, शाक्तप्रमोदे, पृ० ३-९२ यावत्पूर्ण धृतम्।
१२४. कालीकुल-सर्वस्वतन्त्रम्, मुम्बई विश्वविद्यालयीय पुस्तक विवरणे १४२६ संज्ञके धृतम्।
१२५. कालीविलासतन्त्रम्, कालकातः प्रकाशितम् १९१७ वर्षे।
१२६. कुब्जिकातन्त्रम्, हिन्दुत्वे तथा बा० वि०विद्यालय पुस्तकविवरण धृतम्, पृ० ४८७।
१२७. कुमारीतन्त्रम्, शाक्त-प्रमोदे, पृ० ३८५-४०२ यावत्।
१२८. गणेशतन्त्रम्, शाक्त प्रमोदे, पृ० ४९९-५१० यावत्।
१२९. गन्धवर्तन्त्रम् हिन्दुत्वेधृतम्।
१३०. छिन्नमस्तातन्त्रम्, शाक्त-प्रमोदे, पृ० २२५-२४० यावद् धृतम्, पूर्णम्।
१३१. डामरतन्त्रम्, हिन्दुत्वेधृतम् ४८७। पुस्तकादिष्वस्यान्यत्र चर्चा।
१३२. तन्त्रसारः, महामहोपाध्याय श्री कृष्णानन्द वागीशभट्टाचार्यरचितः, चौखम्बा सं० प्रकाशनतः प्रकाशितम् १९३८।
१३३. तारातन्त्रम्, शाक्तप्रमोदे, पृ० १२३-१४० यावत्।
१३४. त्रिपुरभैरवीतन्त्रम्, शाक्त-प्रमोदे, पृ० २५३-२६८ यावत्।
१३५. दुर्गा-तन्त्रम्, शाक्त-प्रमोदे ४१९-४२७ पृष्टं यावत्।
१३६. देवीरहस्यम् (रुद्रयामलस्यैकाशरूपम्) सपरिशिष्टम्, श्रीरामचन्द्र

काक हरिभट्ट शास्त्रिभ्यां सम्पादितम्, श्रीनगरकश्मीरतः प्रकाशितम्, १९४१।

१३७. धूमावतीतन्त्रम्, शाक्त-प्रमोदे २८१-२९३ यावत् ।

१३८. प्रपंचसारतन्त्रम् भागद्वयम्, श्री गीर्वाणेन्द्र-सरस्वतरचितम्, टी० एम० एस० एस० पुस्तकालय तंजौरतः प्रकाशितम्, १८८४।

१३९. बगलामुखीतन्त्रम्, शाक्त-प्रमोदे ३०७-३२० यावत् ।

१४०. भुवनेश्वरीतन्त्रम्, शाक्त-प्रमोदे, १९७-२१० यावत् ।

१४१. भैरवतन्त्रम्, बृहत्स्तोत्ररत्नाकरहिन्दुत्वादिषु अंशात्मक रूपेण धृतम् ।

१४२. महा-निर्वाणतन्त्रम्, कुलावधूतश्रीहरिहरानन्द सरस्वती सम्पादितम्, १९२५, मद्रासतः प्रकाशितम् ।

१४३. महादेवी रहस्यतन्त्रम्, हिन्दुत्वेऽन्यत्रचांशिकरूपेण, नाम्ना च धृतम् ।

१४४. मातंगीतन्त्रम्, शाक्त-प्रमोदे ३३५-३४३ यावत् ।

१४५. रावणतन्त्रम्, हिन्दुत्वेऽन्यत्र च । बाम्बे 'वि० वि० पुस्तकविवरणे च ।

१४६. राधातन्त्रम् हिन्दुत्वेऽन्यत्र च ।

१४७. रुद्रयामलतन्त्रम्, पुस्तकमिदं बहुशोधृतम्, हिन्दुत्वे, पृ० ४८४। शाक्त प्रमोदेऽत्रत्य कानिचित्स्तोत्राणि दुर्गोपासनाकल्पद्रुमे देवीरहस्यम् पूर्वनिर्दिष्टम् पूर्ण रुद्रयामलयात्मकम् तत्र तत्र पुष्पिकायाम्, इति श्री रुद्रयामले देवी रहस्ये, इति निर्देशः ।

१४८. लक्ष्मीतन्त्रम्, चौखम्बा सं० पुस्तकालय, वाराणसीतः प्रकाशितम्, १९६१तमे वर्ष ।

१४९. वाराहीतन्त्रम्, तत्र तत्र निर्दिष्टम् सुदुर्लभम् ।

१५०. विश्वसारतन्त्रम्, मुम्बई विश्वविद्यालययीय संस्कृतप्राकृतपुस्तक विवरणे स्तोत्र-प्रकरणे धृतम्, बृहत्स्तोत्र रत्नाकरे २००३ संस्करणे ।

१५१. विष्णुतन्त्रम् शाक्त-प्रमोदे ५४५-५६२ यावत् ।

१५२. वीरभद्र तन्त्रम्, मुम्बई विश्वविद्यालयीय संस्कृत प्राकृत पुस्तकविवरणे ।

१५३. शारदातिलकतन्त्रम्, रामकृष्ण मिशन पुस्तकालये । कालिकाता प्रकाशितम्, १९३३ वर्षे ।

१५४. शाक्त प्रमोदः, श्री राजदेवनन्दन सिंह बहादुर नामधेयः संगृह्य प्रकाशितवान् खेमराज श्रीकृष्णदासेन श्री वेंकटेश्वरमुद्रणालयतः प्रकाशितः २००८ तमे वर्षे ।

१५५. शिवतन्त्रम्, शाक्त-प्रमोदे ४४३-४८६ यावत् ।

१५६. शिवरहस्यम्, बृहत्स्तोत्ररत्नाकरे हिन्दु त्वादिष्वस्य केचिदंशाः ।

१५७. श्यामा-रहस्यम्, शक्त्यंकेगोरक्षपुरतः प्रकाशिते गीताप्रेसाख्य मुद्रणालयतः ।

१५८. श्री विद्यार्णवतन्त्रम्, श्रीरामचन्द्र काक सम्पादितम्, श्रीनगर कश्मीरतः प्रकाशितम् १९३२ वर्षे ।

१५९. श्री पांचरात्ररक्षा, पण्डित दुरैस्वामि सम्पादिता, अड्यार ग्रन्थालये, १९४२ ।

१६०. षोडशीत्रिपुरातन्त्रम्, शाक्त-प्रमोदे १५७-१८४ यावत् ।

१६१. सर्वागमसारतन्त्रम्, देवी रहस्ये परिशिष्टे ५२२-५७४ यावत्, श्री दक्षिणामूर्ति मुनि-रचितम् ।

१६२. सूर्यतन्त्रम्, शाक्त प्रमोदे ५२७-५३७ यावत् ।

१६३. हितकारिणीतन्त्रम्, हिन्दुत्व शक्त्यंकादिषु ।

## ६. स्तोत्रादिग्रन्थाः

१६४. अमोघशिवकवचम्, गीताप्रेस गोरक्षपुरम् ।

१६५. आदित्यहृदयम्, राजा दरवाजा वाराणसीतः प्रकाशितम्, १९५५ ।

१६६. आनन्द लहरी, बृहत्स्तोत्ररत्नाकरादिषु ।

१६७. उमासहस्रनाम, वासिष्ठ गणपतिमुनि-प्रणीतम्, अरविन्दाश्रम मुद्रणालय पाण्डिचेरीतः प्रकाशितम्, १९४३ वर्षे ।

१६८. कृष्णकर्णामृतम्, लीलाशुक-रचितम्, मद्रासतः १९४८ तमेऽब्दे प्रकाशितम् ।

१६९. गणेश-सहस्रनाम, गीता प्रेस गोरक्षपुरतः प्रकाशितम्, द्वितीय संस्करणम्, २०१६ तमे वर्षे ।

१७०. चण्डीशतकम्, सं० साहित्येतिहासे निर्दिष्टम् ।

१७१. नवीताह्निक सूत्रावली (अत्र कतिपय स्तोत्राणि संकलितानि), राजा दरवाजा वाराणसीतः प्रकाशितम्, कालोनास्ति ।

१७२. नारायणीयम्, मेफ्तूरनारायणभट्टपाद सम्पादितम्, मंगलोदय-प्रकाशनतः प्रकाशितम्, त्रिचूरतः १९५१, द्वितीय संस्करणम् ।

१७३. पुराण-स्तोत्र-काव्य-सुधा, चौ० सं० पुस्तकालय वाराणसी ।

१७४. बंगलामुखी-स्तोत्रम्, दौलतराम गौड़ सम्पादितम्, वाराणसीत प्रकाशितम् ।

१७५. बृहत्स्तोत्ररत्नाकरः, पं० रामतेज पाण्डेय सम्पादितः, पूर्वोक्त प्रकाशनतः तृतीय संस्करणम् ।

१७६. बृहत्स्तोत्ररत्नाकरः, खेमराज श्रीकृष्णदास द्वारा मुम्बई नगरे प्रकाशितः, १९८२ सं० ।

१७७. बृहत्स्तोत्ररत्नाकरः, पं० रामतेज पाण्डेय सम्पादितः, पण्डित पुस्तकालय, काशी, प्रकाशितम् २००३ द्वि० सं० ।

१७८. रामरक्षारक्षास्तोत्रम्, गीता प्रेस गोरक्षपुरतः, अष्टमसंस्करणम् २०२१ ।

१७९. रामगीता, अध्यात्मरामायणीया, गीता प्रेस गोरक्षपुरतः प्रकाशिता ।

१८०. लक्ष्मीसहस्रनाम, श्रीमद्वेंकटाध्वरिरचितम्, चौ० सं० वाराणसीतः प्रकाशितम्, १९०६ वर्षे ।

१८१. ललिता-सहस्रनाम, श्रीभास्कररायकृत भाष्ययुतम्, चतुर्थ संस्करणम्, मुम्बईतः प्रकाशितम् १८५७ शकाब्दे ।

१८२. शिवस्तोत्रावली, उत्पलदेवाचार्यरचिता, चौ० सं० पुस्तकालय वाराणसीतः प्रकाशिता १९६४ तमेऽब्दे ।

१८३. शिवमहिम्नस्तोत्रम्, मधुसूदनीटीकायुतम्, वाराणसीतः प्रकाशितम्, बृहत्स्तोत्ररत्नाकरादिषु च धृतम् ।

१८४. शिवसहस्रनाम, गीता प्रेस गोरक्षपुरतो मुद्रितम्, तृतीय संस्करणम्, २०१८ ।

१८५. शंकर ग्रन्थावलिः, आचार्य शंकर स्तोत्राणाम्-संग्रहात्मिकेयम्, द्वितीय संस्करणम् । सम्पुट ११ । श्रीरामकृष्ण मिशन पुस्तकालये ।

१८६. श्रीस्तवकल्पद्रुमः, श्री गोस्वामिमहाराजपुरुषोत्तमसम्पादितः । वृन्दावन मथुरातः प्रकाशितः १८८१ शकाब्दे ।

१८७. श्री राधिकासहस्रनाम स्तोत्रम्, गीता प्रेस गोरक्षपुरतः २०१५ वर्षे ।

१८८. श्री रामसहस्रनाम स्तोत्रम्, गीता प्रेस गोरक्षपुरतः २०२० तृतीय संस्करणम् ।

१८९. श्री लक्ष्मीनृसिंहस्तोत्रम्, गीता गोरक्षपुरतः, प्रथम संस्करणम्, २०१५ ।

१९०. श्री लक्ष्मी सहस्रनाम स्तोत्रम्, गीता प्रेस गोरक्षपुरतः, २०१६ ।

१९१. श्री विष्णुसहस्रनाम स्तोत्रम्, श्री तारक ब्रह्मानन्द सरस्वतीय विवृत्या साकम्, श्री शंकर भाष्योपेतम्, मैसूर विश्वविद्यालय मैसूरतः प्रकाशितम्, १९६१ ।

१९२. श्री विष्णुसहस्रनाम, शंकरभाष्यो पेतम्, गीता प्रेस गोरक्षपुरतः प्रकाशितम्, २०१९ ।

१९३. श्री सीतासहस्रनामस्तोत्रम्, गीताप्रेस गोरक्षपुरतः प्रकाशितम्, द्वितीय-संस्करणम्, २०१५ ।

१९४. श्री सूर्यसहस्रनामस्तोत्रम्, गीताप्रेस गोरक्षपुरतः प्रकाशितम्, द्वितीय-संस्करणम्, २०१७ ।

१९५. सौभाग्यपंचकस्तोत्रम्, श्रीमन्नालालाभिमन्यु सम्पादितम्, मास्टर खेलाड़ीलाल एण्ड सन्स, वाराणसीतः प्रकाशितम् ।

१९६. सौन्दर्यलहरीस्तोत्रम्, आ० शंकर कृतम्, श्री भास्करराय भाष्योपेतम्,

श्री न० न० स्वामिघनपाठिसम्पादितम्, तृतीय संस्करणम्, १९५३, हिन्दुस्तान प्रेस मैसूरतः ।

१९७. स्तवमणिमाला, श्रीरामभद्र दीक्षित सम्पादिता, संशोधकः श्री सुब्रह्मराय-शास्त्री, १९३२ ।

१९८. स्तवकुसुमांजलिः, [कन्नड़लिप्याम्, श्री रामकृष्णशर्मसम्पादितम्, १९५५ ।

१९९. स्तुतिकुसुमांजलिः, श्री जगद्धरभट्टरचितः, श्री प्रेमवल्लभत्रिपाठि टीकोपेतः, अच्युतग्रन्थमाला कार्यालयतः प्रकाशित, २०२१ ।

२००. स्तोत्ररत्नावली, गीता प्रेस गोरक्षपुरतो मुद्रिता, सप्तदशतमे संस्करणम्, २०१९ ।

२०१. स्तोत्रार्णवः, श्री टी० चन्द्रशेखरन् सम्पादितः, मद्रास राज्याज्ञया प्रकाशितम्, १९६१ ।

२०२. हनुमत्सहस्रनामस्तोत्रम्, गीताप्रेस गोरक्षपुरतो मुद्रितम्, तृतीय संस्करणम्, २०१८ ।

२०३. हनुमंतशत्रुंजयस्तोत्रम्, श्री लक्ष्मीदत्त शास्त्रि सम्पादितम्, आगरातः, २००५ ।

२०४. हनुमद्वडवानलस्तोत्रम्, श्री लक्ष्मीदत्त शास्त्रि सम्पादितम्, आगरातः, २००५ ।

२०५. कारिकावली, श्री विश्वनाथ पंचानन रचिता, दिनकरीराम रुद्रीसंवलिता ३य संस्करणम्, मुम्बईतो मुद्रिता (१९३३) ।

२०६. न्यायदर्शनम्, वाराणसी ।

२०७. पांतजल योग सूत्रम्, गीता प्रेस गोरक्षपुरतः प्रकाशितम् ।

२०८, भारतीय दर्शन सारः, श्रीबलदेवोपाध्याय कृतः, सस्ता साहित्य मण्डल प्रकाशनतः प्रकाशितः (१९६२) ।

२०९. भारतीय दर्शन का परिचयः, डा० रामानन्द त्रिपाठि कृतः, भारतीय मन्दिर प्रयागतो मुद्रितः ।

२१०. मीमांसा सूत्रम् ।

२११. योगवासिष्ठः (योगवासिष्ठांक), गीता प्रेस गोरखपुर २०१७ ।

२१२. योगशास्त्र ब्रह्मसंहिता, वसुमती प्रेस, कलकत्तातोमुद्रिता (बंग लिप्याम्) ।

२१३. वेदान्तदर्शनम् (ब्रह्मसूत्रम्), हरिकृष्णगोयन्दका व्याख्योपेतम्, गीताप्रेस गोरक्षपुरतः प्रकाशितम्, तृतीयं संस्करणम्, २०१४ ।

२१४. सर्वदर्शन संग्रह, श्री माधवाचार्य कृतः, प्रो० उमाशंकर कृत भाष्यसहितः १९६२ ।

२१५. हठयोग प्रदीपिका, शक्त्यंके निर्दिष्टा ।

## ८. विविध विषयकः ग्रन्थाः

२१६. अष्टोत्तरशतनाममालिका, श्री विद्यासागरमिश्र कृता, रायगंज अजमेरतः प्रकाशित, २०२० ।

२१७. ए डिस्क्रिप्टिव कैटलाग आफ दि संस्कृत एण्ड प्राकृत मैन्स्क्रिप्ट, बम्बई विश्वविद्यालय, भाग २, सं० १९४४ ।

२१८. एलिमेण्ट्स आफ हिन्दू इग्राफी (शं० मायावादे) ।

२१९. क्यों, भाग (१), श्री पं० माधवाचार्य शास्त्रिकृतम्, माधव पुस्तकालय धर्मधाम कमलानगर, दिल्ली, प्रथम संस्णरणम् (२००९) ।

२२०. क्यों (२य भागः), श्री पं० माधवाचार्य कृतः, माधव पुस्तकालय धर्म धाम कमलानगर दिल्ली (२०१४) ।

२२१. गणेशः—डा० सम्पूर्णानन्द ।

२२२. गणपति तत्वम्—श्रीमती डा० सुदर्शनादेवी, अन्तराष्ट्रिय सांस्कृतिक एकेडमी नई दिल्ली, १९५८ ।

२२३. गणपतिः, हरिदासमित्रकृतः १९६० ।

२२४. चरकसूत्रम्, १९४८, मोतीलाल बनारसीदास, वाराणसी ।

२२५. तान्त्रिकवाङ्मय में शक्ति दृष्टि. म० महो० गोपीनाथ कविराजकृत, बिहार राष्ट्रभाषा परिषद्, पटना, १९६३ ।

२२६. दुर्गोपासनाकल्पद्रुमः, श्री पं० हरिकृष्ण शर्म कृतः ।

२२७. नम्बर आफ रसाज, डा० राघवन ।

२२८. पुराणविमर्शः आचार्य बलदेवोपाध्याय कृतः चौ० सं० पु० वाराणसी, १९६५ ।

२२९. भगवत्तत्वम्, श्री स्वामिहरिहरानन्द करपात्र सरस्वतीकृतम्, काशीतो मुद्रितम्, प्रथम सं० १९९७ ।

२३०. भागवत-सम्प्रदाय, श्रीबलदेवोपाध्याय कृतः, चौ० सं० पु० काशी ।

२३१. भारतवर्ष का वृहद् इतिहास, श्रीभगवद्दत्त रिसर्च स्कालर इतिहास प्रकाशन मण्डल, दक्षिण पटेलनगर नई दिल्ली, १९५१ ई० ।

२३२. भारतीय साहित्य शास्त्रम्, आ० बलदेवोपाध्यायः, चौ० सं० पु० वाराणसी, १९६३ ।

२३३. भारतीय-प्रतीक विद्या, डा० जनार्दन झा, बिहार राष्ट्रभाषा परिषद्, पटना, २०१५ ।

२३४. माधवनिदानम्, चौ० सं० पु० वाराणसी ।

२३५. वेदाः, सुशील गुप्तप्रकाशित कलकत्ता १२ ।

२३६. वैदिक कोशः, अनुसन्धान विभाग, डी० ए० वी० कालेज, लाहौर, १९८२।
२३७. वैदिक देवता, अनु० डा० सूर्यकान्त, प्रथम सं० युगान्तर प्रेस, डफरिन, नई दिल्ली, १९६१।
२३८. वैदिक ज्ञान और भारतीय संस्कृति, श्री गिरिधर शर्मा, बिहार राष्ट्र भाषा परिषद्, पटना, १९६०।
२३९. वैदिक-साहित्य और संस्कृति, श्री बलदेवोपाध्याय, शारदा मन्दिर, काशी, १९६४।
२४०. शंकर का मायावाद, डा० राममूर्ति, मेरठ, १९६४।
२४१. शैवमत, डा० यदुवंशी, बि० रा० भा० प० पटना, २०१२।
२४२. श्रीगणेशाः, नागरी प्रचारिणी सभा काशी।
२४३. सत्यार्थ प्रकाशः, श्री स्वामिदयानन्द कृतः प्र० सं० १८७५।
२४४. सनातनधर्मालोक, दीनानाथ शास्त्री फर्स्ट बी० १९ लाजपतनगर, नई दिल्ली, २०१३।
२४५. समन्वयः—डा० भगवानदास, भा० भण्डार काशी, १९८५।
२४६. साउथ इण्डिया फैलाग्राफी, शां० मायावादतः।
२४७. सुकवि समीक्षा, श्री बलदेव उपाध्याय, चौ० सं० पु० वाराणसी, १९६३।
२४७. संस्कृत साहित्य का इतिहास, श्री बलदेव उपाध्याय, शारदा मन्दिर, काशी, १९४८।
२४९. संस्कृत साहित्य का इतिहास, श्री बलदेव उपाध्याय, शारदा मन्दिर, काशी, १९५६।
२५०. संस्कृत साहित्य का इतिहास, वाचस्पति गौरिल्ला, चौ० सं० पु०, वाराणसी।
२५१. स्वाध्यायः, प्रथमोभागः, विरजानन्द वैदिक संस्थानम्, ज्वालापुरम्, सम्राट प्रेस, पहाड़ीधीरज।
२५२. हिन्दुत्व, श्री रामदास गौड़, ज्ञानमण्डल मन्त्रालय, वाराणसी, २००० प्र० सं०।
२५३. हिस्ट्री आफ शैविज्स इन साउथ इण्डिया, नारायण।

## ९. पत्रपत्रिकादीनि

२५४. उपनिषदंक—गीता प्रेस गोरखपुर, २००५।
२५५. कल्याण, गीता प्रेस, गोरखपुर वर्ष १६, अंक ४, ८।
२५६. शक्त्यंक, गीता प्रेस गोरखपुर, १९९१।

२५७. शिवपुराणांक, गीता प्रेस गोरखपुर, २०१८।
२५८. सन्तांक, गीता प्रेठ गोरखपुर, २०११।
२५९. हिन्दू संस्कृति अंक, गीता प्रेस गोरखपुर, २००६।
२६०. योगवसिष्ठांकम्, गीता प्रेस गोरखपुर, २०१७।
२६१. धर्मांकम्, गीता प्रेस, गोरखपुर, २०२२।



# पादटिप्पणीषु समागतग्रन्थपृष्ट संख्या

□

संस्कृतभाश्रित्यमुद्रणीयेगन्थेऽशुद्धयोनासम्भाव्या: वकारबकारयो: र्भेदो नास्ति, इत्युक्तेरजानताऽजानताऽसमर्थयताऽपिचप्रयोगोजात: यथा वृहद्देवता। वृहद्देवता, बृहत्स्तोत्ररत्नाकर:। वृहत्स्तोत्ररत्नाकर: एवमेव तैत्तिरियं। तैत्तरियम्।

| पृष्टम् | पंक्ति: | मुद्रितम् | शुद्धम् |
|---|---|---|---|
| १ | ६ | वृहद्देवता | बृहद्देवता, |
| ,, | १८ | अपुष्यांम् | अपुष्पाम् |
| २ | १ | वैदितर्व्यं | वेदितव्यम् |
| ,, | १५ | हबि: | हवि: |
| ३ | २१ | भाग्नेयं | माग्नेयम् |
| ५ | ८ | भक्तयया | भक्त्या, |
| ६ | १७ | घाम | धाम |
| ७ | २ | त्यभरकार: | त्यमरकार: |
| ,, | उपान्त्यम् | भवायु: | मवायु: |
| ९ | ८ | मृततश्च | मृतवश्चा |
| १० | १७ | भत्सत्यं | यत्स्त्यं |
| १३ | ३ | द्योशचन्द्रमा: | द्यौश्चन्द्रमा: |
| १४ | १३ | एतश्च | एताश्च, |
| ,, | २० | स्वस्त्यमन | स्वस्त्ययन |
| १७ | ११ | इत्यपि | इत्यपि |
| १८ | १८ | रक्षीष्ण | रुक्षोष्ण |
| १९ | ३ | राघनं | राधनं |
| २० | १२ | वेवचनं | विवेचनम् |
| २२ | २४ | मढधी | मूढधी: |
| २४ | २० | भयोरवि: | मयोरबि: |
| २६ | ६ | दघाम्यहम् | दधाम्यहम् |

| पृष्टम् | पंक्तिः | मुद्रितम् | शुद्धम् |
|---|---|---|---|
| ३२ | १२ | वज्र | वज्र |
| ,, | १३ | वन्दे | बन्दे |
| ,, | उपान्यम् | वीज | वीज |
| ३५ | २० | रक्तयः | रक्तः |
| ३९ | १ | त्व | त्वम् |
| ४० | १५ | वक्ष्यमाणनां | वक्ष्यमाणानां |
| ४२ | १३ | द्यास्य।र्यः | द्यास्यार्थः |
| ४३ | अन्तिम | पष्ठ | सप्तम |
| ४५ | १० | याति | यान्ति |
| ४७ | अन्तिम | प्रस्धान | प्रस्थान |
| ,, | | पर्यन्तं मस्ति | पर्यन्तमस्ति |
| ५८ | २२ | लभ्पते | लभ्यन्ते |
| ६५ | ३ | भाष्यै | भाष्ये |
| ७१ | १८ | भिश् | भिश |
| ,, | २० | ष्टस्तोत्रं | ष्टकस्तोत्रम् |
| ७४ | १६ | श्धात्र | श्चात्र |
| ७५ | २३ | बिविधँ | विविधँ |
| ७९ | २४ | मेतन्नर | मेतत्पठेन्नरः |
| ८३ | ११ | घान्य | धान्य |
| ९५ | १४ | भजीजनत् | मजीजनत् |
| ९६ | १३ | मेदेन | भेदेन |
| ९८ | ११ | तँत्तरीये | तैत्तिरीये |
| ९९ | १३ | सवस्त्रियः | सर्वास्त्रियः |
| १०५ | ११ | महात्म्यम् | माहात्म्यम् |
| ११२ | १९ | वीर्यं | वीर्यं |
| ११५ | ४ | दघती | दधती |
| १३२ | ७ | कानिचिद् | कतिचिद |
| १५७ | २ | तद्द्रस्य | तद्रुद्रस्य |
| १६५ | १२ | मुक्तिवांश्च | मुक्तिवांश्च |
| १७२ | २४ | निगंषं | निषंगं |
| १७७ | १ | अपरं | नापरं |
| १८१ | २० | हान्धकरे | महान्धकारे |

| पृष्टम् | पंक्तिः | मुद्रितम् | शुद्धम् |
|---|---|---|---|
| १८५ | ४ | वर्णे | वर्णे |
| ,, | अन्तायां | बिध | विध |
| १८६ | ११ | स्यवं | स्तवं |
| १८७ | २२ | शृणुन्त | शृणुत |
| १९३ | ११ | मेत्पठित्वो | मेतत्पठित्वो |
| २१२ | २४ | सम्रं | समं |
| २१६ | १८ | तँत्तरीये | तैत्तिरिये |
| २२० | २२ | मक्सु | भवतु |
| २२४ | ६ | भित्येवं | मित्येवम् |
| २२७ | १४ | तँत्तरीये | तैत्तिरीये |
| २३४ | २५ | ज्ञानाहंकोरेश्वयं | ज्ञानाहंकारकैश्वर्य |
| २३७ | ११ | मणं | भ्रमणं |
| २५० | २ | धमिदं | धृतमिदं |
|  | १२ | विष्ण | विष्णु |
| २५७ | ५ | नाम | नाम |
| ,, | १८ | पुष्पि | पुष्पिका |
| २६७ | १८ | म् | म |
| २७३ | २ | लोकदंम् | लोकदम् |
| २७५ | १० | तँत्तरीये | तैत्तिरीये |
| २७७ | १६ | सृष्टयार्थ | सृष्ट्यर्थम् |
| २७९ | १२ | क्तिनि | र्क्तिनि |
| २८० | ७ | द्वा | यद्वा |
| २८१ | १८ | एननं | एवैनं |
| २८३ | ६ | मातण्ड | मार्तण्ड |
| २८५ | ९ | सवैः | सर्वैः |
| २८६ | ७ | सवै | सर्वैरिष्टम् |
| २८७ | ६ | नारा | नाराया |
| २८९ | अन्ताया | बहन्ति | वहन्ति |
| २९० | उपान्तायो | वा | वाम |
| २९५ | २५ | मि | स्थे |
| २९७ | १ | कृतृ | कर्तृ |
| २९८ | १० | पदिः | पतिः |

| पृष्टम् | पंक्तिः | मुद्रितम् | शुद्धम् |
|---|---|---|---|
| ३०३ | १६ | मुर्द | चतुर्द |
| ३०४ | २६ | म्यन्ति | शाम्यन्ति |
| ३१० | ८ | स्कन्धो | स्कन्धौ |
| ३१३ | २ | नित्यवान् | निपमवान् |
| " | ९ | राज | राजः |
| ३१८ | १६ | नाशकम् | नाशिका |
| ३२१ | १ | ऽयायः | ऽध्यायः |
| ३२४ | १९ | ध्रिय | ध्रिय |
| ३२८ | ९ | माब | भाव |
| ३३५ | १७ | रघिता | रधिता |
| ३३९ | २ | मेव | गेव |
| ३४७ | १६ | तैत्तरीया | तैत्तिरीया |
| ३५२ | ११ | दशन | दर्शन |
| " | ५ | यमर्कः | यमकम् |
| " | १४ | चेतन्यो | चैतन्यो |
| ३५४ | ८ | तैत्तरीय | तैत्तिरीया |
| ३५५ | १३ | काणि | कारिण |
| ३६३ | १२ | णव | णवे |
| ३६८ | १२ | विस्वशो | विस्तरशो |

# संस्कृतेपंचदेवतास्तोत्राणि

संस्कृतवाङ्मये सन्ति साहित्यस्य विविधा विधाः यासां यासां स्वकीयं किमपि विलक्षणं वैशिष्ट्यमनुभूयतेऽध्येतृभिः । वस्तुतः साहित्यं जीवनमेवाश्रयते । जीवनं यथा बहुविधं बहुप्रयोजनं चास्ति तथैव साहित्यमपि । निखलस्यापि श्रेण्यसंस्कृतवाङ्मयस्य सारभूतं तत्वमध्यात्मं नाम । समेषामेव शास्त्राणां पुराणानां श्रुतिस्मृतीतिहासादिग्रंथानां च तत्रैवाध्यात्मबोधे परमं तात्पर्यम् । तदर्थमेव प्रवृत्तिनित्वृयुभयलक्षणो वैदिको धर्मः प्रवर्तते । आत्मावबोधश्चान्तः-करणस्य सात्त्विक्यामेव दशायां सम्भवतीति विश्वासः समेषामेव तत्त्वदृशा कर्मण्यस्मिन्नुपादेयतामर्हतः उपासना योगश्च । उभावप्यत्र साधनत्वेन गृह्येते । तत्रापि सर्वजनसुलभत्वाद्योगादुपासनैव गरीयसी । उपासनाविषयकमपि प्रचुरं साहित्यमुपलभ्यते प्राचीनवाङ्मये । तत्र स्तोत्राणां महत्त्वं विषयदृष्ट्या सामग्री–दृष्ट्या च सर्वथा महदेवेति नात्र कश्चिद्विसंवादः ।

स्तोत्रविषयकं साहित्यमधिकृत्य न केनाप्यद्यापि शोधकार्यम् कृतं प्रस्तुतं वा । महामहोपाध्यायपाण्डूरङ्गवामन-प्रभृतिभिराधुनिकविद्वद्भिर्धर्मशास्त्र-स्येतिहासादिग्रंथेषु स्तोत्रसाहित्यमधिकृत्य शोधकार्याणि सर्वथैवापेक्षितानि इति भूयो भूयः प्रतिपादितम् । तद्वचोभिः प्रेरितैः श्री सुरेन्द्रनारायणत्रिपाठिभिरभावममुं पूरयितुं कृतः संकल्पः । किन्तु प्रायेण पञ्चसहस्रेभ्योऽप्यधिकानि स्तोत्राणि अधिकृत्यैकस्मिन्नेव प्रबन्धे न सर्वथा सम्भाविमासीत् प्रस्तोतुं शोधकार्यम् । अतएव त्रिपाठिमहोदयैः निर्धारितास्यसीमा पञ्चदेवतास्तोत्राणीति । देवतासु प्रमुखान् गणेशाम्बिका-शिवविष्णुसूर्यान् इति पञ्चदेवान्-अधिकृत्य तंत्रागमपुराणेषु, उपलभ्यमानानां प्रकाशिताप्रकाशितानां समेषामेव स्तोत्राणाम् सम्यग्रूपेण गवेषणां विधाय यथापेक्षितं सर्वविधसम्पन्नः प्रस्तुतोऽयं प्रबन्धः सम्प्रति प्रकाशितः सन् सकलविद्वन्मनस्तोषं विदधातीति हर्षस्यायं विषयः । विद्वद्गोष्ठीषु ग्रंथस्यास्य समुचितसमादरो भविष्यतीति आशास्ते ।

—व्रजमोहनः चतुर्वेदी
प्रवाचकः
(सं० विभागे) दिल्ली विश्वविद्यालये